# प्रणव-पारिजातस्य वर्षसूची

१८९२ शकाब्दः त्रयोदशवर्षम् : श्रावणमासः १३७८

श्रीमत्सीतारामदासोङ्कारनाथ-प्रवर्त्तितः

( संस्कृत-मासिकपत्रम् )

सञ्चालकः

महामहोपाध्याय डाः-श्रीकालीपदतर्काचार्य्यः डि, लिट

सम्पूजकः

डाः श्रीश्रीजीवन्यायतीर्थः एम्, ए, डि, लिट्

सह-सम्पूजकाः—

श्रीश्यामाशङ्करविद्याभूषणः

श्रीरघुनाथकाव्य-व्याकरणतीर्थः

अध्यापकः श्रीदुर्गादासगोस्वामी एम्-ए

श्रीदिलीपकुमारमुखोपाध्यायः काव्यतीर्थ एम्-ए च ।

—:o:—

# प्रणव-पारिजातः

( संस्कृत-मासिकपत्रम् )

त्रयोदशवर्षम्, प्रथमसंख्या ] भाद्रमासः १८६२ शकाब्दः

## जन्माष्टमी–स्तुतिगीतिः

( निबन्धकः श्रीश्रीजीवन्यायतीर्थः )

त्रिभुवनभवनधुरन्धर ! वृषकन्धर !
जितमन्दरगिरिसार ! जय मधुसूदन हे ॥१

तड़िदम्बुदरुचिमन्दिर चिरसुन्दर !
रुचिरचन्द्रसमकम्र ! जय यदुनन्दन हे ॥२

उदयदरुणकरभास्वर ! परमेश्वर
रहितनश्वरविलास ! जय हृदयप्रिय हे ॥३

प्रसरदमृतरसनिर्झर ! वरनिर्जर !
निखिलनिर्भरदयार्द्र ! जय सुख-चिन्मय हे ॥४

दनुजमनुजसुरपालक रथचालक
चम्पकसमकरशाख ! जय यमकम्पक हे ॥५

नन्दभवननवनन्दन धृतचन्दन
लसदलिकतिलकचिह्न ! जय जनरञ्जक हे ॥६

अमलकमलशतसौरभतनुगौरव !
पौरवकृतगुणगान ! जय जगदाश्रय हे ॥७

चरणशरणजनवल्लभ ! करपल्लव-
निहितशङ्खजलजाङ्क ! जय जनिताभय हे ॥८

करतलकलितसुदर्शन ! शुभदर्शन !
सशरशार्ङ्गकृतमर्ष ! जय खुरलीपर * हे ! ॥९
व्रजजनतानयनाञ्जन ! मुरभञ्जन !
विधृतनिरञ्जनरूप ! जय मुरलीधर हे ॥१०

* खुरली = शराभ्यासः

—०—

## श्रीमद्भगवद्गीतायां भक्ति-कर्म्मवादौ

( निबन्धकः—अध्यापकः श्रीरवीन्द्रकुमार सिद्धान्तशास्त्री )

समतीते १३५२ वङ्गाब्दे बभूव काचन प्रबन्धप्रतियोगिता कलिकाता पण्डितसभया परिचालिता। तत्र च 'भक्तिकर्म्मवादौ' इति विषयमधिकृत्य विरचितेषु प्रबन्धेषु एष एव प्रबन्धः प्रथमं स्थानं लेभे। तेन च निबन्धकाय महेशचन्द्र-न्यायरत्न-स्मृति-स्वर्णपदकं पारितोषिकरूपेण प्रदत्तम्। ]

सततमतुलसत्त्वं शुद्धसत्त्वेन युक्तं
विमतिहृतमतीनां चित्तसंशुद्धिहेतुम्।
निखिलकलुषराशेर्नाशकं धर्म्मसेतुं
नमति नतिपरोऽयं माधवं सर्व्वसेव्यम् ॥१॥

प्राप्ता येयं परमपदवीं सर्व्वलोकेषु पूज्या
पार्थायाद्धा प्रकटितवती दुर्लभं ज्ञानराशिम्।
मुग्धान् मर्त्यानतिकरुणया दर्शयित्वा सुसत्यं
नित्यं लोके विलसतुतरां पावनी सात्र गीता ॥२॥

जयतु नितरां कर्म्म धर्म्मवज्जीवसंहतेः।
भक्तिर्मोक्षस्य दात्री च जयतु जयतु क्षितौ ॥३॥

प्रणम्य सारदां वाणीं वीणावादनतत्पराम् ।
विरच्यते प्रबन्धोऽयं रवीन्द्रेण द्विजन्मना ॥४॥

विशालेऽस्मिन् ब्रह्माण्डे यत्रैव दृष्टिर्निपतति, तत्रैव किमपि पदार्थ-जातमवलोक्यते मनुष्यपुङ्गवैः। तत्र च दृष्टिग्राह्याः सर्व्वे एव पदार्था उत्पत्तिविनाशशीला इति कार्य्या एव। यत् कस्माचित् कर्म्मणो जायते, तदेव कार्य्यमिति कथ्यते। महतः परमाणुं यावत् सर्व्वाण्येव द्रव्याणि कर्म्मोद्भवानीति मनीषिभिरुद्घोषितम्। अत्रोक्तं श्रीमद्भागवते—

"दैवात् क्षुभितधर्म्मिण्यां स्वस्यां योनौ परः पुमान्।
आधत्त वीर्य्यं सासूत महत्तत्त्वं हिरण्मयम् ॥" ( ३-२६-१९ )

एक एव भगवान् ब्रह्मपदार्थो नित्यः, अन्यत् सर्व्वमेवानित्यम्। काला-दीनां नित्यता त्वापेक्षिकी एव। यदानित्यं तदेवोत्पत्तिविनाशशीलम्। यस्योत्पत्तिरस्ति तस्योत्पादयितापि कश्चिद् विद्यते। तेनैव महत्तत्त्वा-दीनामप्युत्पादयितुर्विद्यमानतया तेषामपि कार्य्यत्वमङ्गीकृतम्। प्रमाण-श्रेष्ठेषु वेदेषु मन्वादिषु धर्म्मशास्त्रेषु च सर्व्वत्रैव सत्यमेतदुद्घोषितम्। दृश्यते च स्वीकृतिः सत्यस्यास्य यीशुमहम्मदादीनां धर्म्मग्रन्थेष्वपि, भगवतः उक्तिमात्रेणैवालोकादीनि द्रव्याण्यजायन्तेति निगदनात्। भगवत इच्छामात्रेण वाक्यमात्रेण वा कर्म्मणैव ते पदार्थाः सञ्जाता इति धर्म्मशास्त्रकाराणामभिप्रायः।

दृश्यते हि लोकेऽस्मिन् स्त्रीपुंसयोः सम्भोगकर्म्मणा जरायुजानां सर्व्वेषामेव प्राणिनामुत्पत्तिः। अण्डजादीनां जननेऽपि समान एव हेतुः। स्वेदजानामुद्भिज्जानाञ्च प्राणिनामुत्पत्तौ प्रकृत्याः विकृतिरूपं कार्य्यमेव हेतुत्वेन स्वीकृतम्। एवमुत्पत्तिमापन्ना जन्तवो जन्मतः प्रभृति सततमेव कर्म्म कुर्व्वन्ति। शिशुर्भमिष्ठ एव रोदिति चेष्टते च। अस्ति, गच्छति, दीव्यति, तिष्ठति, भवति, म्रियते इत्यादीनि सर्व्वाण्येव क्रिया-पदानि। सर्व्व एव शब्दाः धातुमूलाः। तथाचोक्तं धातुमूलं जगत् सर्व्वम् इति। 'क्रियाधातो धातु'रिति कातन्त्रसूत्रम्। तेन च ज्ञायते धातुरस्ति, तत्रैव क्रियापि विद्यते एव। 'यत् क्रियते तत् कर्म्म' इति च

दृश्यते कातन्त्रसूत्रम्। कृधातोश्च मन् प्रत्यये सिद्धं कर्म्मेति पदम्। अतो विद्यते यत्र क्रिया, तत्रैवाङ्गीकर्त्तव्यं कर्म्मणोऽस्तित्वम्। कोऽपि कदापि किमपि कर्म्माकृत्वा स्थातुं न शक्नोति। अतएव श्रीभगवद्गीतायामुक्तम्—

"न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्म्मकृत्।" इति

कर्म्ममाहात्म्य-प्रकाशनाय महाभारतीये शान्तिपर्व्वण्यपि निगदितम्—

"कर्म्मणा बध्यते रूपं कर्म्मणा चोपलभ्यते।
कर्म्मणा नीयतेऽन्यत्र स्वकृतेन बलीयसा॥" इति।

तत्र भवद्भिर्दार्शनिकप्रवरैरेवमपरिहार्य्यस्य कर्म्मणोऽस्य पञ्चविधत्वमुद्घोषितम्। अत्रोक्तं भाषापरिच्छेदे—

"उत्क्षेपणं ततोऽवक्षेपणमाकुञ्चनन्तथा।
प्रसारणञ्च गमनं कर्म्माण्येतानि पञ्च च॥" इति।

सृजन-पालन-विनाशनादीनि सर्व्वाण्येव कर्म्माणि। तेनैव पृथिव्यादीनां सृष्टपदार्थतामनुभूय तत्कर्त्तुर्भगवतोऽस्तित्वं प्रमाणीक्रियते। एवंस्वरूपमिदं कर्म्म। तच्च साध्वसाधुभेदेन द्वैविध्यं भजते। येन कर्म्मणा जगतः प्राणिनां वा कुशलं जायते, तदेव साधु कर्म्म, तद्विपरीतञ्चासाधु। एते एव पुण्यपापत्वेन निर्द्दिष्टे। एतेन सामान्यतः कर्म्मस्वरूपं निर्णीतम्। एवं कर्म्मस्वरूपादीनां भाषणमेव कर्म्मवादः। वदेर्भावे घञ्।

तथा का नामेयं भक्तिः? भज्धातोर्भन्ज्धातोर्व्वा क्तिप्रत्यये पदमिदं सिद्धम्। भज्धातुश्च 'भज सेवाया'मिति भ्वादौ 'भजविश्राणने' इति चुरादौ च पठितः। भन्ज्धातुस्तु केवलं रुधादावेव पठ्यते। तत्र 'भन्जो आमर्दने' इति गणभाषा। अथात्रैतेषु कस्य ग्रहणमिति विचार्य्यम्।

"यथाग्निः सुसमिद्धार्च्चिः करोत्येधांसि भस्मसात्।
तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः॥"

( भाः ११।१४।१९ )

इत्यत्र भक्तिशब्देन "भन्जो आमर्दने' इति रुधादिगणीयस्य कार्य्यं क्रियते इति निगदितम्। वस्तुतस्तु 'मद्विषया भक्ति'रित्यनेन तादृशोऽर्थो

न सर्व्वथा सङ्गच्छते। भगवत्प्रीत्यर्थं विषयरागादीनां सुखादीनां वा आमर्दनस्य सम्भवेऽपि न हि भगवतः आमर्दनं सम्भवति। तथा सम्भवेऽपि भवेत्तादृशकर्म्मणः पापनाशनयोग्यता, प्रत्युतः स्यात्तस्य पापाधिक्यजनकतैव, आमर्दनेन तस्य क्लेशोत्पत्तिसम्भवात्। तेन मन्ये, नायं भक्तिशब्द आमर्दनमात्रार्थे ग्रथित इति।

"न साधयति मां योगो न साङ्ख्यं धर्म्म उद्धव !
न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्म्ममोर्ज्जिता ॥"

( भाः ११।१४।२० )

अत्र भक्तिशब्दः सेवार्थे प्रयुक्तः। एतेन सर्व्वपापनाशिनी भगवतः सेवैव भक्तिशब्देन बुध्यते इत्यायातम्।

"पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः॥"

इति श्रीमद्भगवद्गीतोक्तश्लोके विश्राणनार्थे प्रयुक्तो भज्धातुरिति मन्ये।

"वासुदेवे भगवति भक्तियोगः प्रयोजितः।
जनयन्त्याशु वैराग्यं ज्ञानं यद् ब्रह्मदर्शनम्॥

( भाः ३।३२।२३ )

इति श्रीमद्भागवतोक्तश्लोके चित्तैकाग्र्यार्थे प्रयुक्तोऽयं भक्तिशब्दः। वस्तुतस्तु भक्तिशब्दस्य लोकप्रसिद्धोऽर्थश्चित्तैकाग्र्यमेव। विद्यन्ते चास्यार्थान्तराण्यपि। ननु तर्हि प्रक्रान्तविषये भक्तिशब्दस्यार्थः कीदृश इति चेद् वदामि—

"भञ्जनं विषयासक्तेश्चित्तैकाग्र्यं तथा दृढम्।
विद्यते यत्र सेवायां सैव भक्तिर्निगद्यते॥" इति।

सा च भक्तिः उत्तममध्यमभेदेन पुनर्भञ्जनमापद्यते। एतावता प्रदर्शितं भक्तेः स्वरूपम्। तस्या एव कथनं भक्तिवादः।

युगावतारेण भगवता श्रीकृष्णेन दानवीयशक्तिदृप्तानां क्षत्रियाणां विनाशाय प्रवृत्तमपि सहसाविर्भूतया करुणया पराङ्मुखतां गतं विश्वविजयिनं विजयं पुनः कर्म्मणि प्रवर्त्तयितुकामेन सर्व्वासामुपनिषदां सारं

सङ्कलय्य विश्वेषां हितकारिणीयं श्रीमद्भगवद्गीतोपनिषन्निगदिता अत्रोक्तम्—

"सर्व्वोपनिषदो गावो दोग्धा गोपालनन्दनः।
पार्थो वत्स सुधीर्भोक्ता दुग्धं गीतामृतं महत्॥" इति।

वर्णाश्रमधर्म्मस्य रक्षकः धर्म्मराज्यस्य संस्थापकः स भगवान् केनाभिप्रायेण कीदृशस्य कर्म्मणः कीदृश्या वा भक्तेर्विधानं श्रीमद्भगवद्गीतायां कृतवानित्येवास्माकमालोच्यविषयः।

कुरुकुलाङ्गारेण दुर्य्योधनेन भृशं निपीड़िताः स्वराज्याच्छलेन प्रच्याविताः पाण्डवा यदा स्वकीयां प्रतिज्ञां सम्यक् पालयित्वा यथाकालं धर्म्मानुमोदितं स्वकीयं न्याय्यं राज्यं दुर्य्योधनाद् ग्रहीतुमिषुस्तदा कपटचारः स्वार्थसर्व्वस्वो लज्जाहीनोऽसौ दुर्य्योधनो नैव तेषां न्यासीभूतन्तद्राज्यं प्रत्यर्पयितुमैच्छत्। पाण्डवाः प्रवीणैः राजन्यवर्गैर्विशेषतो युगावतारेण भगवता श्रीकृष्णेण सह सम्मन्त्र्य कर्त्तव्यं स्थिरीचक्रुः। सततमशेषधर्म्मपरायणो दयासागरो युधिष्ठिरः स्वयं महावीरोऽपि केवलं भावि लोकक्षयमाशङ्क्य सर्व्वथा न्यायसङ्गतमपि राज्यं विहाय प्रव्रज्यामाश्रयितुमियेष। धर्म्मपरायणैरन्यैरपि राजन्यैः 'क्षत्रियस्य—विजेतव्यम्" इति शास्त्रमनुसृत्य तादृशे सङ्कटकाले युद्धमेव नाय्यतया निर्णीतम्। पाण्डवशार्द्दूलस्य भीमसेनस्यापि तदेवासीदभिमतम्। तदानीं मूर्त्तिमद् वीरत्वप्रतिमोऽयं धनञ्जयोऽपि दुर्वृत्तेभ्यः स्वकीयं दायाद्यमादातुं युद्धमेव कर्त्तव्यतया निर्णीतवान्। स एव भगवन्तं श्रीकृष्णं सहायकत्वेन संप्रार्थ्यसारथ्ये नियोजयामास।

साम्प्रतन्तु रणाय प्रवृत्तैरुभयपक्षीयैः सैनिकैः परिव्याप्तं कुरुक्षेत्रमासाद्य तत्र च प्रतिपक्षेऽपि स्वजनान् समालोक्य दयार्द्रहृदयेन त्रिलोकपरिपूरितयशसा महावीरेण तेनैवार्ज्जुनेन 'न योत्स्ये' इति निगद्य वैराग्यमवलम्बितम्। उत्तरगोगृहे यः स्वकीयं पराक्रमं प्रकाशयितुम्।

"युध्यमानस्य मे वीर! गन्धर्व्वैः सुमहाबलैः।
सहायो घोषयात्रायां कस्तादासीत् सखा मम॥

तथाप्रतिभये तस्मिन् देवदानवसङ्कुले।
खाण्डवे युध्यमानस्य कस्तदासीत् सखा मम॥
निवातकवचैः सार्द्धं पौलोमैश्च महाबलैः।
युध्यतो देवराजार्थे कः सहायस्तदाभवत्॥
स्वयंवरे च पाञ्चाल्या राजभिः सह संयुगे।
युध्यतो बहुभिस्तात! कः सहायस्तदाभवत्॥

इत्येवमभिहितवानुत्तराय, साम्प्रतं सहसाविर्भूता करुणा तस्यैव धनञ्जयस्य सर्व्वं वीरत्वं ग्रस्तवती। यस्य लोकातीतं वीरत्वमवलोक्य परमपरितुष्टो धर्म्मवीरो युधिष्ठिरः।

"वासुकेः सर्पराजस्य स्वसारं हृतवांश्च यः।
श्रेष्ठः प्रतियुधां नाम सोऽर्ज्जुनः किं करिष्यति?
तथैतानि विशिष्टानि जात्यां जात्यां वृकोदर!
एवं युवा गुडाकेशः श्रेष्ठः सर्वधनुष्मताम्॥
सोऽयमिन्द्रादनवरो वासुदेवाच्च भारत!
गाण्डीवधन्वा बीभत्सुः श्वेताश्वः किं करिष्यति?"

इत्येवं निगदितवान् साम्प्रतं प्रतिपक्षावलम्बिनामात्मीयानामवलोकनेन सर्व्वमेव वीरत्वमतलजलधितले निमग्नमिव। यो विराटराज्ये राज्ञो विराटस्य गाः रक्षितुं भीष्मद्रोणादिभिः सर्व्वैरेव महावीरैर्युयोध, अधुना स एव।

"कथं भीष्ममहं संख्ये द्रोणञ्च मधुसूदन!
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन!"

इत्यब्रवीत्। अर्ज्जुनस्यैतादृशं समरविरागमवलोक्य तदीयः सखा सारथिः परमात्मीयो बुद्धिसागरो मनुज-मनोगत-विषयवेत्ता भगवान् वासुदेवस्तं पुनः समराय प्रवर्त्तयितुमुपदेशप्रदानाय बभूव यत्नवान्।

विधातुर्व्विधानेनैव सर्व्वे प्राणिनो जायन्ते म्रियन्ते च। वस्तुतः कोऽपि हन्तुं कोऽपि कमपि हन्तुं रक्षितुं वा न शक्नोति। युद्धादीनि तु केवलं नामत एव निमित्तानि। पाञ्चभौतिकस्य मृत्तिकादितुल्यस्य

देहस्यैवोत्पत्ति-विनाशौ दृश्येते, न चात्मनः। तेन देहस्य विनाशकोऽपि कश्चिज्जनो जीवस्य विनाशको भवितुं नार्हेत्। एतावदुक्त्वापि यदाऽर्ज्जुनस्य मुखभावादेरवलोकनादपरिवर्त्तित एव तस्याभिप्रायो निरधारि, तदा कर्म्मवीरः श्रीकृष्णो युक्त्यन्तरेण यस्य कर्म्मप्रवृत्तिमुत्पादयितुमियेष। ततश्च 'क्षत्रियस्य विजेतव्य'मिति शास्त्रं स्मारयितुमनसा तेनोक्तम्—

"स्वधर्म्ममपि चावेक्ष्य न विकम्पितुमर्हसि।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते॥" इति।

अर्ज्जुनो धर्म्मभीरुरासीदतो धर्म्महानेः सम्भावनायां सतां येन केनचिदुपायेन स तां वारयितुं यतिष्यत इत्येव श्रीकृष्णः प्रागकल्पयत्, साम्प्रतन्तु तादृशभाषणं श्रुत्वापि तस्याभिप्रायं पूर्ववदेवापरिवर्त्तितं विलोक्य यशोलिप्सोरर्ज्जुनस्य यशोहानिरनभिप्रेतो भविष्यतीति मत्वा।

"अथ चेत् त्वमिमं धर्म्यं संग्रामं न करिष्यसि।
ततः स्वधर्म्मं कीर्त्तिञ्च हित्वा पापमवाप्स्यसि॥"

इति श्लोकेन एकस्मादेव युद्धाकरणात् स्वधर्म्महानिः कीर्त्तिनाशः पापागमश्चेति त्रितयमेव तस्य भविष्यतीति पार्थाय विज्ञापितं भगवता। यथा खलु अल्पेनानन्दजनकव्यापारेण दारुणशोकग्रस्तस्य भावविपर्य्ययो न जायते, तथैव कठोर-समर-विजितस्य धनञ्जयस्य तादृशेनापि भगवद्भाषणेन न सङ्कल्पपरिवर्त्तः सञ्जातः।

अथ भीत्यपवादो विजयिनोऽसहनीय इति मत्वा समरविरतस्य तस्यां समरविरतौ भयमेव कारणत्वेन निर्णीतं भविष्यतीति विज्ञाप्य तेनास्योत्तेजनामुत्पादयितुं यतितम्। अत्रोक्तम्—

—(क्रमशः)

# साम्यसागरकल्लोलम्

( रूपकम् )

निबन्धकः—श्रीश्रीजीवन्यायतीर्थः

( पूर्वतोऽनुवृत्तम् )

गणसैनिकाः। [ करतालिकाभिः सह ]

महान् नेतास्माकं जयति जगतां गौरवगिरि-
र्नराणामुद्धर्त्ता श्रमिककृषकाणामनुपमः।
प्रहर्त्ता ऋद्धानां प्रलयनटराजो नवतनुः
कुसंस्कारोच्छेत्ता जयति गृहयुद्धप्रसरकृत्॥

( ततः प्रविशति कश्चिद् यतिः )

यतिः। भो गणनाथ! किमिदमारब्धं तवानुचरैः? स्वजनात् स्वगणान् प्रतिवेशिनो देशवासिनो मारयन् रचयसि कस्य कल्याणम्? गृहयुद्धव्यपदेशेन भारतीया भारतीयान् घ्नन्तीति कोऽयं व्यामोहः? निवर्त्ततामस्माद् दुर्व्यवसितात्! भारतशत्रुकृत्यं स्वयमेव सम्पादयन् न किमात्मघातं देशद्रोहञ्च प्रवर्त्तयसि?

गणनाथः। अरे कपटकञ्चुकधारिन्!

धर्मं न धर्मध्वजिनं न वेद्मि
श्रमार्त्तदीनान् हृदयेन जाने।
तेषामसृक्-पान सुपुष्ट-देहान्
युष्मान् हि देशस्य रिपून् प्रतीमः॥

यतिः। महदिदं वाक्कौशलं शिक्षितं त्वया।

गण०। किमिदमुच्यते धर्ममुखधारिणा वञ्चकेन? चिरं देशवासिनो वञ्चयमानो मोहगर्त्ते निपातयन् श्रमिककर्षकशोणितशोषणेन भूमिस्वत्वद्रव्यादि-सम्भोगेन जीवन् भारतं शाश्वतदुःखसागरं निमग्नमकार्षीः।

उत्तिष्ठत श्रमिका जागृत कर्षकाः! विलासिनामलसानां

वर्ज्यानां* मध्यवित्तानां विलोपं घटयत।

यतिः। मिथ्याभियोगमानयसि भो गणनाथ! यथा वयं तथा कर्षका श्रमिकाश्च समाजस्यावयवाः सेवकाश्च। परस्परं श्रममुद्रा-विनिमयेन वयं सर्वे जीवामः। यदि वयं शोषकाः स्याम, तर्हि तेऽपि धनचूषकाः कथं न भवेयुः? श्रूयते त्वमसि लक्षाधिक-मुद्राधिपतिः। रम्यहर्म्यनिवासी यन्त्रयानविलासी विपुलाशी च। किं न भवसि श्रमिककर्षकरुधिरशोषी त्वमपि?

गण०। अहमस्मि नेता। कोऽपि दोषो न मां स्पृशति।

पश्य— एकः सूर्यः पद्मलक्षप्रकाशी
जेता तारा ज्योतिषां खे स्थितानाम्।
युक्तः शश्वत् तद्वसुप्राज्यभारै-
र्विश्वं राज्यं शास्ति, नास्त्येव दोषः।

यतिः। स्वयं वसुमान् सूरोऽसि? बाढं, कथं त्वदनुचरा शुभ्राकारा अपि धनभारस्वामिनो ज्ञायन्ते?

गण०। तेषामपि नास्ति दोषः, मत्सन्निहितत्वात्।
उड्वोऽपि रविच्छाया-संक्रमाद् वसुभास्वराः।
भवन्त्येव जगन्नीतिं के न जानन्ति कोविदाः॥

यतिः। त्वत्सम्प्रदायमुक्ताः सहस्राणि पुरुषा नार्यश्च भूरिधनाधिपा दृश्यन्ते।

गण०। दृश्यन्तां नाम; तेऽपि निर्दोषाः, यावन्न सम्यक् साम्यवादि-राष्ट्रं प्रतिष्ठितं भवेत्, तावदीदृशं वैषम्यं लक्षितं स्यादेव।

यतिः। अहो! कपटपाटवम्!

सूचिवत् सूचितं स्वस्य छिद्रं दोषाय नो भवेत्।
परस्य बिल्वमानं स्यादहो कपटपाटवम्॥

भोः साम्यवादिन्! भो उदार! स्वकीयसम्पदं श्रमिक-कर्षकेभ्यो निःशेषं वितीर्य प्रदर्शय युष्माकं नीतेरादर्शम्।

* बुर्जुआ इति भाषा।

अन्यथा भण्डव्यपदेशभाग् भव।

गण०। राजनीतितत्त्वे त्वमसि मूर्खः। पठ मारकशिष्टग्रन्थान्* ज्ञास्यसि रहस्यम्। यतिवेशधरस्त्वमसि भण्डतमः।

यतिः। अभारतीयभावमात्रभावुका भवन्ति मूर्खाः। यतेर्नास्ति परिग्रहो न गेहं न यानम्, निवसामि क्षुद्रगृहे, तृण-पटनिर्मिते वा कुटीरे कदाचिद्वा वृक्षतले, भ्रमामि पद्भ्यां भक्षयामि भिक्षालब्धमन्नम्। नास्ति सञ्चयः। सदानन्दमयो बम् बम् रवं करोमि। पठामि भारतीयब्रह्मवादम्, चिन्तयामि जीवमात्रं शिवस्वरूपम्। आवयोः कतरः साम्यवादी तथा विचार्य्यताम्।

गण०। अरे धृष्ट!

धर्माच्छन्नः साम्यवादो न गण्य-
श्चिन्तागम्यः कल्पनापोढ एषः।
यः स्याल्लोके वास्तवः साम्यबोधः
सोऽयं ध्येयोऽस्माभिरिष्टो हि राष्ट्रे॥

यतिः। भो दुर्बुद्धे!

चार्वाकैर्यच्चिन्तितं स्थूलधीभिः
प्रत्यक्षं सत् कामभोगः पुमर्थः।
अन्धप्रायस्तत्पथस्यानुवर्त्ती
धर्म्यं साम्यं नैव बोद्धुं क्षमस्त्वम्॥

गण०। किं नाम नाहं बुध्ये साम्यवादम्। देशनायकेन जनगणचालकेन मया सह तर्कं तनुषे? समुचितदण्डदानेन तव बुद्धिं शोधयितुं शक्नोमि। पश्य मे हस्तस्थितं मुद्गरं दात्रञ्च, हिंसाद्वारैव भारतमुद्धरिष्यामि।

यतिः। भो गणनाथ! नाहं भीतोऽस्मि तव तर्जनगर्जनाभ्याम्।

जीवनं मरणं वास्तु किमायातं यतेस्ततः।
वज्रं वा वारि वा सिन्धोः पततु को वा चयः क्षयः॥

---

* मारकशिष्टः—Marxist

अहिंसा हि भारतधर्मः। काले तव भ्रमो दूरी भविष्यति।
दृढं जानीहि—

हिंसा वह्निशिखातुल्या तुषारमपि तापयेत्।
उद्दीपिता दहेत् सर्वं स्वाश्रयं स्वजनद्रुमम्॥

(इति निष्क्रान्तः)

गण०। दूरीभव धर्मान्ध! सैनिकाः साधयन्तु स्वस्वकृत्यानि।

(गणसैनिकाः निष्क्रान्ताः)

ततः प्रविशतो द्वौ श्रमिककर्षकौ मुद्गरदात्रहस्तौ। (उभौ गायन्तौ नृत्यतः)

विद्रोहस्तात् संग्रामस्तात्
पल्लयां कृष्यां शिल्पक्षेत्रे।
गेहे गेहे द्रोहः स्फारो
गर्जन्मेघाद् वज्राकारः।
हिंसा ध्वंसः सर्वत्रास्तां
वह्निज्वालो दावाधारः।
मिथ्या धर्मो मिथ्यापीशो
वित्तं सत्यं मर्त्तः सारः॥

श्रमिकः। कामरते!+ भवदाज्ञया प्रवर्त्तितेनान्दोलनेन पञ्चाशत् महायन्त्रालया रुद्धाः। वयमिदानीं कर्मभ्रष्टा वृत्तिहीना निरन्नाः कमुपायं विधास्यामः?

गण०। प्रतिहिंसा! प्रतिहिंसा! तत्तद्यन्त्रालयस्य परिचालकान् वेष्टयित्वा प्रहारेण चेतयत।

श्रमिकः। कृतं परिवेष्टनम्, गर्जनतर्जनाभ्यां भीपितं परिचालकवृन्दम्। मृदुवचनेन मधुराश्वासदानेन परितोष्य तदानीं प्रस्थितम्। तद्दिनात् परं यन्त्रालयाश्चिराय रुद्धद्वाराः कृताः।

—(क्रमशः)

+ Comrade

# नलोदयाम:

निवन्धक:—श्रीपुलिनविहारी वेदान्ततीर्थ:

( पूर्वतोऽनुवृत्ता )

अरुणकणपरागैर्लिप्तवृक्षं प्रफुल्लं
कुसुमचयनकामागत्य तत्र स्थितान्या ।
धवलदशनपङ्क्तिभ्यां जहासेयमेवं
समुदयतरुरस्या हास्यशुक्लीकृतोऽभूत् ॥३५

युवतिरपरबाला षोड़शी तिष्ठति स्म
नवकिशलय शोभामण्डिताद् वृक्षतोऽधः ।
व्रततिरिव बभौ तत्रालवाले स्थिता च
मुदमनुभवतिस्मावेक्ष्य पुष्पाणि तन्वी ॥३६

कृशतनुरपरा स्त्री विप्रलम्भाच्छुगूह
व्रततिवलयमध्येऽवस्थितास्वात्मगुप्ताम् ।
स्वदयित इतराभ्यो वेदितुं तामशक्नोत्
सखिजनकलहास्यैर्गु ञ्जितेनाप्यलीनाम् ॥३७

कुसुमिततरुकिञ्जल्कावृक्षी यदान्या
कणमपगमयाक्षण: सुस्थतां मे विधेहि ।
स्वपतिमनुरुरोधेत्याशु तत्सम्मुखेन
वशमनयदितीमं किं न तत् सा शिशिक्षे ? ॥३८

स्वयमकपट एवं नापराद्ध इवान्यो
विविधचतुरचाटुव्याजवाक्यैः समक्षम् ।
स ऋजुमनसमस्मीति प्रमाणे प्रदत्ते
क्रुधमियमपहाय स्वामिनि क्रोधवर्ज्जा ॥३९

अथ पतिरपवाद्धः कश्चनान्यः प्रियायै
उपवनविहगानां वर्णनाद् विस्मयेन ।

अतिसुज्जन इवाभूदेनसः क्षालनेन
चतुरपुरुषवाचा मानभङ्गः कृतोऽस्याः ॥४०
पुनरपि पतिरण्यो रन्तुमिच्छुः स्मरार्त्त-
श्चरणयुगलतोऽसूनां समायाः प्रियायाः।
विदलन अभिमानिन्याः स्वमूर्ध्नि प्रदत्ते
नतवपुरथ मेने वाञ्छनीयं तदस्याः ॥४१
वनविहरणमुद्दिश्याथ भामाः प्रियैः स्वैः
स्वभवनमभिरामं तत्यजुस्तत्र जग्मुः।
परिमलकणभाजां शीकराणां वणस्य-
सलिलविहरणार्थं वाटिकां स्पर्शनाच्च ॥८२

इति नलोदयाभे वनकेलिवर्णने तृतीयोऽध्यायः।

( चतुर्थोऽध्यायः )

सरसि च जलकेलि स्नानकामाः समीपे
स्थितमुपवनमध्ये स्वेच्छया क्रीडनान्ते।
सरसिजसर एते कामिनस्ते सदारा-
स्तत उपगतवन्तो वाटिकाकेलिसक्ताः ॥१
अनवधिगुणपीयूषाश्रिते भैमि ! किं न
सलिलविहरणार्थं यास्यसि स्थानतोऽस्मात् !
इति स नल उवाचास्यै प्रियायै द्रुतश्च
ह्रदमकपट आगच्छत् तया प्रेमिकः सः ॥२
सलिलमुपचितश्चापङ्किलं तन्नलस्य
श्रिय इह सरसीस्थानां सरस्या द्विजानाम्
वहुविधकुवरीहंसीविहङ्गादयोऽपि
समभिलषितमूर्त्तेर्मानसं तस्य जह्रुः ॥३
अथ यदि तिमिमत्स्याद्याश्च भीतिप्रदाः स्युः
सरस उदकराशौ तत्र भीरुस्वभावाः।

जलविहरणकामाः शङ्कयान्योन्यमृचु-
स्तनुलघुलहरीषु क्रीड़ने का क्षतिर्नः ॥४

उदकविहरणार्थं सुन्दरीणां मुखाब्धं
ह्रदजलमवगाढ़ं तद्गतानां सखीनाम् ।
मधुकर उपसर्पन्नार्चदागत्य पश्चात्
स्वमदजनितचिह्नं रेणुरागान्विताब्ज ॥५

स्मरकुसुमशरार्त्ताभिर्यदान्दोलितानि
रुचिरसरसिजानि स्थानसंश्लिष्टभृङ्गाः ।
समुदयरमणीभिर्नैपथेनाब्विहारे
तदुपरि परितस्ते तान्यधावन्नदन्तः ॥६

न च तदुदककेलिश्रीरधत्तावधिं सा
कमलनिचयदोलाभ्यन्तरे तत्सरस्याः ।
"किमियमभवदस्याः कूर्मकुम्भीरगत्या ?"
मनसि भयमितीवासीद् विहारप्रियासु ॥७

अन्तरथविहृतेस्तायोपितस्तीरमद्भ्यः
सुविमलजलराशौ सारसानां सरस्याः ।
नभसि पयसि नीले तारकालिर्बभौ च
अविरतमुखरक्रीडोत्थफेणैर्यथास्याः ॥८

उदिततपनदेवेऽस्ताचलं गम्यमाने
स्वसदनमथ केलिप्रेमिकाः सुप्रभं ताः ।
त्रिवलिभरणता ईषत्शनैः प्रत्यागच्छ-
स्तनुपरिमललुब्धा अन्वगच्छन् द्विरेफाः ॥९

—क्रमशः

# निवेदनम्

करुणावरुणालय-परमेश्वरस्य महत्यानुकम्पया सौरभाद्रमासतः (१३७७) प्रणवपारिजातस्य त्रयोदशवर्षारम्भः। तेन सहृदय-पाठक-वर्गाणां सविधे सविनयनिवेदनं यत्, ते सर्वे प्रणवपारिजातस्य वार्षिकोपायनं मुद्रात्रयं मण्यादेशिन्या (मणिअर्डार) अधोलिखित-कार्य्यालये प्रेषयन्त्विति। मण्यादेशिनी-पत्रे ग्राहकसंख्या अवश्यमुल्लेखनीया। नूतन-ग्राहकगणैस्तत्र "नूतन" शब्दो व्यवहर्तव्यः। श्रीभगवान् समेषां मङ्गलं विदधात्विति शम्।

श्रीरामरञ्जनकाव्य-व्याकरणतीर्थः
श्रीसीताराम वैदिक महाविद्यालयः
७/२ पि. डब्लिउ. डि. रोड्
कलिकाता— ३५

# নিবেদন

করুণাবরুণালয় পরমেশ্বরের মহতী অনুকম্পায় (১৩৭৭) ভাদ্রমাস হইতে প্রণবপারিজাতের ত্রয়োদশ বর্ষ আরম্ভ। সহৃদয় পাঠক-পাঠিকাগণের নিকট বিনীত নিবেদন এই যে, তাঁহারা "প্রণবপারিজাতের" বার্ষিক উপায়ন ৩.০০ তিন টাকা নিম্নলিখিত ঠিকানায় পাঠাইয়া বাধিত করুন। মণি অর্ডারের কুপণে অবশ্যই গ্রাহক নম্বর উল্লেখ করিবেন। নূতন গ্রাহক যাঁহারা হইবেন, তাঁহারা 'নূতন' এই শব্দটি ব্যবহার করিবেন। শ্রীভগবান্ সকলের মঙ্গল করুন।

শ্রীরামরঞ্জনকাব্য-ব্যাকরণতীর্থ
শ্রীসীতারামবৈদিক মহাবিদ্যালয়
৭/২, পি, ডব্লিউ, ডি, রোড,
কলিকাতা-৩৫

१६५। वर्त्तमानसामीप्ये वर्त्तमानवद् वा भूते भविष्यति च ॥

कदा त्वं कृष्णमद्राक्षीः द्रक्ष्यसि वा तत्राह एष पश्यामि। पक्षे यथाप्राप्तम्।

१६६। आशंसायां भविष्यति वर्त्तमानवद् भूतवच्च वा ॥

क्षिप्रार्थ उपपदे कल्किः। आशंसार्थे विधिः।

कृष्णश्चेदागच्छति आगमत् आगमिष्यति वा। सुखं पश्यामः अद्राक्ष्म द्रक्ष्यामो वा। तथा कृष्णश्चेत् क्षिप्रमागमिष्यति त्वरितं द्रक्ष्यामः। तथा कृष्णश्चेदागच्छेत्तर्ह्याशंसे त्वरितं पश्येयम्।

१६७। क्रियासातत्य-सामीप्ययोर्यथाकालमनद्यतने भूतेश कल्की ॥

---

१६५। वर्त्त। सामीप्य इति समीपशब्दात् स्वार्थे तद्धितः वर्त्तमान-समीप इत्यर्थः। यद्वा वर्त्तमानसामीप्यं यत्र तस्मिन् वर्त्तमानसन्निहित इत्यर्थः। एवम्भूते भूते भविष्यति च वर्त्तमानवद्वा भवति, वर्त्तमाने यथा कार्य्यं भवति, तथा तयोरपि भवतीत्यर्थः। अद्राक्षीरिति भूतकालज्ञापनार्थम्। द्रक्ष्यसीति भविष्यत्कालज्ञापनार्थम्। एवं पश्यामीति युष्मदाद्यप्रयोगेऽपि लभ्यत इत्युक्तम्, अतोऽत्र अस्मदोऽप्रयोगेऽपि अस्मल्लाभ एष इति अस्मद्विशेषणम्। ततश्च एषोऽहमिदानीमद्राक्षं द्रक्ष्यामि वेत्यर्थः। इदानीमित्यर्थलब्धमिति ज्ञेयम्। पक्षे यथाप्राप्तमिति। भूतविहितो भविष्यद्विहितश्च प्रत्ययो भवतीत्यर्थः ॥

१६६। आशम। अप्राप्तस्य प्रियार्थस्य प्राप्तीच्छा आशंसा तस्यां गम्यमानायां भविष्यति वर्त्तमानवत् भूतवच्च कार्य्यं वा भवतः, पक्षे भविष्यद्-विहितः प्रत्ययो भवतीत्यर्थः। उप समीपे स्थितं पदमुपपदं तस्मिन्। क्षिप्रार्थे शीघ्रार्थे उपपदे सति आशंसायां गम्यमानायां भविष्यति कल्किः स्यात्। क्षिप्रार्थोपपदसद्भावेऽपि आशंसार्थे उपपदे सति भविष्यति विधिः स्यात्। पूर्व्वसूत्रेण कल्कौ प्राप्ते विधानम्। तथा कृष्णश्चेदिति पूर्व्वत्र सम्भा-वनायां विधिः परत्रोदाहरणमिति। त्वरितं शीघ्रम् ॥

१६७। क्रिया। क्रियायाः सातत्ये सामीप्ये च गम्यमाने यथाकालं कालानतिक्रमेण अनद्यतने भूतेशकल्की भवतः। अनद्यतनभूते भूतेशो भवति

यावज्जीवं हरिमसेविष्ट सेविष्यते वा। येयं द्वादश्यतिक्रान्ता तस्यां हरिमपूजयत्। आगामिन्यां पूजयिष्यति च।

१६८। सीमोक्ताववरस्मिन् विभागे भविष्यदनद्यतने कल्किः कालविभागे चाहोरात्रसम्बन्धहीने परस्मिंस्तु वा।

योऽयम् आ गोवर्द्धनाद् गन्तव्यः पन्थाः, तस्य यदवरं राधाकुण्डं, तत्र तदाराधनं करिष्यामः। तथा आगामिवत्सरस्य योऽवरो वैशाखस्तत्र हरिमाराधयिष्यामः। नेह आगामिमासस्य योऽवरः, पञ्चदशरात्रस्तत्र श्रीभागवतमध्येतास्महे। अत्र तु वा। आगामीवर्षस्याग्रहायण्याः

---

अनद्यतनभविष्यति कल्किर्भवतीत्यर्थः। यावज्जीवमिति णम्वन्तम्। आगामिन्यां द्वादश्याम्॥

१६८। सीमो। सीमाया उक्तौ अवरस्मिन् चरमे विभागे सति भविष्यदनद्यतने अनद्यतनभविष्यति कल्किः स्यात्। सीमोक्तौ अहोरात्रसम्बन्धहीने अवरस्मिन् कालस्य विभागे च सति भविष्यदनद्यतने कल्किः स्यात्। सीमोक्तौ परस्मिन् कालविभागे तु सति कल्किर्वा भवति। आ गोवर्द्धनादिति। आङत्र सीमायां गोवर्द्धनपर्य्यन्तमित्यर्थः। तस्य पथः। अवरं पश्चात्। तत्र कुण्डे। तदाराधनं राधाराधनम्। अवरोऽन्त्यः। आराधयिष्यामि इति स्वार्थे णिः। नेहेति कल्किरिति शेषः। हायनस्य वत्सरस्याग्रः अग्रहायणः तेन युक्ता पौर्णमासी आग्रहायणी तस्या आग्रहायण्या इति मार्गशीर्षस्य पौर्णमास्या इत्यर्थः। क्षिप्रार्थ इत्यादिना नियमा उक्ता इति। आशंसायां भविष्यति वर्त्तमानवद्भूतवच्च वेत्यनेन अच्युतः भूतविहितप्रत्ययाः पक्षे कल्किश्च भवति। आशंसायां क्षिप्रार्थे उपपदे कल्किरेव स्यादिति नियमः। आशंसार्थ इति। क्षिप्रार्थोपपदसद्भावेऽपि आशंसार्थे उपपदे विधिरेव न तु कल्किरिति नियमः। ननु क्रियासातत्येत्यादेः सीमोक्तावित्यादेश्च कथं नियमत्वं यतः क्रियेत्यत्रानद्यतने भूतेश-कल्क्योरप्राप्तौ सीमेत्यत्र भविष्यदनद्यतने च कल्केरप्राप्तौ तत्तत्प्राप्तिविहितत्वात् ते विधिसूत्रे एव भवतः। उच्यते—अनद्यतनभूते भूतेश्वरादिः प्राप्नोति अनद्यतनभविष्यति बालकल्किः प्राप्नोति पदसंस्कारवेलायामनद्यतनस्य अविद्यमानतया भूतेश-कल्की अपि प्राप्नुतः, अतस्तेषां प्राप्तौ

परस्मिन् गीतां श्रोष्यामः श्रोतास्मः। क्षिप्रार्थ इत्यादिना नियमा उक्ताः ॥

१६६। विधिः।

तद्विपयक्रियातिपत्तौ त्वजितो भूत-भविष्यतोः ॥

विभू इमौ। क्रियाया अनिष्पत्तिः क्रियातिपत्तिः।

१७०। हेतु-तत्फलयोर्विधिस्तद्‌विपये कल्किश्च ॥

प्रभू चेमौ। तत्तन्मात्रे विधि-कल्की। विधिविषयक्रियातिपत्तौ त्वजित इत्यर्थः। कल्किश्चात्र विधिविषय एव। एवमुत्तरत्रापि। वृन्दावनं चेद् गच्छेत् कृष्णं पश्येत्। एवं कल्किः। नेह कृष्णं पश्यतीति नमस्कुरुते इति शब्देनैव हेतुतत्फलद्योतनात्। एवं कृष्णं पश्यतीति तस्मान्नमस्करोतीत्यादि। क्रियातिपत्तौ श्रीवृन्दावनं चेदगमिष्यत् कृष्णमद्रक्ष्यत्। हेतु-तत्फलयोरित्यधिकारमात्रं विधानसूत्रमपेक्षते तेन सम्भावनायां यो विधिर्वक्ष्यते तमपेक्ष्येदमुदाहृतम्।

---

नियमत्वं क्रियासातत्यसामीप्ययोर्यथा कालमनद्यतने भूतेश-कल्की एव भवत इति। सीमोक्तावव‍रस्मिन् विभागे भविष्यदनद्यतने कल्किरेवेति। एवं कालेत्यादेश्च नियमत्वं ज्ञेयम् ॥

१६६। विधिः। विधिः स्यात्। सूत्रमिदमनुवादरूपम्। तद्वि। व्यक्तार्थमेतत्। इदमप्युनुवादरूपम्। इमौ विध्यजितौ। क्रियातिपत्ति-लक्षणमाह, क्रियाया इति। सामान्यतो विधिसूत्रमुक्तं कस्मिन्नर्थे स भवतीति विशेषसूत्रमाह ॥

१७०। हेतु। हेतुः कारणम्। हेतुश्च तत्फलञ्च तयोर्गम्ययोर्विधिर्भवति। विधिविषये कल्किश्च भवति। इमौ विधिकल्की। तत्तन्मात्रे हेतु-तत्फलमात्रे गम्ये। विधिकल्की इति भवत इति शेषः। विधिविषयेत्यनेन अजितोऽपि हेतु-तत्फले। एवं कल्किरिति। वृन्दावनं चेद् गमिष्यति कृष्णं द्रक्ष्यतीति। नेहेति विधि-कल्की इति शेषः। हेतुमाह,—इति शब्देनैवेति। एवं कृष्णं पश्यति तस्मान्नमस्करोतीति। अत्र तस्मादित्यनेनैव हेतु-तत्फल-द्योतनं तेन न विधिकल्की। वृन्दावनं चेदगमिष्यत् कृष्णमद्रक्ष्यदिति हेतु-तत्-

१७१। सम्भावनार्थधातूपपदे यदित्यस्य प्रयोगे तु तद्विधिरेव ॥

सम्भावयामि अकल्पयामि भवान् वृन्दावनं चेद् गच्छेत् कृष्णं पश्येत् द्रक्ष्यति वा। यत् प्रयोगे तु सम्भावयामि यन्मथुरां गच्छेत् कृष्णं पश्येदित्येव। क्रियातिपत्तावद्रक्ष्यत्। एवमुत्तरेष्वपि अजित-प्रयोगा मन्तव्याः।

१७२। वाढार्थोताप्योर्योगे विधिः, शक्तिसम्भावने चालंशब्दा-प्रयोगे तथा ॥

उत कृपयेत्, अपि कृपयेत् कृष्णः। तथा अपि कृष्णं वशं कुर्यात्। नेह विधिः किन्त्वधिकारात् कल्किरेव। अलं कृष्णं वशीकरिष्यति।

---

फलयोर्वृन्दावनकृष्णदर्शनयोरनिष्पत्तिर्वाक्येनैव गम्यते। हेतु-तत्फलयोरितीति कर्त्तृभूतम् अधिकारमात्रमिति अधिकारमात्रोक्तमित्यर्थः। विधानसूत्रमिति कर्म्मभूतम्। तं विधिम्। इदमिति वृन्दावनं चेद् गच्छेत् कृष्णं पश्येदित्येत-दित्यर्थः। तस्मादत्र सम्भावनायां विधिरिति भावः ॥

१७१। सम्भा। हेतु-तत्फलयोर्गम्यमानयोः सम्भावनार्थे धातुसम्बन्धिन्युप-पदे सति पूर्व्वोक्तेऽर्थे विधिकल्क्यजिता भवन्ति। यदित्यस्य प्रयोगे तु तद्विधिरेव भवति, न तु कल्क्यजितौ। तद्विधिरिति स चासौ विधिश्चेति विग्रहः। सम्भावना तत्क्रियायोग्यतानिश्चयः। अवकल्पयामीति सम्भावयामीत्यर्थः। एवमिति उत्तरेषु लक्षणेषु मन्तव्या ज्ञातव्याः ॥

१७२। वाढ। वाढमतिशयः तदर्थयोरुताप्योर्योगे विधिः स्यात्। सर्व्वे-षामपवादोऽयं योगः। कल्किरपि न भवतीति सूचयतीति सूचयितुं विधिरिति कृतम्। सम्भावने च गम्यमाने अलंशब्दस्याप्रयोगे विधिः स्यात्। उत कृपयेत् अपि कृपयेत् कृष्ण इति अतिशयमित्यर्थः। वाढार्थेति किम्? उत कृष्णो गमिष्यति अपि धास्यति सुखम्। अत्र उतशब्देन प्रश्नो गम्यते। अपिशब्देन आच्छादनं गम्यते। अपि कृष्णं वशं कुर्य्यादिति अत्रापिशब्दः सम्भावनार्थः। नेह विधिरिति अलंशब्दप्रयोगादिति शेषः ॥

१७३। इच्छार्थाद्वर्त्तमाने विध्यच्युतौ ॥

इच्छेदिच्छति कृष्णम्।

१७४। इच्छार्थधातुसत्त्व विधिनिमन्त्रणामन्त्राधीष्टिसंप्रश्नप्रार्थनेषु च विधिविधातारौ ॥

इच्छामि कृष्णं पश्येयं पश्यानि वा। विधिरज्ञातज्ञापनं प्रेषणञ्च। स च पुनर्द्विविधः। दृष्टार्थादृष्टार्थतया। यथा स्ववृत्तिं कुर्य्यात् कृष्णं भजेत्। निमन्त्रणं नियोगकरणम् इह भुञ्जीथा वैष्णव। आमन्त्रणं कामचारकरणम् इहासीथाः। अधीष्टिः सत्कारपूर्व्विका व्यापारणा गुरो मां कृष्णमुपदिशेः। संप्रश्नोऽनुज्ञाप्रार्थनं किं गीतामधीयीय श्रीभागवतं वा। प्रार्थने लभेय हरिभक्तिम्। एवं स्ववृत्तिं करोत्वित्यादि ॥

१७५। प्रैषातिसर्गप्राप्तकालत्वेषु विधातृ-विष्णुकृत्यौ ॥

---

१७३। इच्छा। वर्त्तमाने काले इच्छार्थाद्धातोरुत्तरे विध्यच्युतौ भवतः। अच्युतः सिध्यत्येव। विध्यर्थसूत्रमिदम्। इच्छेदिति इषु इच्छायाम् ॥

१७४। इच्छार्थस्य धातोः सत्त्वे विद्यमानत्वे विध्यादिष्वर्थेषु च विधिविधातारौ भवतः। विधिलक्षणमाह,—विधिरज्ञातज्ञापनं प्रेषणञ्चेति। स च विधिः दृष्टार्थेति। दृष्टार्थतया अदृष्टार्थतया चेति। दृष्टार्थोऽदृष्टार्थश्चेत्यर्थः। अर्थशब्दः प्रयोजनवाची, दृष्टप्रयोजनकोऽदृष्टप्रयोजनकश्चेति। स्ववृत्तिं कुर्य्यादिति। अत्र विधेरज्ञातज्ञापनरूपता स्ववृत्तिकरणस्य व्यवहारमार्गसौष्ठवजनकत्वात् दृष्टार्थता च। कृष्णं भजेदिति। अत्र विधेरज्ञातज्ञापनरूपता कृष्णभजनस्य परमार्थमार्गसौष्ठवजनकत्वाददृष्टार्थता च। प्रेषणे त्वं पुष्पाणि चिनुयाः। निमन्त्रणलक्षणमाह, निमन्त्रणमिति। नियोगो नियुक्तिः। नियोगकरणमत्र भोजनविषयकमेव ज्ञेयम्। अन्यथा प्रेषणनियोगकरणयोर्भेदो न स्यात्। आमन्त्रणलक्षणमाह,—आमन्त्रणमिति। कामचारेण इच्छया करणमिति तस्याकरणे दोषाभावः। अधीष्टिलक्षणमाह,—अधीष्टिरिति। सत्कारः आदरः, व्यापारणा नियुक्तिः, अनुज्ञा आज्ञा, प्रार्थनं याच्ञा ॥

१७५। प्रैष। प्रैषश्च अतिस्यर्गश्च प्राप्तकालत्वञ्च तेष्वर्थेषु विधातृविष्णु-

प्रैषोऽत्र प्रेरणमात्रम्। अतिसर्गः कामचाराभ्यनुज्ञा। कृष्णं भज त्वम्। कामं भज त्वं कृष्णम्। कृष्णभक्तौ कालस्ते प्राप्तः कृष्णं भज। त्रिष्वपि कृष्णो भजनीय इत्यादि। पृथग्विधातृग्रहणं प्राप्तकालत्वे प्राप्त्यर्थम्॥

१७६। मुहूर्तस्योपरि प्रैषादिषु विधिश्च। स्मयोगे त्वधीष्टौ च विधातैव॥

मुहूर्तस्योपरि कृष्णं भजेरित्यादि। तथा कृष्णं भज स्म कृष्णं भजेरित्यादि। तथा कृष्णं भज स्म कृष्णमुपदिश स्म।

१७७। काल-समय-वेलाप्रयोगे यच्छब्देन योगे विधिः॥

कालोऽयं यत् सेवेथाः कृष्णम्। एवं समयोऽयमित्यादि॥

१७८। अर्ह-शक्त्योर्विधिविष्णुकृत्यतृणः॥

कृष्णो रुक्मिणीमुद्वहेत् हरेदित्यादि।

---

कृत्यौ भवतः। अतिसर्गलक्षणमाह,—अतिसर्ग इति। कामेति कामचारे इच्छाप्रवृत्तौ अभ्यनुज्ञेति कृष्णं भज त्वमिति प्रैषोदाहरणम्। कृष्णभक्तौ कृष्णभजने। त्रिष्वपीति प्रैषादिष्वित्यर्थः। प्रैषेऽतिसर्गे च पूर्वलक्षणेनैव विधाता प्राप्नोति। तथापि यदिह विधातृग्रहणं कृतं, तत्फलमाह पृथगिति॥

१७६। मुहू। मुहूर्तस्योपरि प्रैषादिषु सत्सु विधातृविष्णुकृत्यौ विधिश्च भवति। स्मशब्दयोगे तु प्रैषादौ अधीष्टौ च अर्थे विधातैव भवति। इत्यादि पदेन विधातृविष्णुकृत्यावुदाहार्यौ। कृष्णं भज स्मेति प्रैषोदाहरणम्। कृष्णमुपदिश स्मेति अधीष्ट्युदाहरणम्॥

१७७। काल। काल-समय-वेलानां प्रयोगे यच्छब्देन योगे सति प्रैषादावर्थे गम्यमाने विधिः स्यात्॥

१७८। अर्ह। अर्हतीति अर्हो योग्यः, अर्हे कर्त्तरि शक्तौ च गम्यमानायां विधिविष्णुकृत्यतृणो भवन्ति। कृष्णो रुक्मिणीमुद्वहेदिति। कृष्ण एव रुक्मिण्युद्वहनमर्हतीति गम्यते। कृष्णो रुक्मिणीं हरेदिति कृष्णस्यैव रुक्मिणीहरणे शक्तिरस्तीति गम्यते। इत्यादीत्यादिपदेन कृष्णेन रुक्मिण्युद्वोढव्या।

१७६। आशिषि कामपाल-विधातारौ ॥

कृष्णः कल्याणं क्रियात्, करोतु, कुरुताद्वा।

१८०। माङ्योगे सर्व्वापवादी भूतेशः ॥

मा कृष्णं परित्याक्षीः। कथं मा भवतु तस्य पापं मा करिष्यति। निरनुबन्धोऽयं मा शब्द इति।

१८१। मास्मयोगे भूतेश्वरश्च ॥

मास्म कृष्णं त्यजः मास्म त्याक्षीः। व्यस्तेऽपीच्छन्ति केचित्। स्म करोन्मा स्म कार्षीन्मा। पृथग्योगात् केवल-मायोगे तु न स्यात्। मा कृष्णं त्याक्षीरित्येव।

१८२। कालसामान्ये ॥

विधुरयम्।

१८३। अपि-जात्वोर्योगे गर्हायामच्युतः ॥

अपि भवान् अवैष्णवं श्राद्धे भोजयति। एवं जातु। तदेतत् पर्य्यन्तं क्रियातिपत्तौ नित्यत्वेनाजितो ज्ञेयः। अथ भूते विकल्पेन भविष्यति तु नित्यत्वेन।

---

कृष्णेन रुक्मिणी हर्त्तव्या। कृष्णो रुक्मिण्या उद्वोढ़ा। कृष्णो रुक्मिण्या हर्त्तेति ॥

१७६। आशि। आशीरिष्टार्थस्याशंसनं आशंसनमिच्छा। तस्यां गम्यमानायां कामपाल-विधातारौ भवतः। सूत्रमिदमाख्यातसूत्रानुवादरूपम् ॥

१८०। माङ्। व्यक्तार्थमेतत्। कथमिति कथं भूतेशो भवतीति विरोधः। सिद्धान्तमाह,—निरनुबन्ध इति ॥

१८१। मास्म। मास्मयोगे भूतेशो भूतेश्वरश्च भवति। व्यस्तेऽपीति। व्यस्ते वैपरीत्ये योगेऽपीत्यर्थः। अस्माकं मते समस्ते योगे भवति। न स्यादिति भूतेश्वर इति शेषः॥

१८२, १८३। काल अपि। गर्हा कुत्सा तस्यां गम्यमानायाम् अपि-जात्वोर्योगे कालसामान्ये अच्युतो भवति। तदिति तस्मात्। अथेति अतः परमित्यर्थः। नित्यत्वेनेति अजितो ज्ञेय इति शेषः॥

१८४। विधिविषयक्रियातिपत्तौ भूतेऽजितो वा ॥

विभुरयम् ॥

१८५। कथंयोगे गर्हायां विध्यच्युतौ वा ॥

स कथमवैष्णवमन्त्रं जपेत् जपति वा। पक्षे यथाविहितश्च। कथं जपिष्यति अजापीदित्यादि। विधिविषयेति। स कथमवैष्णवं मन्त्रमजपिष्यत् जपेत् जपति वा। भविष्यति तु अजपिष्यदित्येव।

१८६। किं-कतर-कतमैर्योगे गर्हायां विधि-कल्की ॥

को नामावैष्णवं जपेत् जपिष्यति वा। एवं कतरो नामेत्यादि। क्रियातिपत्तौ भूते। अजपिष्यत् पक्षे जपेत् जपिष्यति वा। भविष्यति तु अजपिष्यत्। एवमुत्तरत्राप्यजितो दृश्यः।

१८७। अश्रद्धामर्षयोर्विधिकल्की ॥

प्रभुरयम्। न श्रद्दधे कृष्णान्योऽग्रपूजार्हं लभेत लप्स्यते वा। एवं न मर्षयामीत्यादि। सर्व्वत्राश्रद्धामर्षयोर्गम्यमानत्वेऽपि प्रयोगा ज्ञेयाः।

---

१८४। विधिः। व्यक्तार्थमेतत् ॥

१८५। गर्हायां गम्यमानायां कथंशब्दयोगे सति कालसामान्ये विध्यच्युतौ वा भवतः। अजितोऽनुवर्त्तते सोऽपि भूते विधिविषयक्रियातिपत्तौ वा भवतीति। अवैष्णवमिति अवैष्णवं मन्त्रमित्यर्थः ॥

१८६। किम्। गर्हायां गम्यमानायां किमादियोगे कालसामान्ये विधि-कल्की भवतः। अजितोऽनुवर्त्तते। सोऽपि क्रियातिपत्तौ भूते वा भवति।

१८७। अश्र। अश्रद्धा च अमर्षश्च तयोः। अश्रद्धामर्षयोर्गम्यमानयोः कालसामान्ये विधि-कल्की भवतः। अत्र क्रमव्यवस्था नेष्टेत्युदाहरण एव व्यक्तम्। न श्रद्दध इति नाभिलषामीत्यर्थः। न मर्षयामीति न सहे इत्यर्थः। सर्व्वत्रेति। तस्मात् न श्रद्दध इत्यस्य न मर्षयामीत्यस्य च अनुक्तत्वेऽपि कृष्णान्योऽग्रपूजां लभेत लप्स्यते वेत्यादि प्रयोगा भवन्तीति ॥

(१७७) वातकी वातरोगी स्यात् (१७८) सातिसारोऽतिसारकी
(१७९) स्युः क्लिन्नाक्षे चूल्ल-चिल्ल-पिल्लाः क्लिन्नेऽक्षिण चाप्यमी ।
(१८०) उन्मत्त उन्मादवति (१८१) श्लेष्मलः श्लेष्मणः कफी ॥
(१८२) न्युब्जो भुग्ने रुजा (१८३) वृद्धनाभौ तुण्डिल-तुण्डिभौ ॥
(१८४) किलासी सिध्मलो-(१८५) ऽन्धोऽदृङ्-
मूर्च्छालो मूर्त्तमूर्च्छितौ ॥

---

अर्श इति। अर्शो योगादर्श आदित्वादच् ॥१७६

वातेति। द्वयं वात रोगिणि। वातातिसारपिशाचानामिनि नित्यं कः स्वार्थे ॥१७७

सेति। द्वयमतिसारयुक्ते। अतिसारलक्षणं यथा निदाने—"संशम्यापां धातुरग्नि प्रवृद्धः शकृन्मिश्रो वायुनाधः प्रणुन्नः। सरत्यतो वातिसारं तमाहुर्व्याधिं घोरं षड् विधं तं वदन्ति" इति ॥१७८

क्लीति। चतुष्कं रोगादिना क्लिन्नचक्षुषि पुरुषे। क्लिन्ने चक्षुष्यपि। चुल्लचिल्लपिल्लाश्चुरादावण्। न केवलं पुरुषेऽमी, क्लिन्नचक्षुष्यपि, तत्र नपुंसकाः ॥१७९

उन्मेति। द्वयमुन्मादयुक्ते। "मदयन्त्युद्गतादोषा यस्मादुन्मार्गमागताः। मानसोऽयमतो व्याधिरुन्माद इति कीर्त्तितः" इत्युन्मादलक्षणं निदाने ॥१८०

श्लेष्मेति। त्रयं कफयुक्ते। श्लेष्मयोगात् नलचौ ॥१८१

न्युब्ज इति। रुजा रोगेण भुग्नः कुटिलो न्युब्जः। भुज-न्युब्जौ पाणिरोगयोरिति साधुः ॥१८२

वृद्धेति। त्रयं बृहन्नाभौ पुरुषे गोड़नाभिरिति ख्याते। उन्नतनाभिस्तुण्डिस्तद्योगाल्लभौ ॥१८३

किलेति। द्वयं सिध्मयुक्ते ॥१८४

अन्ध इति। द्वयमचक्षुषि। अन्धयतीत्यच् नास्ति दृगस्य ॥१८५

(१८७) शुक्रन्तेजोरेतसौ च बीजवीर्य्येन्द्रियाणि च ।
(१८८) मायुः पित्तं (१८९) कफः श्लेष्मा
(१९०) स्त्रियान्तु त्वगसृग्धरा ॥
(१९१) पिशितं तरसं मांसं पललं क्रव्यमामिषम् ।

---

मूर्च्छेति। अयं मूर्च्छायुक्ते। "संज्ञावहासु नाड़ीषु पिहितास्वनिलादिभिः। तमोऽभ्युपैति सहसा सुख-दुःखव्यपोहकृत्। सुख-दुःखव्यपोहाच्च नरः पतति काष्ठवत्। मोहमूर्च्छेति तामाहुः षड्विधा सा प्रकीर्त्तिता" इति। मूर्च्छेगुरोरः अस्त्यर्थे लच्, क्तप्रत्यये आदनुबन्धत्वादनिट्। राल्लोप्याविति छलोपः। मूर्च्छायोगात्तारकादित्वादितच्। त्रिष्विति निवृत्तम् ॥१८६

शुक्रमिति षट् शुक्रे। शुक गतौ रक्। तिज निशाने असुन्। री गतौ स्रुरीभ्यां तुश्चेत्यसुन् तुरागमश्च। रीयते स्रवतीत्यर्थः। विजयतेऽस्मान् डः उपसर्गस्य दीर्घः। वीर्य्य बलप्राणनेऽच्। "नृबीजमिन्द्रदैवतं तस्मादिन्द्रियमुच्यते" इति रत्नकोषः ॥१८७

मेति। द्वयं पित्ते। कृवापाजीत्यादिना उण् रसानपि दधाति क्तः, स्वरादुपसर्गात्तः अपेरादिलोपो धाञ्नहोरपेरुपसर्गस्यादेरित्यनेन ॥१८८

केति। द्वयं कफे। केन जलेन स्फोतिवृद्धिरस्य पृषोदरादिः। फान्तः पान्तश्चेति स्वामी। श्लिष्यतेऽस्मिन् इति मन् ॥१८९

त्वगिति। द्वयं चर्म्मणि। त्वच्यते संव्रियतेऽनेन क्विप्। अदन्तोऽपि। त्वचवेष्टितमस्थिपञ्जरम्। इत्यश्वघोषप्रयोगात् त्वचा च। असृग् धृणोतीति केचित् ॥१९०

पिशीति। षण्मांसे। पिश अवयवे क्तः "कपिशितं पिशितं मदनाग्निना" इति माघयमकात्तालव्यः तरतेऽसच्। मान पूजायां सः संज्ञात्वादनिट्। पलेः कसच्। कृन्वेर्य्यणि निपातितः। अङ्पूर्वान्मिषेर्नाम्नीगुपधात् कः ॥१९१

(१९२) उत्तप्तं शुष्कमांसं स्याद्वल्लूरं तत्त्रिलिङ्गकम् ।
(१९३) रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितम् ॥
(१९४) बुक्काऽग्रमांसं हृदयं हृ-(१९५) न्मेदस्तु वपा वसा ॥
(१९६) पश्चाद्ग्रीवाशिरा मन्या (१९७) नाड़ी तु धमनिः शिरा

---

उत्तेति। अयं शुष्कमांसे। वल्लेः खर्ज्जूरादित्वादूरः ॥१९२

रुधीति। सप्तकं रक्ते रुधेः किरच्। अधिसृजति क्विप् पृषोदरादिः। असु क्षेपणे रक्। रञ्जेः क्तः। क्षताज्जायते डः। शोण् वर्णे क्तः। शोणकोणलवणानि टिप्पणीति णत्वभेदान्मूर्द्धन्यः ॥१९३

बुक्केति। चतुष्कं बुक इति ख्याते। बुक्का स्त्री "उरस्यपि च च बुक्कायां हृदयं मानसेऽपि चे"ति त्रिकाण्डशेषः। बुक्क नान्तः पुमानपि। यथा हरिहरः "ऋकारादेबु र्क्क नान्तः पुमानपि। यथा हरिहरः "ऋकारादेवृ क्क नान्तं वृक्का नान्तः पुमानयम्। वृक्का वृक्कस्तथा वृकमदन्तस्य त्रिलिङ्गता। उकारादेः पुमान् बुक्का नान्तः स्त्री कस्यचिन्मते। बुक्का नान्तश्च सर्व्वेषामदन्तस्य त्रिलिङ्गता। आदिस्वरविकल्पेन विदुषां मतभेदतः। एकादशैव रूपाणि दृष्ट्वा हरिहरोऽब्रवीत्" इति। अन्ये तु बुक्कादिद्वयं बुक्के हृदयाभ्यन्तरे। हृदयादि द्वयं हृदयान्तर्गतपद्माकारमांसविशेषे न्यन्ते। यत् प्रयोगः—पद्मकोषप्रतीकाशं शुषिरञ्चाप्यधोमुखम्। हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्" इति ॥१९४

मेद इति। त्रयं मांसप्रभवे धातुविशेषे। स्नेहने मिदेरसुन् मेदः सान्तम्। तथा च श्रीहर्षः—तपर्त्तु पूर्त्तावपि मेदसां भरा विभावरीभिर्बिभरास्बभूविरे" इति अदन्तोऽपि मेदः प्रागदर्शितः। वपेर्व्वसार्थाच्च वसेर्भिदाद्यङ ॥१९५

पश्चादिति। ग्रीवायाः पश्चात् शिरा मन्या समजेत्यादिना क्यप् ॥१९६

(१९८) तिलकं क्लोम (१९९) मस्तिष्कं गोर्दं किट्टं
मलोऽस्त्रियाम्
(२०१) अन्त्रं पुरीतद् (२०२) गुल्मस्तु प्लीहा पुंस्य
(२०३) ऽथ वस्नसा ॥

---

नेति। त्रयं शिरासामान्ये। त्रिविधा हि देहे नाड़ी—एका वायुवाहिनी, अपरा सूत्रवदस्थिबन्धनी नहरुरिति ख्याता, अन्या चाहारवाहिनी अन्त्राख्या। द्वे परतो वक्ष्यते। नल गन्धे घञि नदादित्वादीरिति सुभूः। नाड़िह्र्स्वान्तापि—द्विसप्ततिसहस्राणि शरीरे नाड़्यो मता" इति योगवाशिष्ठात्। नाड़ोऽपि 'दैवान्नाड़े तु लग्नायां तान्तु शस्त्रेण शोधयेत्" इति वैद्यके। धमेः सौत्रादनिः, पक्षे ईप्रत्ययः। शीर्य्यते विध्यते इति कः। "शिरो ना पिप्पलीमूले स्याद्धमन्याञ्च योषिती"ति तालव्यादी रभसः ॥१९७

तिलेति। द्वयं हृदयाभ्यन्तरवर्त्तितृषास्थाने बुक्कप्राये। क्लोम पृषोदरादि रूपभेदान्नान्तम्। "क्लोम्नि पेपीयते पयः" इति वैद्यके। अदन्तमपीति केचित् ॥१९८

मेति। द्वयं शिरोमज्जनि। मस्तकप्रभवं मस्तिष्कं निपातितम् ॥१९९

कीति। द्वयं देहजमले तदुक्तं "वसाशुक्रमसृङ्मज्जाकर्णविण्मूत्रविण्णखाः। श्लेष्माश्रुदूषिका स्वेदो द्वादशैते नृणांमला" इति ॥२००

अन्त्रमिति। द्वयमन्त्राख्ये नाड़ीविशेषे, आँत इति ख्याते। अमेष्ट्रन्। पुरीं शरीरं तनोति क्विप् अन्त्रं पुरीतदस्त्रियामिति कोषान्तरम् ॥२०१

गुल्म इति। द्वयमधःकुक्षेः वामपार्श्वे प्लीहा इति ख्याते प्लिह गतौ कन्। प्लीहानौ प्लीहानः। गुल्मः सैन्यप्रभेदे च प्लीहरोगविशेषयो"रित्यजयः ॥२०२

वस्नेति। द्वयं सूत्रवदस्थिबन्धनीयनाड़ीविशेषे। नहरु इवि ख्याते।

स्नायुः स्त्रियां (२०४) कालखण्डयकृती तु समे इमे ॥
(२०५) सृणिका स्यन्दिनी लाला (२०६) दूषिका नेत्रयोर्म्मलम्
[ नासामलन्तु सिङ्क्षाणं पिञ्जूषं कर्णयोर्मलम् ! ]
(२०७) मूत्रं प्रस्राव (२०८) उच्चाराऽवस्करौ शमलं शकृत् ।

---

वसामस्यति पृषोदरादि। स्नातेरुण् "सुसा स्नायुश्च कथिता मेदः षण्डे वपा वसा" इत्यमरदत्ते स्नसा च ॥२०३

कालेति। द्वयं कुक्षेर्दक्षिणपार्श्वे कालिबुक इति ख्याते। कृष्णत्वात् कालखण्डम्। यकृत्तान्तमन्तस्थादि। कालजं कालखण्डकमिति रभसः ॥२०४

सृणीति। त्रयं लाल इति ख्याते। सृ गतौ किङ्किणीकादित्वान्निपातः। "कालजं यकृती लाला स्यन्दिनी सृणिकेत्यपी"ति रुद्रे ह्रस्वमध्यापि। स्यन्दतेरावश्यके णिनिः। लल ईप्सायामच् ॥२०५

दूषिका। ( केतर, पिचुटी ) इति ख्याता। "पिच्चोडकं नेत्रमलं दूषी च दूषिका मते"ति रभसः ॥२०६

मूत्रमिति। द्वयं मूत्रे। मूत्रे प्रस्रवणेऽच्। प्रे-द्रु-स्तु स्रुव इति घञ् ॥२०७

उच्चेति। नवकं विष्ठायाम्। उच्चर्य्यते त्यज्यते घञ्। अवकीर्य्यते क्षिप्यते अल्। पुरीषे स्यादवस्कर इत्यपस्करादौ श्रीपतिः। उपशम्यतेऽनेन कलच्। शक्नोतेऋत्। शकृत् पुरीषके इति तालव्ये शभेदः। शिरीषादय इति पृधातोरीषन्। यूथादित्वात् गुपेस्थक् पलोपो दीर्घः। पूरीषतेजसोर्व्वर्च्चः स्याद्रूपेऽपि नपुंसक"मिति रुद्रः। यावादित्वात् कः स्वार्थे। वर्च्चस्कमस्त्रीति सम्बन्धः। विषेस्थक्। विषल व्याप्तौ क्विप्। "विड्व्यापके च विष्ठायां शुषिः स्त्री बिलशोषयो"रिति रिति मूर्द्धन्यान्ते रभसः। तालव्यान्ता चेति सर्वानन्दः ॥२०८

कर्पेति। द्वयं शिरोऽस्थिखण्डे। समुदिते तु करोटिं वक्ष्यति।

गूथं पुरीषं वर्च्चस्कमस्त्री विष्ठाविषौ स्त्रियौ ।
(२०९) स्यात् कर्परः कपालोऽस्त्री (२१०) कीकसं कुल्यमस्थि च॥
(२११) स्याच्छरीरास्थि कङ्कालः (२१२) पृष्ठास्थ्नि तु कशेरुका
(२१३) शिरोऽस्थिन तु करोटिः स्त्री-(२१४) पार्श्वास्थिनि तु पर्शुका
(२१५) अङ्गं प्रतीकोऽवयवोऽपघनो-(२१५क) ऽथ कलेवरम् ।

---

कृपेररन् । कं पालयति अन् । "शिरोऽस्थनि कपालोऽस्त्री घटादेः शकलेऽपि चे"ति रुद्रः ॥२०९

कीति । त्रयम् अस्थिसामान्ये । किं न कसयति विशेषयति पृषोदरादिः । कीकसमांसयवसानीति दन्त्यान्तेऽरुणदत्तः । कुले शरीरे भवं यत् । सञ्ज्यसुभ्यां थिक् ॥२१०

स्यादिति । शरीरारम्भकास्थिसङ्घातः । कङ्कालककिधातोराल-कच् ॥२११

पृष्ठमध्येऽस्थिदण्डः कशेरुका । मेरुदण्ड इति ख्याते । को वायुः शेतेऽस्यां रुः, कः स्वार्थे ॥२१२

शिर इति । कं मस्तकं रुण्ठति तिष्ठत्यस्यां पृषोदरादिः । समुदित-शिरोऽस्थि करोटिः, करोटी च ॥२१३.

पृधातोः शुच् कः स्वार्थे । उभयपार्श्वास्थि पाँजड़ा इति ख्याते । पशुका तालव्यशा, "परश्वधे पुमान् पशुः स्त्री स्यात् पार्श्वस्य कीकस" इति सर्व्वानन्दः ॥२१४

अङ्गमिति । चतुष्कं हस्तपदाद्यवयवे । अगि गतौ अच् । प्रत्येति किङ्किणीकादिः । अवपूर्व्वादयतेरवः । शकन्ध्वादित्वादलोपः । अप-ऽन्यतेऽल् घनिरादेशश्च । गात्रं स्यादङ्गदेहयोरिति रुद्रे गात्रञ्चात्र ॥२१५

कल इति । तनूपर्य्यन्तं द्वादशकं शरीरे । कले वेतसि वरम् । गायतेष्ट्रन् । वपेरुस् । पृथिव्यादिभूतानि संघ्नन्ति संहतीभवन्त्यत्र युट् । कृश्र कोटिभ्य ईरच् । वृपु सेचने मन् । विग्रहेरल् । चिनोतेघञ्,

गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ।
कायो देहः क्लीब-पुंसोः स्त्रियां मूर्त्तिस्तनुस्तनूः ॥
(२१६) पादाग्रं प्रपदं (२१७) पादः पदङ्घ्रिश्चरणोऽस्त्रियाम् ।
(२१८) तद्ग्रन्थी घुटिके गुल्फौ पुमान् (२१९) पार्ष्णिरधःस्तयोः
(२२०) जङ्घा तु प्रसृता (२२१) जानूरुपर्वाऽष्ठीवदस्त्रियाम् ।

---

शरीरनिवासयोः कश्चादेरिति दिहेर्घञ् । मूर्त्त्याद्याः स्त्रियम् । मूर्च्छें । क्तिः । तनोतेरुः ऊङ् । सुतनु जहिहि कोपमिति । ह्रस्वत्वे तनुः । सान्ता च, तनुषे इति वासवदत्ताश्लेषात् । शरीरार्थं विस्तारसयसि सुखमित्यर्थः ॥२१५ (क)

पेति द्वयं । पादाग्रे । प्रकृष्टं पदं प्रपदम् ॥२१६

पेति । चतुष्कं चरणे । पद्यते गम्यते अनेनेति घञ्क्विपौ । अहि गतौ । अंह्यतेऽनेन बाहुलकात् क्रिः घकारयुक्तश्च क्वचित् पाठः । चरेः करणे युट् ॥२१७

घुटीति । द्वयं पादग्रन्थौ । घुट् परिवर्त्तने कन्, स्त्रियामादा । गुल्फः पृषोदरादिः । चरणग्रन्थ्योर्द्वयोर्गुल्फो द्वयोर्घुटइति रभसः ॥२१८

तयोर्गुल्फयोरधः पादयोः पश्चाद्भागः पार्ष्णिः । पृषेर्निः पार्ष्णि-देशश्च । प्रत्यासारे पुमान् पार्ष्णिः पादग्रन्थ्यधरेऽपि च" ति रभसः । पार्ष्णिः पश्चात् पादजिगीषयोरिति तु त्रिकाण्डे वोपालितः ॥२१९

जङ्घेति । द्वयं गुल्फजान्वोर्मध्यभागे । जंघन्यते यशब्दलोपे स्त्रियामादा घत्वञ्च । प्रसवति कर्त्तरि क्तः ॥२२०

जेति त्रयं जानुनि । अँशठु इति ख्याते । उणादौ तनेर्ञुण् । अनुबन्ध-करणाज्जनिवध्योरिति न बाधते । जानु जानुनी पुंस्यपि जानुरुदन्तो-ऽपि । "जानू समालम्ब्यते" इति । जानुमस्य प्रगृह्यायादिति । "एकेन कान्तचरणं चरणेन बालाधिष्ठाय जानुमपरेण चुचुम्ब नाथम्" इत्यादि प्रयोगात् । उरोः पर्व्व ग्रन्थिः । द्वयमिदं क्लीबे । अतिशयेन अस्थीनि सन्त्यस्मिन्निति अष्ठीवत्प्रभृतय इति निपातः ॥२२१

(२२२) सक्थि क्लीबे पुमानूरु-(२२३)स्तत्सन्धिः पुंसि वङ्क्षणः।
(२२४) गुदन्त्वपानं पायुर्ना (२२५) वस्तिर्नाभेरधो द्वयोः।
(२२६) कटो ना श्रोणिफलकं कटिः श्रोणी ककुद्मती।
(२२७) पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः।

---

सेति। भुति द्वयं जानूपरिभागे। उरत इति ख्याते। सञ्ज सङ्गे आसज्यते वस्त्रमस्मिन् कथिन्। अर्त्तेरुच्चेति कुः उत्वञ्च। ह्रस्वादिरपि ॥२२२

ऊरुसन्धिर्वङ्क्षणः। वजिगतौ सनः ॥२२३

गुदमिति। त्रयं गुदे, विष्टानिर्गमसमार्गे। गुदेः कः। अपानन्त्यनेन घञ् "हृदि प्राणो गुदेऽपानः इति स्मृतेः। अपानयोगादपानं अर्श-आदित्वादत्। अपानन्तु गुदे क्लीवं पुंसि स्यात्तस्य मारुत" इति मेदिनी। पिबन्ति त्यजन्ति अनेन छ्वापेत्यादिना उण् ॥२२४

वेति। नाभेरधोमूत्राश्रयपुटो वस्तिः। वस आच्छादने क्तिः वस्तिरिति मूत्राशयोपुटो वस्तिरिति शाश्वतः ॥२२५

केति पञ्च कट्यां। श्रोणिरेव श्रोणिफलकम्। कटेरिः। श्रृणोतेर्निः। ककुद् वृषाङ्गं तदाकारमांसपिण्डवत्त्वात् ककुद्मती। अन्ये तु—"कटो नितम्बफलकमपानं पायुरुच्यते। पायूाश्रयः। श्रोणी जघनञ्च ककुद्मती"ति भागुरिदर्शनात् द्वयमिदं श्रोणिफलके। श्रोण्याः फलकाकृतित्वात् त्रयं श्राण्यामाहुः। अयं पुनरनेकार्थे गजगण्डकटीकटाविति अभेदेन दर्शितत्वात् ॥२२६

पेति। स्त्रीकट्याः पश्चाद्भागो नितम्बः। नि विशेषेण ताम्यति क्वन्। अन्यत्रास्य प्रयोगो गौणः। विश्वन्तु—"नितम्बो रोधसि स्कन्धे शिखरेऽपि कटीरक" इति सामान्येनाह। कटिधारकः कटीरः स्यादिति शेषः। स्त्रीकट्या अग्रभागो जघनम्। जंघन्यतेऽङ्ग पृषोदरादिः ॥२२७

# प्रणव-पारिजातः

( संस्कृत-मासिकपत्रम् )

त्रयोदशवर्षम्, द्वितीयसंख्या ] [आश्विनमासः १८६२ शकाब्दः


## श्रीश्रीचण्डी-स्तोत्रम्

निबन्धकः—श्रीरवीन्द्रकुमारसिद्धान्तशास्त्री

ब्रह्माण्डं शशिभास्करादिसहितं नक्षत्रपुञ्जैर्वृतं
या संव्याप्य विराजते सुनियतं नीहारिकासङ्कुलम् ।
सूक्ष्मं देहमवाप्य विश्वजननी सैवात्र चित्ते नृणा-
मास्ते नित्यमसाध्यसाधनकरी कैलासनाथप्रिया ॥१

कामाद्या रिपवो मनुष्यहृदये लब्ध्वा स्थितिं शाश्वतीं
नित्यं तं मनुजं कुकार्य्यकरणे प्रोत्साहयन्ति द्रुतम् ।
देवी विश्वमयी त्रिलोकजननी प्रज्ञानरूपाश्रिता
भक्तं पातु विवेकबाणनिवहैर्विद्राव्य तान् लीलया ॥२

या मे चित्तसुधाब्धिपूतसलिले चैतन्यपद्मासने
देवी ब्रह्ममयी प्रभा-मणिमये रत्नासने राजते ।
दीप्त्या भास्वरया सुरारिनिवहान् भोगादिदेहाश्रितान्
क्षिप्त्वा दूरतरं वराभयकरैः संरक्ष्य भक्तान्नरान् ॥३

सा ब्रह्मेन्द्रमहेशविष्णुनमिता रक्षोगणैरर्चिता
दैत्यत्रासकरी स्तुता सुरनरैः सिद्धर्षिभिः सेविता ।
भक्तत्राणकरी गणेशजननी वाणी सुराणां श्रिता
पायान्मामपकार्यलक्ष्मलिनं पृथ्वीञ्च भारान्विताम् ॥४

शुम्भादिदैत्यदलनी श्रुतिगीतिसंस्था
यज्ञेषु दिव्यविभवैर्मुनिभिः स्तुता या
ऐश्वर्य्यभास्वरतनुर्धृतसर्पपाशा
सा पातु मानवकुलं कलुषौघराशेः ॥५

या सिंहमासनवरं समधिष्ठिताद्रेः
शीर्षे स्थिता सुरगणान् पतितान् विपत्तौ ।
दिव्यैर्वरैरतितरामकरोत् कृतार्थान्
त्रैलोक्यमङ्गलवपुः कुरुतां हितं सा ॥६

दैत्यार्दितैः सुरगणैर्गिरिराजपृष्ठे
दिव्यैः स्तवैरखिलविश्वहितार्थमद्धा ।
या संस्तुता वरमदाज्जगतां प्रसूः प्राक्
सा पातु पापमतिकं मनुजाधमं माम् ॥७

दुर्भाग्यसागरजले पतितं हताशं
सर्व्वस्वनाशमलिनं हतकीर्त्तिराशिम् ।
चण्डी त्रिलोकजननी कृतकल्मषं मां
पायात् कृपापरवशा सततं विपत्तेः ॥८

धरणि-रचनकाले पद्मयोनिं प्रपन्नं
दनुजभयविषण्णं योगनिद्रास्वरूपा ।
अशुभनिवहराशेर्या ररक्षादिदेवी
भुवनमवतु सेयं चण्डिका लोकमाता ॥६

महिषदनुजतापैः पीड़ितः सुरसङ्घ-
स्त्रिभुवनजननी यामाश्रयं प्रागगच्छत् ।
अवितुमखिलविश्वं स्तोत्रसङ्घैर्व्वरेण्यै-
र्मनुजनिवहमाद्या त्रायतां सा भवानी ॥१०

जलधिसलिलमग्नं यानहीनं निराशं
गहनविपिनयातं वेष्टितं हिंस्रसङ्घैः ।
दवदहनपरीतं दस्युहस्तङ्गतं वा
सकलमिह विपन्नं चण्डिका पातु नित्यम् ॥११

उरगमुखगतं वा व्याधिभिर्वापि खिन्नं
शमनभवनतुल्यं राजरोपङ्गतं वा ।

निखिलमनुजसङ्घं त्रायतां विष्णुमाया
कलुषसलिलमग्नं माञ्च नित्यं हताशम् ॥१२

—०—

## मातृगाथा

### पञ्चविंश उल्लासः

ग्रन्थकारः—श्रीश्रीठाकुरसीतारामदासोङ्कारनाथः

सदानन्दमयि मातः ! करुणामय गुरो !

पश्य मातः, सहस्रकरस्य तव कथाश्रवणाद् गानमेकं ये मनःपथे पान्थायते ।

ब्रूहि—

मूर्तिमिमां मनो रे न जानामि कीदृशीम् ।
इयमेव ससर्ज रे एतद्विश्वरचनाम् ।
एवं दृश्यमनुभवितुं कः शक्नोति मनो रे !
दशभुजां समीक्ष्य किं भावयामि रूपस्य शेषमिमम्,
हृदि पश्यति पश्यसि रे तदनन्तवेशः ।
सा ह्यनन्तस्वरूपा कदाचिद्वा चित्स्वरूपा,
क्वचिदाकाशरूपा क्वचिदस्याः प्रकाशोऽनन्तजगदाकृत्या ॥
सहस्रबाहुषु धत्ते सहस्रप्रहरणं,
सहस्रचरणैः करोत्यजस्रविचरणम् ।
अत्ति सहस्रवदनैः पश्यत्यजस्रनयनैः,
कथां शृणोति सहस्रश्रवणैः रे ॥
असत्सु सहस्रशिरःसु किमबोध प्राण रे !
एवं गौरवे करोति सहस्रधारायां स्नानं रे !
सहस्रभारविशिष्टा सहजध्यानसुगोचरा,
साहर्निशं वसति रे तव सहस्रारे ? ,

अज्ञानेन विभ्रान्ताय मनो रे आज्ञानातीन्द्रजालम्,
कदा कालीरूपेण करे धत्ते करालकरवालम्।
कदा वा भवति सीता, प्रकृते किन्तु किमपि नेति;
ब्रह्मादिरपि मायां बोद्धुं न शक्नोति।
अद्य पश्यसि दुर्गारूपेण गोविन्दसकाशमागच्छति,
श्वो द्रक्ष्यसि राधारूपेण गोविन्दसकाशमागच्छति,
अतो ब्रवीमि काया रे समस्ता मिथ्या माया,
विस्फुरिते ज्ञानालोके सा लुक्कायते ओङ्कारे॥

एकनिष्ठो भक्तो यदि न भवति, तर्हि मे प्रकृतं तत्त्वं बोद्धुं न कोऽपि शक्नोति। गोविन्दस्य भक्तेरुपमा नासीत्।

हम ! ततः महासरस्वतीरूपेण कथं त्वमाविर्बभूव ?

मेधा ऋषिः राजानं सुरथं तथा वैश्यमुवाच—

पुरा शुम्भो निशुम्भः इति असुरद्वयं बलं गर्वञ्चाश्रित्य शचीपतेरिन्द्रस्य त्रिभुवनस्य आधिपत्यं यज्ञभागञ्च हृतवान्। तौ चन्द्रस्य सूर्य्यस्य कुबेरस्य सोमस्य वरुणस्य वायोरग्नेश्च अधिकारमादाय तेषां कर्त्तव्यमाहरताम्। तदा देवा अधिकाररहिता राज्यभ्रष्टाः पराजिता बभूवुः। सर्वे देवाः ताभ्यां विताड़िताः सन्तः अपराजितां तं देवीं सम्यक् सस्मरुः। महिषासुरं हत्वा अस्माभिः देव्यां स्तुतायां सत्यां सा अब्रवीत्—विपदि युष्माभिः स्मृता अहं वः विपदं हरामि। इत्थं चिन्तयित्वा गिरिराजं हिमालयं गत्वा विष्णुमायाम् उत्तमरूपेण ते अस्तुवन्।—

नमो देव्यै महादेव्यै शिवायै सततं नमः।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम्॥
रौद्रायै नमो नित्यायै गौर्य्यै धात्र्यै नमो नमः।
ज्योत्स्नायै चेन्दुरूपिण्यै सुखायै सततं नमः॥
कल्याण्यै प्रणता वृद्ध्यै सिद्ध्यै कुर्मो नमो नमः।
नैऋत्यै भूभृतां लक्ष्म्यै सर्वाण्यै ते नमो नमः॥
दुर्गायै दुर्गपारायै सारायै सर्वकारिण्यै।

ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः ॥
अतिसौम्यातिरौद्रायै नतास्तस्यै नमो नमः ।
नमो जगत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः ॥
या देवी सर्वभूतेषु चेतनेत्यभिधीयते ।
नमोस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥
या देवी सर्वभूतेषु बुद्धिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

इत्थं निद्राक्षुधाच्छायाशक्तितृष्णाक्षान्तिजातिलज्जाशान्तिश्रद्धाकान्ति-लक्ष्मीवृत्तिस्मृतिदयातुष्टि-मातृभ्रान्तिरूपेण या देवी अवस्थिता, नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः। या सर्वेषु प्राणिषु इन्द्रियाणामधिष्ठात्री-रूपेण विराजिता, या पृथिव्यादीनां पञ्चानां स्थूलभूतानां पञ्चानां सूक्ष्मभूतानां प्रेरयित्री, नमस्तस्यै नमस्तस्यै। या चिच्छक्तिरूपेण समग्रं जगतं परिव्याप्य अवस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः। ब्रह्मादयो देवाः मामस्तुवन्, देवराजः इन्द्रश्च महिषासुरवधरूपेष्टप्राप्तेः परं प्रतिदिनं मां पूजयति अधुनैव उद्धतैः दानवैर्निपीड़िताः सन्तः वयं यां स्तुमहः मां भक्त्या अवनतदेहेन च अस्माभिः स्मृतायां सत्यां सा देवी अस्माकं सर्वां विपदं हरति! सा मङ्गलमयी भगवती अस्माकं मङ्गलं करोतु, अस्माकं विपदं विनाशयतु।

अतः परं किमभून्मातः ?

मेधा ऋषिः राजानमब्रवीत्—भोः नृपनन्दन! देवाः यदा इत्थं स्तुवन्ति, तदा महादेवी पार्वती गङ्गायां स्नानार्थमागम्य इन्द्रादीन् सुरगणानपृच्छन्—यूयं कां स्तुथ? तस्मिन्नेव समये देव्याः शरीरात् आद्या शक्तिः शिवा आविर्भूता सती अब्रवीत्—शुम्भेन निशुम्भेन च विताड़िताः पराजिताः देवाः मां स्तुवन्ति। पार्वतीदेव्याः देहकोषात् अम्बिका उत्पन्ना, अतः सा कौशिकीत्यभिधीयते। तस्याः निर्ग-मादनन्तरं परदेवी पार्वती कृष्णवर्णा सती हिमालये स्थित्वा कालिका नाम्ना प्रसिद्धाभूत्। अनन्तरं रमणीयमूर्त्तिधारिणीमम्बिकामवलोक्य

शुम्भनिशुम्भयोरनुचरश्चण्ड-मुण्डयोः समीपे तस्याः कमनीय-रूपं वर्णयति स्म शुम्भः एतदाकर्ण्य सुग्रीवः इत्यभिधेयमनुचरं प्रेरयत्। शुम्भः निशुम्भश्च तस्यै स्पृहयतः इति—स देव्यै निवेदितवान्। देवी सम्मता न भवति। अपि च साब्रवीत्—यो मां युद्धे पराजेष्यति, तमहं पतित्वेन वरिष्यामि। दूतः प्रत्यागम्य शुम्भाय सर्वं निवेदितवान्। तदा शुम्भः धूम्रलोचनं प्रेरयति स्म। तस्मिन् निहते सति शुम्भ-निशुम्भौ योद्धुमागच्छतः। देव्या तयोः संहृतयोः देवाः तां स्तुवन्ति। ततस्तुता देवी उवाच—वरं वृणु। सर्वे सुराः अप्रार्थयन्—त्वमधुना यथा शत्रूनहन्, भविष्यति काले च तथा कुरु। देवी तथास्त्विति कथयित्वा—अवदीत्—

इत्थं यदा यदा बाधा दानवोत्था भविष्यति।
तदा तदावतीर्य्याहं करिष्याम्यरिसंक्षयम्॥

—एवं यस्मिन्नेव काले दानवोत्थिता बाधा भविष्यति, तस्मिन्नेव समये अहमाविर्भूता सती देवशत्रून् असुरान् हनिष्यामि। ऋषिः सुविस्तरेण शुम्भनिशुम्भवधवृत्तान्तं सुरथराज्ञे समाधि वैश्याय चोक्तवान्। ततस्ताभ्यां नद्यास्तीरे मम मृन्मयीं मूर्त्ति स्थापयित्वा वत्सरत्रयं यावत् कठोरां तपस्यां गन्ध-पुष्प-धूप-दीप-नैवेद्य-स्वगात्ररुधिरैः मयि पूजिते सति अहं ताभ्यां दर्शनं दत्तवती। सुरथः जन्मान्तरे सावर्णिमनुत्वं चिरस्थायि राज्यं जन्मन्यस्मिन् च स्वकीयेन शक्तिप्रभावेण अपहृतं राज्यमुद्धर्त्तुं वरं, समाधिश्च तत्त्वज्ञानमप्रार्थयत्, ताभ्यामहं वाञ्छितं वरं प्रदाय अन्तर्हिता भवामि। त्वं श्रुतवान् -महाकालीरूपेण महालक्ष्मीरूपेण महासरस्वतीरूपेण च यां लीलालहरीमहमकरवम्।

लीलेयं कस्मिन् ग्रन्थे विधृतास्ति मातः?

देवीमाहात्म्ये। तत्र केवलं युद्धं, केवलं युद्धम्!

केवलं युद्धमिति तु न—स्तवोऽपि विद्यते। अहं शरणागतपालिनी, अहं शरणागतं पालयामि।

एकनिष्ठभावेन ये भजनकारिणः, ते यदि भोगं मोक्षं वा यत् किमपि वस्तु याचन्ते, तर्हि तेभ्योऽहं तत्तत् प्रयच्छामि। का ते प्रार्थना?

अहं मातरं प्रार्थयामि।

उत्तमम्, केवलं मातर्मातरिति ब्रूहि, तथा सति मां समाप्नोषि।

मातर्मातर्मातः! मातर्मातर्मातः!

—०—

## साम्यसागरकल्लोलम्

( रूपकम् )

निबन्धकः—श्रीश्रीजीवन्यायतीर्थः

( पूर्वतोऽनुवृत्तम् )

गण०। कथं न श्रमिकारण्यमध्येऽवरोधितास्ते पुरुषाः? यूयं कापुरुषा! रुषा परुषतामालम्ब्य ते चालका रोद्धव्याः पदबद्धगर्दभसमाः, सन्ताड़नीयास्ततः। आघातान्निपतेत्तु निर्झरनिभं शैलादिव स्वामिनः पार्श्वाद् वित्तमिदं हि नीतिरतुला साम्योज्ज्वला मादृशाम्।

[ नेपथ्ये महान् कलकलः ]

श्रमिकः। कामरते! पश्य सहस्रशः श्रमिकाः कर्मच्युतास्तत्र दर्शनमाकाङ्क्षन्ति।

गण०। कथय श्रमिकान् यथा हिंसापूर्णमान्दोलनं मा हीयताम्। फलमवश्यमस्माभिः प्राप्तव्यम्। अहं व्यापृतोऽस्मि युष्माकमेव कर्मसु।

श्रमि०। यथादेशं कथयामि। ( निष्क्रम्य पुनः प्रविश्य )

कामरते! हिंसामयान्दोलनफलं परिणमति यन्त्रालयानां रोधः। कृते कर्मस्थानरोधे धनिस्वामिनि दूरं पलायिते परिचालकेषु चान्तर्हितेषु यन्त्रालयभित्तिषु शिरः कुट्टनमेव नः परिशिष्यते। ततश्चारक्षाणां यष्टिप्रहारः आग्नेयशोलिकाघातश्च प्रायशो लभ्यतेऽस्माभिः।

गण० । आरक्षपुरुषाः प्रतिहारेण निवर्त्तयितव्याः । अयमेव गणशक्ते विस्फूर्जथुः ।

श्रमि० । परस्परमाक्रमतां पक्षद्वयेऽपि बहूनां मरणमापतेत् ।

गण० । मरणं मारणञ्च चिरवाञ्छिता साम्यनीतेर्भित्तिभूमिः ।

श्रमि० । मरणमस्माकं भोग्यं फलञ्च भवादृशैः ।

गण० । ( रोषमभिनीय ) इयं कापुरुषाणामुक्तिः । वीरा युद्धे मरणं श्लाघ्यं मन्यन्ते ।

कर्षकः । अरे स्वार्थपर श्रमिक ! नेतारमाक्रामसि ? सत्यं कथयति नेता । युद्धं विना मरणं विना न भवेत् साम्यप्रतिष्ठा ।

श्रमि० । अरे कर्षक ! भूमिहीनस्त्वं नेतुरस्य कृपया सम्प्रति क्षेत्रस्वामी भवसि ! अतो नेतरि भक्तिस्ते महती दृश्यते । त्वं तिष्ठ निर्वाक् । कृषिक्षेत्रे नास्ति तथा मारणं मरणं वा ।

कर्षक । अरे श्रमिक ! किं कथयसि ? नास्ति कृषिक्षेत्रे युद्धमिति ? अरे मूढ़ ! भूरितरभूम्यधिकारिणा समं नियतमस्माकं प्रचलति संघर्षः ।

श्रमि० । तूष्णीमास्स्व । जानामि वः सौभाग्यम्, न तु संघर्षम् ।

स्वाधीनो भूमिभोगेन भूरिशस्यागमेन च ।
जनयन् स्वजनास्येषु हास्यरेखां प्रसीदसि ?

वयन्तु,

म्रियेमहि विना भोज्यं यन्त्रालयनियन्त्रणात् ।
आधिदीनाः पराधीनाः स्वजनाश्रुप्रवर्त्तकाः ॥

( नेपथ्ये—कलकलः )

गण० । कर्षक ! ज्ञायतां किमेतत् ?

कर्षक । यथादिशति भवान् । ( इति निष्क्रम्य पुनः प्रविश्य )

गण० । बहवः कर्षका भूमिलाभाय भवत्साक्षात्कारमर्थयन्ते ।

गण० । उच्यन्तां कर्षकाः सर्वेषां युष्माकं कृते भूमिसंग्रहव्यापारे निरतोऽस्मि । नास्ति मेऽवसर इति ।

( तारस्वरम् )

कर्ष०। भोः भोः कर्षकाः ! सर्वेषां युष्माकं कृते भूमिसंग्रहे निरतः श्रीमान् गणनाथः, नावसरं लभते साक्षात्काराय।

( नेपथ्ये—उच्चैः गायन्ति )—

कृषिविद्रोहः कृषिसंग्रामः
प्रसरतु सततं ग्रामाद् ग्रामम्।
पुष्कलकृषिभिः पूरितकामं
भारतवर्षं भवतु श्यामम्।

श्रमि०। भोः कर्षक ! किं त्वमस्मभ्यं भूमिभागं प्रदास्यसि नः प्राणरक्षणाय।

कर्ष०। किं त्वं श्रमार्जितधनभागं कदापि मादृशेभ्यो दत्तवानसि ?

श्रमि०। अनशनक्लेशमसहमाना निरुपायतया युस्मान् हत्वा युष्मद्-भोग्यभूमिमधिकरिष्यामः। जीवितुमिच्छामः जीवितु-मिच्छामः।

कर्ष०। वयमपि प्रहारेण युष्मान् दूरीकरिष्यामः। स्वप्राणरक्षणाय।

श्रमि०। आगच्छ रे, बलदर्पित कृषक ! भवतु परीक्षितोऽधुनैव युस्मद्-विक्रमः। ( इत्यन्योन्यं प्रहर्त्तुमुपक्रान्तौ )

गण०। ( स्वागतम् ) अहो ! किं यतिवचनं सत्यं भवेत् ? ( प्रकाशम् ) कोऽयं युवयोर्व्यामोहः ? स्वगणेषु क्रियते कलहः ? ( इति मध्ये तिष्ठति )

श्रमि०। गृहयुद्धं भवतैव प्रवर्त्तितं समर्थितं च, तदेव क्रियते।

कर्ष०। दात्रेणैतेन श्रमिकस्य गलकर्त्तणं करोमि। गृहयुद्धमारब्धं भवतु। मुञ्चैनम्।

श्रमि०। अहमपि मदीयमुद्गरेण ते मुण्डं चूर्णयामि। अपसरतु भवान्, पश्यतु श्रमिकरोषस्य फलमेष कर्षकः।

गण०। अरे गणसैनिकाः क्व तिष्ठत यूयं निश्चेष्टाः ? आगच्छत निवारयत स्वजनविरोधम्।

( नेपथ्ये वम्निर्घोषः )

( गणसैनिकाः प्रविशन्ति, )

गण० । निवारयत भोः सैनिकाः श्रमिक कर्षकसंघर्षम् ।

[ गणसैनिकास्तयोरन्तरा स्थितिं नाटयन्तो गायन्ति ]

जय जय विप्लव ! जय विद्रोह
त्रुट्यतु भारतजनगणमोहः ।
श्रमिकजनानां कुरु संघटनं
कर्षकहर्षद-नवभूहरणं
मारय धनिनः करधृतलोहः ॥

इति प्रथममुखसन्धिः ॥

—( क्रमशः )

## भ्रमसंशोधनम्

श्रावणमासस्य प्रणवपारिजात-पत्रिकायां श्रीरवीन्द्रकुमारसिद्धान्ता-शास्त्रि-विरचिते "श्रीश्रीनारायणस्तोत्रम्" इत्यस्मिन् प्रबन्धे अधःप्रकार मुद्राकरप्रमादाः सञ्जाताः ।

| | मुद्रितपाठः | शुद्धपाठः |
|---|---|---|
| १म श्लोकः | विश्वादिरनादिपुरुषः | विश्वादिरनादिरादिपुरुषः |
| २य ,, ३य पंक्तिः | देवं देवमुखं | देवं वेदमुखम् |
| ७म ,, २य ,, | निखिलाद्यहन्त | निखिलाघहन्ता |
| ११श ,, २य ,, | सर्व्वततकर्म्महीनश्च | सर्व्वसत्कर्म्महीनश्च |

—०—

# नलोदयाभः

निबन्धकः—श्रीपुलिनविहारी वेदान्ततीर्थः

( पूर्वतोऽनुवृत्ता )

अयि मम दमयन्ति ! श्रूयतां मे वचोऽत्र
मनसिजविकृतिर्मां बाधते हन्यतां सः ।
अनयदतिविमानं प्रोच्यतां सौधमेवं
स्मर-कृतिमय-चित्रैः शोभितं कामगेहम् ॥१०

न कमलदलगामिन्यर्कतो रक्तिमाभा,
शयनगिरिगताद् गोधूलिवेलागमेन ।
यदिरविरधुना तद्गामिहस्तान् प्रसार्य्य,
विहरति खलु तेन स्तेन इत्येष बोध्यः ॥११

तपन किरणजालं चापयातं यतोऽथ,
गहन तिमिरजालं तत्र तत्रागमद्द्राक् ।
क्षण-समयसमूहैरावृतः पश्यतोऽर्कः,
परिगतमधुसायं पक्षिसंघश्च कूज ॥१२

उडुचय उदातिष्ठन्मेषपाला गृहाय
प्रतिगमनपरा आसन्नभःस्थो जहास ।
अथ जलनिधिगर्भादागमच्चन्द्र ऊर्द्ध्वं
घट इव रतिकान्तस्य श्रिया पूर्व्वया च ॥१३

हृदयमदविवृद्धिं कारयन्तं कृतान्तं
पथिकजनगणानां कृष्णमङ्कं दधानम् ।
व्यथितविरहिनीनां चन्द्रमेवं समक्षं
समभिलषति नक्तं का च तं द्रष्टुकामा ? ॥१४

अथ हिमकणगर्भा कौमुदी बोधयित्वा
कुमुदनिकरमुर्व्यां शर्व्वरीवल्लभस्य ।

अहसदिव समन्तान्नायका नायिकानां
मधुरविनयवाग्भिश्चेत आनिन्युरीप्सु ॥१५
असह्मदनबाणैः पीड्यमानाः स्मितास्याः
प्रणयिन इव देवा दानवैः सार्द्धमासन् ।
अमियमथ पपुः प्राङ्मद्यपानप्रमत्ताः
प्रलपित-कृतनानाहावभावप्रसक्ताः ॥१६
फलमभवदमीषां मद्यपानाद् विचित्र
यदवशगतया कामिन्य एतत्पतीनाम् ।
निजमतविमुखा या आसतस्ता इदानीं
स्वमतविषयवश्यास्ताः सुमुख्यः प्रसन्नाः ॥१७
यदपि च मधुपानात् पूर्व्वमासन् स्ववश्याः
सपदि तत इमा याः शृङ्खलावर्ज्जितास्ताः ।
हृदिमदनत उद्रिक्तं निमेषादपूर्व्वं
शतश उपचितं सौन्दर्य्यमासीत् श्रियां तत् ॥१८
अगणितमधुपा आगत्य तस्थु संधूनां
चषकनिवहशीर्षे त्वर्य्यमाणा यदा च ।
युवकयुवतिवर्गा मद्यपाने प्रवृत्तो
झटिति तत इमेऽधावंस्तदा सानुरागाः ॥१९
अकृषत मदिरात आग एषां तथासां
निरसनमथ कृत्वा तस्य विस्मृत्य दोषान् ।
शयनभवनतालपान्याश्रिता यान्युरूणि,
प्रभवति मदिराबुद्धेर्व्विभिन्ना च चेष्टा ॥२०
सजलधिवसुमत्यां कामनीयोपभोग्य-
गुणगरिमभिरन्या आसतातीत्य या याः ।
निपुणविलसितास्या योषितः प्रेमिकास्ता
अकृषत रतिनाथ-श्रीविलासानपूर्व्वान् ॥२१

—क्रमशः

# श्रीमद्भगवद्गीतायां भक्ति-कर्म्मवादौ

( निवन्धकः—अध्यापकः श्रीरवीन्द्रकुमारसिद्धान्तशास्त्री )

( पूर्वतोऽनुवृत्तम् )

"भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषाञ्च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥
अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥" इति ।

अर्ज्जुनस्तु तदानीमेतावतैव दयापारवश्येनाभिभूतो यदेतयाप्युक्त्या नासौ भावान्तरं प्रापितः । अथ तथा जड़ीभूतमेनं केन प्रकारेण प्रधने प्रवर्त्तयिष्यतीति विचिन्त्य तदा भगवान् लोभप्रदर्शनेनापि स्वाभीष्टसिद्धिं विधातुं यतितवान् प्राक् समराकरणे स्वधर्म्महानिर्लोकनिन्दा च भविष्यत इति कथितमधुना तु संग्रामकरणे स्वर्गप्राप्ती राज्यलाभश्च स्यातामिति गदित्वा स राज्यलोभेन स्वर्गलोभेन चैनं लोभयितुमियेष । ननु संग्रामप्रवृत्तेषु वीरेषु केचन श्रियन्ते, अन्ये च त्रियन्ते जयलक्ष्म्या । अतो भवतु विजयिनः सफल एव संग्रामस्तत्र हतस्य कथं समरे सार्थकता स्यादिति प्रश्नः स्वत एव सञ्जातुमर्हति वीराणामितरेषाञ्च चेतसि । किमसौ तदा मृत्युभयेन भीतः, उत मृत्युना किमपि फलं न भविष्यतीति मत्वा समराद् विरतः, इति चिन्ताचक्रमारुढ़ो भगवान् श्रीकृष्णः संग्रामे निहतस्यापि ध्रुवमेवाक्षयः स्वर्गवासो भवतीति पार्थं पुनः प्रतिबोधितवान् । उक्तञ्च तेन, संग्रामे निहताः शूराः स्वर्गजयिनस्तत्र विजयिनश्च मर्त्त्यराज्य जयिनो भवन्तीति न केनापि वीरेण संग्रामाद् विरमितव्यमिति त्वमपि प्रवृत्तो भव संग्रामाय, तत्र चेज् जेष्यामि तदा स्वराज्यं लप्स्यसे, अथ चेन्मरिष्यसि, तदापि भवेत्तव ध्रुवमेवाक्षयस्वर्गवास इति । अत्रायं श्लोकः—

"हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय ! युद्धाय कृतनिश्चयः ।" इति ।

# निवेदनम्

करुणावरुणालय-परमेश्वरस्य महत्यानुकम्पया सौरभाद्रमासतः (१३७७) प्रणवपारिजातस्य त्रयोदशवर्षारम्भः। तेन सहृदय-पाठक-वर्गाणां सविधे सविनयनिवेदनं यत्, ते सर्वे प्रणवपारिजातस्य वार्षिको-पायनं मुद्रात्रयं मण्यादेशिन्या (मणिअर्डार) अधोलिखित-कार्य्यालये प्रेषयन्त्विति। मण्यादेशिनी-पत्रे ग्राहकसंख्या अवश्यमुल्लेखनीया। नूतन-ग्राहकगणैस्तत्र "नूतन" शब्दो व्यवहर्तव्यः। श्रीभगवान् समेषां मङ्गलं विदधात्विति शम्।

श्रीरामरञ्जनकाव्य-व्याकरणतीर्थः
श्रीसीतारामवैदिकमहाविद्यालयः
७२ पि. डब्लिउ. डि. रोड्
कलिकाता— ३५

# নিবেদন

করুণাবরুণালয় পরমেশ্বরের মহতী অনুকম্পায় (১৩৭৭) ভাদ্রমাস হইতে প্রণবপারিজাতের ত্রয়োদশ বর্ষ আরম্ভ। সহৃদয় পাঠক-পাঠিকাগণের নিকট বিনীত নিবেদন এই যে, তাঁহারা "প্রণবপারিজাতের" বার্ষিক উপায়ন ৩'০০ তিন টাকা নিম্নলিখিত ঠিকানায় পাঠাইয়া বাধিত করুন। মণি অর্ডারের কুপণে অবশ্যই গ্রাহক নম্বর উল্লেখ করিবেন। নূতন গ্রাহক যাঁহারা হইবেন, তাঁহারা 'নূতন' এই শব্দটি ব্যবহার করিবেন। শ্রীভগবান্ সকলের মঙ্গল করুন।

শ্রীরামরঞ্জনকাব্য-ব্যাকরণতীর্থ
শ্রীসীতারামবৈদিক মহাবিদ্যালয়
৭।২, পি, ডব্লিউ, ডি, রোড,
কলিকাতা-৩৫

१८८। किं-किलास्त्यर्थयोर्योगे तु कल्किः॥

विध्यपवादः। नावकल्पयामि किं, किल कृष्णेतरोऽग्रपूजां लप्स्यते। एव न मर्षयामि, न प्रत्येमि, अस्ति नाम कृष्णेतर इत्यादि।

१८९। यद्-यदि-यदा-जातु-योगे विधिः॥

कल्क्यपवादः। न श्रद्दधे, न क्षमे। भवानपि कृष्णवद् यत् पूज्येत यदि पूज्येत। एवं यदा जातु।

१९०। यच्च-यत्रयोश्च विधिः॥

कल्क्यपवादः। न श्रद्दधे न क्षमे यच्च कृष्णवदितरः पूज्येत यत्र वा। अश्रद्धामर्षौ निवृत्तौ।

१९१। यच्च-यत्रयोगे गर्हायां विधिराश्चर्य्ये च॥

सर्व्वापवादः। यच्च भवान् कृष्णपक्षं विमुञ्चेत्तदेतदन्याय्यम्। यत्रेत्यादि, तथा यच्चेत्यादि, तदेतदाश्चर्य्यम्॥

१९२। यच्च-यत्राभ्यामन्यत्रोपपदे त्वाश्चर्य्यावगतौ कल्किर्यदिं विना॥

चित्रं कृष्णेतरः सर्व्वं वशयिष्यति। यदि प्रयोगे तु चित्रं यदि

---

१८८। किं-किल। अश्रद्धामर्षयोर्गम्यमानयोः किंकिलशब्दस्य अस्त्यर्थस्य च योगे तु कल्किः स्यात्। नावकल्पयामीति न सम्भावयामीत्यर्थः॥

१८९। यद्यदि। अश्रद्धामर्षयोर्गम्यमानयोर्यदादियोगे कालसामान्ये विधिः स्यात्। यद्यादिसाहचर्य्यात् यदित्यव्ययमेव गृह्यते इति ज्ञेयम्। न श्रद्दध इति कृष्णेतरं प्रति कोऽपि कथयति॥

१९०। यच्च। अश्रद्धामर्षयोर्गम्यमानयोर्यच्च यत्रयोश्च योगे कालसामान्ये विधिः स्यात्।

१९१। आश्चर्य्ये च गम्यमाने यच्च-यत्रयोगे विधिः स्यात्। अन्याय्यमनुचितम्। एवं यत्रेत्यादि। तथा यच्च भवान् कृष्णपक्षं विमुञ्चेत् तदेतदाश्चर्य्यमिति।

१९२। यच्च। आश्चर्य्यावगतौ अर्थे यदिं विना यच्च-यत्राभ्यामन्यस्मिन्नुपपदे सति कालसामान्ये कल्किः स्यात्। चित्रम् आश्चर्य्यम्। वशयिष्यतीति वशं करिष्यतीत्यर्थः। स कृष्णेतरः। वशयेदिति यद्यदि-यदा-जातु-

स वशयेत्। उक्तोऽजितविकल्पः। अत्र पूर्वत्र च यत्र विधिविषयत्वा-भावस्तत्र क्रियातिपत्तौ नाजितस्तद्विषयत्वे तु यथोचितं ज्ञेयम् ॥

॥ इति कालसामान्यं निवृत्तम् ॥

१६३। धातुसम्बन्धे प्रत्ययाः ॥

द्वयोर्धात्वर्थयोर्विशेषणविशेष्यभावे सति भिन्नकाला अपि प्रत्यया साधवो भवन्ति। कृष्णोऽयं मथुरां गतः श्वो भविता। मथुराय वसन् यादवान् ददर्श। एवं वर्त्तमाने तद्धितमतौ, कृष्णभक्तिमान भविता। अत्रास्य गमनक्रिया स्वसत्तायुक्ता भविष्यति, इत्याद्यर्थे लब्धेषु गमनादेर्विशेष्यत्वं सत्तादेर्विशेषणत्वं सिध्यति। सोमयाजी त पुत्रो जनिता—इत्यत्र च जनिना जननक्रियान्तरसत्तोच्यते ॥

१६४। क्रियासमभिहारे कालत्रयेऽपि विधाता, तस्य हि-स्वा तौ च तध्वं-विषये वा ॥

---

योगे विधिरित्यनेन विधिः। अत्रेति। क्रियातिपत्ताविति क्रियातिपत्तावपीत्यर्थः तद्विषयत्वे विधिविषयत्वे। यथोचितमिति कदाचिन्नित्यत्वेन कदाचिद्विकल्पेनेत्यर्थः। ज्ञेयमिति अजितविधानमित्यर्थः ॥

॥ इति कालसामान्यं निवृत्तम् ॥

१६३। धातु। धातुसम्बन्ध इत्यस्यार्थमाह द्वयोर्धात्वर्थयो र्विशेषणविशे ष्यभावः। कृष्णोऽयमिति गत इति भूते, भवितेति भविष्यति। मथुरायामि वसन्निति वर्त्तमाने ददर्शेति भूते। वासो दर्शनयुक्त इति वासस्य विशेष्यत्वं कृ भक्तिमानिति वर्त्तमाने, भवितेति भविष्यति। भक्तिमत्त्वं सत्तायुक्तम्। भवि तीति भक्तिमत्त्वस्य विशेष्यत्वं सत्ताया विशेषणत्वम्। भक्तिरस्यास्तीत्यर्थे विधानात् मतुप्रत्ययस्य क्रियार्थता। अतो भक्तिमत्त्वस्य धात्वर्थवाचकत्व अस्य कृष्णस्य। सोमयाजीति। जनिना जनधातुना जननक्रियायामन अन्तर्भूता सत्ता उच्यते। ततश्च तव पुत्रस्य सोमयजनं सत्तायुक्तं भविष्यतीति अत्र सोमयजनस्य विशेष्यत्वं सत्ताया विशेषणत्वम्। सोमयाजीति भू करणे यजो णिनिरिति णिनिः। जनितेति भविष्यति।

ततः इत्येव शब्दः प्रयुज्यते। तदनन्तरं यथार्हं तद्धातुपदानुप्रयोगः। कर्त्तृ-कर्म्मणोः प्रयोगस्तु तत्पूर्व्वतस्तत्परतो वा। क्रियायाः समभिहारः पौनःपुन्यमतिशयश्च। तत्र द्विरुक्तिर्वाच्या।

पश्य पश्य इत्येवायं पश्यति कृष्णम्। एवमद्राक्षीत् द्रक्ष्यति वा। सेवस्व इत्येवायं सेवते, एवमसेविष्ट सेविष्यते वा। अर्थस्तु कृष्णं मुहुर्भृशं वा पश्यतीत्यादिको ज्ञेयः। यङ्प्रत्ययस्तस्मिन्नेवार्थे विधीयमानोऽपि स्वयमेव समर्थत्वाद्द्विरुक्तिं नापेक्षत इति भेदः। युष्मदस्मदोः कर्त्रोस्तु, पश्य पश्य इत्येव त्वं पश्यसीतादिकमुदाहार्य्यम्। तौ च त-ध्वं-

---

१६४। क्रिया। क्रियासमभिहारे गम्यमाने कालत्रयेऽपि विधाता भवति। तस्य क्रियासमभिहारे विहितस्य विधातुः स्थाने हि-स्वावेव भवतः। परपदिधातोर्विधातुः हिर्भवति, आत्मपदिधातोर्विधातुस्तु स्वो भवतीति ज्ञेयम्। तौ च हि-स्वौ त-ध्वंविषये वा भवतः।

परिभाषासूत्रमेतत्। तदा तदनन्तरं इत्येवेत्यनन्तरम्। यथार्हं यथायोग्यं तद्धातुसम्बन्धिनः पदस्य अनुप्रयोगो भवति। यस्माद्धातोर्विधाता विधीयते तत्पदेन स परामृश्यते। कर्त्तृकर्म्मणोः प्रयोगस्तु तस्मादनुप्रयुक्तात् पदात् पूर्व्वस्मिन् तस्मात् परस्मिन् वा भवति।

तत्र। यत्र क्रियासमभिहारे द्विरुक्तिर्वाच्या वक्तव्या। पश्य पश्येति। अत्र वर्त्तमाने विधाता तस्य हिः, पश्येति ततो द्विरुक्तिः, पश्य पश्येति ततः इत्येव शब्दप्रयोगः यथार्हमित्युक्तम्, अतस्तदतन्तरं पश्यतीत्यस्यानुप्रयोगः तत्पूर्व्वस्तत्परतो वेत्युक्तम्, अतोऽनुप्रयुक्तात् पूर्वस्मिन् कर्त्तुः प्रयोगः तस्मात् परस्मिन् कर्म्मणः प्रयोगः। अनुप्रयुक्तात् पूर्व्वस्मिन् परस्मिंश्च उभयोरपि प्रयोगो भवति। यथा पश्य पश्येत्येवायं कृष्णं पश्यति, पश्य पश्येत्येव पश्यत्ययं कृष्णमिति। एवमिति। पश्य पश्यत्येवायमद्राक्षीत् कृष्णमिति। अत्र भूते विधाता अतोऽद्राक्षीदित्यस्यानुप्रयोगः। कृष्णं मुहुर्मृशं वा अद्राक्षीदित्यर्थः। पश्य पश्येत्येवायं द्रक्ष्यति। कृष्णमिति भविष्यति विधाता, अतो द्रक्ष्यतीत्यस्यानुप्रयोगः कृष्णं मुहुर्भृशं वा सेवते इत्यर्थ इति मुहुः

विषये वा। यथा, पश्यत पश्यत इत्येव यूयं पश्यत पश्यत इत्येव यूयं पश्यथ कृष्णम्। पक्षे पश्य पश्येत्यादि। तथा सेवध्वं सेवध्वमित्येव यूयं सेवध्वे कृष्णम्। पक्षे सेवस्व सेवस्वेत्यादि।

१६५। समुच्चितक्रियावचनाद्विधात्रादिकं वा।

कृष्णं पश्य रामं पश्य श्रीदामानं पश्य इत्येवायं पश्यति इमौ पश्यतः इमे पश्यन्ति। अथवा कृष्णं पश्यति रामं पश्यति श्रीदामानं पश्यति इत्येवायं पश्यतीत्यादि। एवं युष्मदादिकर्त्तृषु सर्व्वेषु कालेषु वचनेषु चोन्नेयम्।

---

पुनः पुनः। अस्यविधानस्य यङ्प्रत्ययेन सह भेदमाह,—यङ्प्रत्ययस्त्विति। अस्मिन्निति क्रियासमभिहारे इत्यर्थः। समर्थत्वात् वलवत्त्वात्। कर्त्रोरिति कर्त्रोः सतोः। पश्येति। कृष्णं मुहुर्भृशं वा पश्यसीत्यर्थः। पश्यतेति। कृष्णं मुहुर्भृशंवा पश्यथेत्यर्थः। सेवध्वमिति कृष्णं मुहुर्भृशं वा सेवध्वेऽइत्यर्थः।

१६५। समु। समुच्चिता या क्रिया तद्वचनाद्धातोरुत्तरे कालत्रये विधात्रादिकं वा भवति। क्रियाणां समुच्चये सति वा भवतीत्यर्थः। समुच्चयो मेलनं प्रत्येकसमन्वायकं वा। आदिकमित्यनेन हिस्वादिकं गृह्यते। कृष्णं पश्येति। अत्र वर्त्तमाने विधाता तस्य हिः। दर्शनक्रियात्र समुच्चिता अतो दृशधातोः समुच्चितक्रियावचनत्वम्। कृष्णं पश्यति, रामं पश्यति श्रीदामानं पश्यतीत्यर्थः। कृष्णं पश्य, रामं पश्य, श्रीदामानं पश्येत्येव इमौ पश्यतः इति कृष्णं पश्यतः, रामं पश्यतः श्रीदामानं पश्यत इत्यर्थः। एवं इमे पश्यन्तीत्यत्रापि ज्ञेयम्। कृष्णं पश्यतीति। विधात्रादीत्युक्ते पक्षे अच्युत एव। इत्यादीत्यादिपदेन कृष्णं पश्यतः रामं पश्यतः श्रीदामानं पश्यत इत्येव इमौ पश्यत इत्यादि। एवमिति उन्नेयम् अध्याहार्य्यम् उदाहरणमिति शेषः। तद्यथा, कृष्णं पश्य, रामं पश्य, श्रीदामानं पश्येतेव त्वं पश्यसि, युवां पश्यसि युवां पश्यथः, यूयं पश्यथ। अथवा कृष्णं पश्यसि, रामं पश्यसि, श्रीदामानं पश्यसीत्येव त्वं पश्यसीत्यादि। कृष्णं पश्य, रामं पश्य, श्रीदामानं पश्येत्येवाहं पश्यामि, आवां पश्यावः, वयं पश्यामः। अथवा कृष्णं

१९६। अत्र समानार्थनानाधातुप्रयोगे सामान्यवचनधातुरनुप्रयुज्यते ॥

कृष्णं पश्य रामम् ईक्षस्व श्रीदामानं विलोकयेत्येवं निभालयतीत्यादौ।

१९७। प्रहासे मन्यत्युपपदाद्धातोरुत्तमस्य मध्यमो मन्यतेश्च मध्यमस्योत्तमैकवचनम् ॥

एहि मन्ये, कृष्णं द्रक्ष्यसि, दृष्टोऽसौ तव पित्रेति। प्रहासे इति किम्? एहि मन्यसे कृष्णं द्रक्ष्यामि साधु मन्यसे। एवं मन्येथे मन्यध्वेऽपि एहीत्यव्ययं सम्बोधने। तदेवं वैष्णवो भवति। इत्याद्युदाहरणैर्वाक्यानि दर्शितानि।

॥ इति अच्युताद्यर्थाः ॥

---

पश्यामि, रामं पश्यामि, श्रीदामानं पश्यामीत्येवाहं पश्यामीत्यादि। कृष्णं पश्य, रामं पश्य, श्रीदामानं पश्येत्येवायम् अद्राक्षीदित्यादि। कृष्णं पश्य, रामं पश्य, श्रीदामानं पश्येत्येवायं द्रक्ष्यतीत्यादि च।

१९६। अत्र। अत्रेति। सामान्यवचनधातुरिति सर्व्वगतार्थवचनधात्वर्थान्तरमित्यर्थः। कृष्णं पश्येति। एवं कृष्णं पश्यति, राममीक्षते, श्रीदामानं विलोकयतीत्यर्थः। निभालयतीति भल निरूपणे चुरादिर्निपूर्व्वो दर्शने वर्त्तते।

१९७। प्रहासे। प्रहासः परिहासस्तस्मिन् गम्यमाने मन्यत्युपपदाद्धातोरुत्तरे उत्तमस्य स्थाने मध्यमो भवति, मन्यतेश्चोत्तरे मध्यमस्य स्थाने उत्तमैकवचनं भवति। मन्यतीति निर्द्देशो मनो ज्ञाने इत्यस्य दैवादिकस्यैव ग्रहणार्थः। एहीति मन्यस्ये इत्यत्र मन्ये इति द्रक्ष्यामीत्यत्र द्रक्ष्यसीति। प्रहासं प्रतिपादयितुं प्रतिवचनमाह,—दृष्टोऽसाविति। असौ कृष्णः साधु मन्यस इति प्रतिवचनम्।

॥ इति अच्युताद्यर्थाः ॥

## अथ आत्मपद-परपद-प्रक्रियाविशेषौ ज्ञेयौ

१६८। भावे कर्मणि सर्व्वस्माद्धातोः स्यादात्मनेपदम्।
ङिद्भ्य आत्मपदिभ्यश्च कर्त्तर्य्यपि विधीयते ॥
अत्रात्मनेपदं विभुश्च। भूयते क्रियते कामयते एधते ॥

१६९। ञिद्भ्य उभयपदिभ्यो णेः कर्त्तृगामि-क्रियाफले ॥
कुरुते यजते। अत्र स्वार्थमिति गम्यम्। नेह करोति यजति कारयति। अत्र परार्थमिति गम्यम्।

---

## अथ आत्मपद-परपद-प्रक्रियाविशेषौ ज्ञेयौ

१६८। भावे। भावे कर्म्मणि च वाच्ये सर्व्वस्माद्धातोरुत्तरे आत्मनेपदं स्यात्। छन्दोऽनुरोधेन आत्मनेपदमित्युक्तमिति ज्ञेयम्। एवमन्यत्रापि। परपरलक्षणेऽपि छन्दोऽस्त्येव किन्तु मध्ये मध्ये उदाहरणं मन्दधियां सुखप्रतीत्यर्थम्। तद्यथा, हसि-जल्पि-पठादिभ्यो गतिहिंसार्थकाच्च न। हरतेर्न निषेधः स्याद् वहेरपि च कुत्रचित्। मध्ये मध्ये उदाहरणं मतान्तरञ्च शब्दार्थमात्रान्नेति कातन्त्रविस्तर इति।

ङिद्भ्यः। ङिद्भ्य आत्मपदिभ्यश्च धातुभ्य उत्तरे कर्त्तर्यपि वाच्ये आत्मनेपदं विधीयते। धातूनामात्मपदित्वं गण एव ज्ञेयम्। भूयत इति भावे। क्रियत इति कर्म्मणि। कामयत इति णिङन्तत्वेन ङित्त्वादात्मपदम् एवं मेङ्-देङ्-पूङ्-डीङ्-शीङ्प्रभृतीनामपि ङित्त्वादात्मपदं ज्ञेयम्। एधत इति एध वृद्धावित्यस्यात्मपदित्वं गण एव प्रसिद्धम्।

१६९। ञिद्भ्यः। कर्त्तरि वाच्ये ञिद्भ्य उभयपदिभ्यो णेश्च उत्तरे कर्त्तृगामिक्रियाफले आत्मनेपदं स्यात्। कर्त्तृगामीति क्रियाफले कर्त्तृगामिनी सतीत्यर्थः। उभयपदित्वमपि गण एव ज्ञेयम्। कुरुते इति ञित्त्वात्। यजत इति उभयपदित्वात्। कारयत इति ण्यन्तत्वात्। क्रियाफलस्य कर्त्तृगामित्वं प्रतिपादयितुमाह,—अत्रेति।

२००। शब्दान्तरद्योतिते तु तत्काले स्याद्विभाषया ॥

स्वार्थं कृष्णं यजते यजति वा। कर्त्तृगामीति निवृत्तम्।

२०१। धातोः क्रियाव्यतीहारे आत्मनेपदमिष्यते ॥

व्यतिसिञ्चते परस्परं सिञ्चतीत्यर्थः।

२०२। हसि-जल्पि-पचादिभ्यो गतिर्हिंसार्थकाच्च न ॥

व्यतिहसन्ति व्यतिजल्पन्तीत्यादि। शब्दार्थमात्रान्नेति कातन्त्रस्तद्विस्तरस्त्वाख्यातचन्द्रिकासु। व्यतिगच्छन्ति। व्यतिघ्नति।

२०३। हरतेर्न निषेधः स्याद्वहेरपि च कुत्रचित् ॥

संप्रहरन्ते संविवहन्ते।

२०४। परस्परेतरेतरान्योन्ययोगे निषेधनम् ॥

परस्परं व्यतिलुनन्तीत्यादि। क्रियाव्यतिहारो निवृत्तः, आत्मनेपदन्त्वनुवर्त्तते।

---

२००। शब्दा। तत्फले कर्त्तृगामिक्रियाफले शब्दान्तरेण द्योतिते तु सति विभाषया विकल्पेन आत्मनेपदं स्यात्। यजतः इति पूजयतीत्यर्थः।

२०१। धातोः। क्रियाव्यतीहारेऽर्थे गम्यमाने धातोरुत्तरे कर्त्तरि वाच्ये आत्मनेपदमिष्यते। व्यतीहारः परिवर्त्तः। आत्मनेपदमिति स्पष्टतार्थं कृतमिति ज्ञेयम् ॥

२०२। हसि। हस हसने। जल्प पठ व्यक्तायां वाचि। इत्यादिभ्यो गत्यर्थाद्धिंसार्थाच्च उत्तरे क्रियाव्यतीहारे आत्मनेपदं नेष्यते। शब्दार्थमात्रादिति। तद्विस्तरेति तत्पदेन कातन्त्रं परामृष्यते। एतदेव जुमरस्यापि मतम् ॥

२०३। हर। हरतेर्निषेधो न स्यात्। वहेरपि कुत्रचित् निषेधो न स्यात्। संप्रहरन्त इति परस्परं प्रहरन्तीत्यर्थः। हिंसार्थत्वात् निषेधे प्राप्ते निषेधस्य निषेधविधानम्। संविवहन्त इति कन्यां वरञ्च परस्परं प्रापयन्तीत्यर्थः। गत्यर्थत्वात् निषेधे प्राप्ते निषेधस्य निषेधविधानम् ॥

२०४। पर। परस्परादियोगे निषेधनं निषेधो भवति आत्मनेपदस्येति

२०५। नेर्विशः। निविशते ॥ (क)

२०६। विपराभ्यां जेः ॥

विजयते पराजयते।

२०७। क्रीञः पर्य्यववे. परात् ॥

परिक्रीणीते। एवं अववि।

२०८। आङो दाञो न चेद्वक्त्रादिकस्य स्यात् प्रसारणम्।

आदत्त मृत्तिकां कृष्णो मुखं व्यादाच्च मायया।

आदिग्रहणादास्यप्रसारणसमानक्रियायामपि स्यात्। विपादिकां व्याददाति, नदी कूलं व्यावदाति। स्वीयाङ्गकर्म्मकादेव निषेधः। तेन—

अन्यच्च किञ्चिद्वदनं व्यादेहीति दिशन्निव।
व्याददे स हरिर्वक्त्रं वकस्यामरवैरिणः ॥

---

शेषः। परस्परं व्यतिलुनन्तीति परस्परं लुनन्तीत्यर्थः।

२०५। नेः। उपेन्द्रात् नेरुत्तरस्माद्विश उत्तरे कर्त्तरि वाच्ये आत्मनेपदं भवति। निविशत इति विश प्रवेशने तुदादिः ॥

२०६। वि-पराभ्यामुत्तरस्माज्जेरुत्तरे कर्त्तरि वाच्ये आत्मनेपदं स्यात्। विजयत इति जि जये भ्वादिः ॥

२०७। क्रीञः। पर्य्यव-वेः परादुत्तरस्मात् क्रीञ उत्तरे कर्त्तर्य्यात्मनेपदं स्यात्। क्रियाफलस्य कर्त्तृगामित्वात् भावे आत्मनेपदार्थं वचनम्। कर्त्तृगामित्वे तु ञित्वादेवात्मनेपदं सिध्यतीति। परिक्रीणीत इति डुक्रीञ् द्रव्यविनिमये क्र्यादिः ॥

२०८। आङो। आङ उत्तरस्माद्दाञ उत्तरे कर्त्तर्य्यात्मनेपदं स्यात्। चेद् यदि वक्त्रादिकस्य प्रसारणं स्यात्तदा आत्मनेपदं न स्यात्। वक्त्रं मुखम्। आदत्ते गृहीतवानित्यर्थः। मुखं व्यादाच्च माययेति निषेधोदाहरणम्। व्याददाति प्रसारितवानित्यर्थः। आदिग्रहणादिति। आस्यं मुखम्। स्यादिति

---

(क) २०५-२०६—एतेषां सूत्राणां युगपत् पाठे श्लोको भवति ॥

(२२८) कूपकौ तु नितम्बस्थौ द्वयहीने कुकुन्दरे ।
(२२९) स्त्रियां स्फिचौ कटिप्रोथा-(२३०) वुपस्थो वक्ष्यमाणयोः ।
(२३१) भगं योनिर्द्वयोः (२३२) शिश्नो मेढ्रो मेहन-शेफसी
(२३३) मुष्कोऽण्डकोषो वृषणः (२३४) पृष्ठवंशाधरे त्रिकम् ।
(२३५) पिचिण्डकुक्षी जठरोदरं तुन्दं (२३६) स्तनौ कुचौ ।

---

नितम्बे । यौ कूपाविव कूपकौ रन्ध्रौ पृष्ठवंशादधोगतौ ते कुकुन्दरे क्लीबे । कुकुन्दरं पृषोदरादिः ॥२२८

स्फीति । द्वयं कट्याः प्रोथे मांसपिण्डे । पुलक इति ख्याते ॥२२९

स्फिचेः क्विप् । कट्याः प्रोथो मांसपिण्डः । वक्ष्यमाणयोर्भग-शिश्नयोरुपस्थः । उपसर्गे स्थातो डः । क्लीबेऽप्ययं वाक्पाणिपायूपस्थानि कर्मेन्द्रियाणीति प्रयोगात् ॥२३०

भेति । द्वयं योनौ । भज्यते सेव्यते घः । यु मिश्रणे । योनिर्द्वयो-रिति सम्बन्धः । पक्षे योनी च । योनिर्द्वयोरिति स्वामी । भगं स्मराङ्केऽकपौ सुपापथ्यपथो योनिरिति रभसः ॥२३१

शीति । चतुष्कं पुरुषलिङ्गे । शशप्लुतगतौ रास्नादि निपातः । श्वश्रु शिंशप शिश्न इति द्वितालव्ये उष्मभेदः । मेहति मूत्ररेतसी ल्युटौ । व्याप्नुत्य शेते, शीङः फश्चेत्यसुन् । पान्तश्च—"शेपशेफावदन्तौ च पुंसि सान्तौ च न द्वयो"रिति रुद्रः ॥२३२

मुष्क इति । त्रयमण्डकोषे । मुषेर्बाहुलकात् कः । वृषेः क्युः ॥२३३

पृष्ठवंशस्याधस्त्रिकम् । व्यञ्जनान्तश्च । जङ्घोरुत्रिक् त्रिक्पादपृष्ठोरोग-शेषो गुदे स्थितः" इति निदानम् ॥२३४

पीति । पञ्च उदरे । अपिचिनोति पृषोदरादिः । कुषेः सिक् । जन्यतेऽस्मै जठरं पृषोदरादिः । उद्दृणाति उद्गच्छति वायुरस्मादन् । तूण पूरणे दक् ह्रस्वश्च ॥२३५

स्तेति द्वयं स्तने । स्तनेरच् । कुचेः कः । स्तनचूचिपयोधरो इति

(२३७) चूचुकन्तु कुचाग्रं स्यान्न (२३८) ना क्रोडं भुजान्तरम्।
उरो वत्सञ्च वक्षश्च (२३९) पृष्ठन्तु चरमं तनोः ॥
(२४०) स्कन्धो भुजशिरोऽंसोऽस्त्री (२४१) सन्धी तस्यैव जत्रुणी
(२४२) बाहुमूले उभौ कक्षौ (२४३) पार्श्वमस्त्री तयोरधः।
(२४४) मध्यमञ्चाऽवलग्नञ्च मध्योऽस्त्री द्वौ परौ द्वयोः ॥

---

शब्दार्णवः ।।२३६

चुचुको ना कुचाननमिति रत्नकोषः ।।२३७

क्रोडमिति। पञ्चकं वक्षसि। स्त्रियां क्रोडा। भुजद्वयोर्मध्यं भुजान्तरम्। अर्त्तेरुच्चेत्यसुन्। "पुत्र्यादौ तर्णके वर्षे वत्सो वत्सन्तु वक्षसी"ति रुद्रः। वचेरसुनि सकारागमे वक्षः ।।२३८

तनोः शरीरस्य चरमं पश्चाद्भागः पृष्ठं पृषेः ठक् ।।२३९

स्केति। त्रयं स्कन्धे। कं शिरोदधाति अपस्करादिः। भुजस्य शिर इव। "शिरोवाची शिरोऽदन्तोरजोवाचीरजस्तथे"ति विश्वः। अम समाघाते दन्त्यान्तादन्। अंसो भुजशिरे दन्त्य इति पुरुषोत्तमः। अमेः श-प्रत्यये तालव्यन्तोऽपि। "अंशोऽस्त्री स्कन्धभागयो"रिति तालव्यान्ते रुद्रः। अंशवक्षसोर्मध्यं यत्र ।।२४०

तस्यैव स्कन्धस्यैव सन्धी अंसवक्षसोः सन्धी जत्रुणी जनेस्त्रुग् नलोपश्च ।।२४१

बाहुमूले स्कन्धस्याधः कक्षः। कष्यते (स्पर्शेन हिंस्यते) कषेः सक्। अंसस्याधः कक्षलतिका श्रवणस्य वागिराख्याता इति तु स्त्रीकाण्डे वोपालितः ।।२४२

कक्षयोरधः पार्श्वं तालव्यशं—पार्श्वं शर्म्मशठीशुचेति शकारभेदः। ।।२४२

मेति। त्रयं तनुमध्ये। मध्यएव मध्यमः। ओ लस्जी व्रीडे क्तः ओदनुबन्धान्नत्वम्। चकाराभ्यां मध्यमावलग्ने अपि वा स्त्रियां मदि-

(२४५) भुजबाहू प्रवेष्टो दोः स्यात् (२४६)कफोणिस्तु कूर्परः ।
(२४७) अस्योपरि प्रगण्डः स्यात् प्रकोष्ठस्तस्य चाप्यधः ॥
(२४८) मणिबन्धादाकनिष्ठं करस्य करभो बहिः ।
(२४९)पञ्चशाखः शयः पाणि-(२५०)स्तर्ज्जनी स्यात् प्रदेशिनी ।
(२५१)अङ्गुल्यः करशाखाः स्युः (२५२)पुंस्यङ्गुष्ठः प्रदेशिनी ।

---

ध्यायते मोदकारवानिति वृद्धा इति श्रीपतिः । धकारवानपीत्यन्ये । परौ द्वौ भुजबाहू द्वयोः स्त्रीपुंसयोरित्यर्थः ॥२४४

भुजेति । चतुष्कं बाहौ । भुज्यतेऽनेनेति कः । "दंष्ट्रामुदस्याथ भुजाश्च गुर्वीम्, इति माघः । वहेरुण् । बाहुश्च—बाहो बाहौ पुमान् मानभेदे वृषतुरङ्गयोरि"ति रभसः । वेष्ट वेष्टने चुरादेरच् । दमेर्डोस् । दोषा च— "दोर्दोषा च भुजो बाहुः पाणिर्हस्तःकरस्तथे"ति धनञ्जयः ॥२४५

केति । द्वयं भुजमध्यस्थे ग्रन्थौ कुनीति ख्याते । "कफोणि कुर्परौ जन्यौ कफणिः स्त्री च दृश्यते" इति रभसः ॥२४६

अस्य कफोणेरूर्द्ध्वभागः कक्षपर्य्यन्तं प्रगण्डः । गण्डेरच् । आमणि-बन्धं कफोणेरधः प्रकोष्ठः । कुषेष्ठः ॥२४७

प्रकोष्ठान्ते हस्तग्रन्थिर्मणिबन्धः, तदवधि कनिष्ठां यावत् करस्य बहिः करभः । करभोरुरित्यस्यैव प्रयोगः ॥२४८

पेति । त्रयं पाणौ । पञ्चाङ्गुल्यः शाखा इवास्य । शेते सर्व्वम् अस्मिन् अल् । पणायते व्यवहरत्यनेन णिः ॥२४९

तेति । द्वयं तर्ज्जन्याम् । तर्ज्जतेऽनयेति युट् । प्रदिशत्यनया आवश्यके णिन् ॥२५०

अङ्गिति । द्वयमङ्गुलिसामान्ये । अङ्गेरुलिः, पक्षे ई-प्रत्ययः ॥२५१

अङ्गुष्ठादिक्रमेण पञ्चानामङ्गुष्ठादि नामपञ्चकम् । गोभूमीत्यादिना षत्वम् । पूर्व्वपर्य्याये प्रदेशिन्युक्ता, इह तु स्वरूपप्रतिपादनार्थमित्य-

मध्यमाऽनामिका चापि कनिष्ठा चेति ताः क्रमात् ॥

(२५३) पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ।

(२५४) प्रादेश-ताल-गोकर्णास्तर्जन्यादियुते तते ।

अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः ।

(२५५) पाणौ चपेट-प्रतल-प्रहस्ता विस्तृताङ्गुलौ ॥

(२५६) द्वौ संहतौ संहतलः प्रतलौ वाम-दक्षिणौ ।

(२५७) पाणिर्निकुब्जः प्रसृत-स्तौ युतावञ्जलिः पुमान् ॥

---

पौनरुक्त्यम्। मध्ये भवा मध्यमा। नास्ति नामास्याः स्वार्थे कः। अतिशयेनाल्पा, इष्ठः युवाल्पयोः कन् वा ॥२५२

पुनरिति। चतुष्कं नखे। पुनर्भवत्यच्। करे रोहति कः। नास्ति खमिन्द्रियमस्मिन्। नखादय इति नलोपाभावः। नखएव नखर ॥२५३

तर्जन्यादियुते विस्तृतेऽङ्गुष्ठे प्रादेशः। दिशेर्घञ् उपसर्गस्य दीर्घः। भित्तौ प्रदेशस्तर्जन्यङ्गुष्ठाभ्यां सम्मितेऽपि चेति रुद्रः। तालो मध्यमया स्यात्। गोकर्णोऽनामया तथा। कनिष्ठायुक्ते विस्तृतेऽङ्गुष्ठे वितस्तिः। तसु दसु उत्क्षेपे क्तिः।. सैव द्वादशाङ्गुलाख्या, द्वादश अङ्गुलयः प्रमाणमस्य। संख्याव्ययाद्यङ्गुलेरिति अत् ॥२५४

चपेति। त्रयं विस्तृताङ्गुलिपाणौ। चञ्चलं पिटति पृषोदरादिः। "तनिका तु स्त्रियां तालः प्रहस्तः प्रतलस्तलः। चपेटश्चपटश्चापि सप्त पाणौ तताङ्गुलौ" इति रत्नकोषः ॥२५५

द्वौ वामदक्षिणौ प्रतलौ चपेटौ संहतौ संयुक्तौ संहतल उच्यते। प्रतलद्वयं मिलितं संहतलः स्यादित्यर्थः इति सुभूत्यादयः। अन्ये तु द्वौ वामदक्षिणौ संहतौ चेत् संहतल प्रतलावित्याहुः। संहतं लाति कः ॥२५६

निःशेषेण कुब्जीकृतः पाणिः प्रसृतः सृ गतौ क्तः ॥२५७

(२५९) प्रकोष्ठे विस्तृतकरे हस्तो (२६०) मुष्ट्या तु बद्धया ।
स रत्निः स्या-(२६१) दरत्निस्तु निष्कनिष्ठेन मुष्टिना ॥
(२६२) व्यामो बाह्वोः सकरयोस्ततयोस्तिर्य्यगन्तरम् ।
(२६३) ऊर्द्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु ॥
(२६४) कण्ठो गलो-(२६५) ऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि ।
(४६६) कम्बुग्रीवा त्रिरेखा (२६७) साऽवटूर्घाटा कृकाटिका ।

---

तौ प्रसृतौ संयुक्तौ अञ्जलिः । अञ्जेरलिः ॥२५८

विस्तृतः करः प्रकोष्ठो हस्तः । चतुर्व्विंशाङ्गुलप्रमाणः । हसेस्तः ॥२५९

स हस्तो बद्धया मुष्ठ्या विशिष्टो रत्निः । रतेः सौत्रात्निः ॥२६०

रत्न्यरत्नी स्त्रियौ हस्तौ बद्धमुष्टीतलाङ्गुलौ इत्यमरमाला । पुंस्यरत्निरिति रुद्रः । निर्गता कनिष्ठा यस्मात्तेन विस्तृतः कनिष्ठे नेत्यर्थः । मुष्ट्या मुष्टिना इति रूपभेदात् मुष्टिद्वयोः । संज्ञात्वात् पुंस्यपि क्तिः । औणादिकस्तिक् वा ॥२६१

तिर्य्यक् । ततयोविस्तृतयोः सकरयोर्वाह्वोरन्तरं मध्य व्यामः । वें ओ इति ख्यातः । व्यामीयतेऽनेन माङो मूल विभूजादित्वात् कः ॥२६२

ऊर्द्ध्वविस्तृतवाहुपाणिनां प्रमाणः यस्य तत् पोरुषं तत् पौरुषं त्रिषु यथा पौरुषं जलं, पौरुषी यष्टिः, पौरुषः कूपः ॥२६३

केति । द्वयं गले ग्रीवायाः पुरोभागे । कमेष्ठः । गिरत्यनेन घः ॥२६४

ग्रीति । त्रयं ग्रीवायाम् । गृणातेः क्वन् ग्रीभावश्चेति सुभूः । शिरो धियतेऽस्यां कर्म्मण्यधिकरणे चेति किः साहचर्य्यात् स्त्रीत्वम् । विभ्राणमायतिमतीं न वृथा शिरोधिमिति माघः । कं शिरो धरतयच् ॥२६५

सा ग्रीवा तिसृभीरेखाभिर्युक्ता चेत् कम्बुग्रीवा । महापुरुषलक्षणमेतत् ॥२६६

अवेति । त्रयं शिरःसन्धौ, पृष्ठवंशोपरिभागे । घाड़ इति ख्याते । अवति शिरः अवेरटुः । साहचर्य्यस्य प्रायोवृत्तित्वादवटुः पुंसि । तथाच

(२६८) वक्त्रास्ते वदनं तुण्डमाननं लपनं मुखम् ।
(२६९) क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका ॥
(२७०) ओष्ठाऽधरौ तु रदनच्छदौ दशनवाससी ।
(२७१) अधः स्या-च्चिबुकं (२७२) गण्डौ कपोलौ
(२७३) तत्परा हनुः ॥

---

रत्नकोषः । करशाखाङ्गुलिरवटुः पुंसि द्वे स्त्रियौ कृकाटिका घाटेति। घटेर्णः । कृकं कण्ठमटति वुन् ॥२६७

वेति। सप्तकं मुखे। उच्यतेऽनेन वचेष्ट्रन्। अस्यते भक्ष्यमत्र क्यण्। उद्यतेऽनेन युट्। तुण्डेर्वन्। आनन्त्यनेन युट्। लप्यतेऽनेन। खन्यते विधात्रा मुखं पृषोदरादिः। तदुक्तं—'प्रजासृजा यतः खातं तस्मादाहुर्मुखं बुधाः' इति ॥२६८

घ्रेति। पञ्चकं नासायाम्। जिघ्रत्यनेन युट्। गन्धं वहत्यच्। घुणेर्घञ्। नासृ धातोरवुञौ। घ्राणं गन्धवहा नासा नसा नस्या च नासिकेति साहसाङ्कः ॥२६९

ओष्ठेति। चतुष्कमोष्ठे। तत्र च ऊर्द्ध्व ओष्ठः। अधरस्त्वधःस्थएव। अधरोष्ठेऽधरः पुमानिति वत्सशर्मा, इह तु नादृतः। केचित्तु ओष्ठसहितोऽधर इति शाकपार्थिवादित्वान्मध्यपदलोपिसमासे त्रयमोष्ठे वदन्ति। उपेष्ठः द्व्यर्थत्वाद्द्विवचनं न तु स्वभावतः। 'निरस्तेदन्तच्छदं नव'मिति भट्टिः। 'अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू' इत्यभिज्ञाने ॥२७०

अधरादधश्चिवुकम् ॥२७१

गेति। द्वयं कर्णसमीपदेशे गण्डे 'गाल' इति ख्याते। गण्डेरच्। केन जलेन पूर्य्यते कपोलः पृषोदरादिः २७२

तत्परा यत्रस्था दन्ता जायन्ते। हन्ति भक्ष्यं उः। विशेषणात् स्त्रीत्वम् "हणुर्हट्टविलासिन्यां कपोलावयवे स्त्रिया"मिति रभसः।

(२७४) रदना दशना दन्ता रदा-(२७५) स्तालु तु काकुदम् ।
(२७६) रसज्ञा रसना जिह्वा (२७७) प्रान्तावोष्ठस्य सृक्कणी ॥
(२७८) ललाटमलिकं गोधि-(२७९)रूर्द्ध्वे दृग्भ्यां भ्रुवौ स्त्रियाम्

"कपोलभागो हनुः प्राक्तन" इति पुंस्काण्डे रत्नकोषः ॥२७२

रदेति। चतुष्कं दन्ते। रद्यते दश्यतेऽनेन। दन्श दशने इति निर्देशात् नलोपः। "दशनं पुंनपुंसकमि"ति रत्नकोषः। दलतीति दन्तः पृषोदरादिः। रदत्यच् ॥२७४

तेति। द्वयं तालुके। तल प्रतिष्ठायां जानुवदुण्। ककुद् जिह्वा विद्यतेऽस्यां अण् ॥२७५

रसेति। त्रयं जिह्वायाम्। रसं जानातीति कः। रसयति आस्वादयति नन्द्यादित्वाद् युः। "तालव्या अपि दन्त्याश्च शम्बशूकरपांशवः। कलशं शम्बलश्चैव जिह्वायां रसना तथे"ति ऊष्मभेदः। रसनश्च—"जिह्वा स्वादनिनादेषु रसनं कटिमण्डने" इति व्याड़िः। पित्तेन दूने रसने सितापि तिक्तायते हंसकुलावतंस" इति श्रीहर्षप्रयोगाच्च। जहाते क्वन् द्वित्वादिकं पृषोदरादित्वात् ॥२७६

"ओष्ठस्य। वामदक्षिणपर्य्यन्तौ सृक्कणी क्लीवे" इति सुभूः। 'सृक्कणी परिलिह'न्निति भारते प्रयोगात्। "स सृक्कणीप्रान्तमसृक् प्रदिग्धं प्रलेलिहानो हरिणारिरुच्चैः इति प्रयोगात् स्त्रियामपि। "सृक्के द्वे चैव विज्ञेये चत्वारिंशच्च वक्त्रजा" इत्यदन्ते क्लीवे। "वाम लिहन् सृक्कमरण्यधूर्ण" इति प्रयोगश्च। "महासृक्कायशोभितो नृसिंहनखाग्रव" दिति श्लेषात् ककारद्वयम्। वकारयुक्तो नान्तश्च। "स्मितस्य सम्भावय सृक्वणा कणा" इति नैषधीयात्। अतएव वसंयोगादल्लोपाभावः। अरुणदत्तस्तु इदन्तेषु क्लीवेषु पठति। सक्थ्यस्थि दधि सृक्क्यक्षि विहाय प्राणिवाचकमिति। उदाहृतश्च सृक्किगा सह ससृक्कि ॥२७८

लेति। त्रयं ललाटे, लल ईप्सायामाटः। अलञ् भूषणे इकः। अलीकश्च। गौर्नेत्रं धीयतेऽस्मिन्निति किः ॥२७८

(२८०) कूर्चमस्त्री भ्रुवोर्मध्यं (२८१) तारकाऽक्ष्णः कनीनिका
(२८२) लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ।
दृग्दृष्टि चा-(२८३) ऽस्रु नेत्राम्बु रोदनञ्चास्रमश्रु च ॥
(२८४) अपाङ्गौ नेत्रयोरन्तौ (२८५) कटाक्षोऽपाङ्गदर्शने ।
(२८६) कर्ण-शब्दग्रहो श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः ॥
(२८७) उत्तमाङ्गं शिरः शीर्षं मूर्द्धा ना मस्तकोऽस्त्रियाम् ।

---

लोचनाभ्यामूर्द्ध्वभागौ भ्रुवौ । भ्रमेर्डुः ॥२७९

नासिकाया उपरि भ्रुवोर्म्मध्यं कूर्चम् ॥२८०

चक्षुषस्तारका पुत्तलिका कनीनिका । 'कनी दीप्तौ । किङ्किणीकादिः-निपातः । "कनीनिका तारकाक्ष्णः स्यात् कनिष्ठाङ्गुलावपी"ति कचतुष्के मेदिनी । अन्ये तु अक्ष्णः कनीनिका तारकेत्याहुः, तारका रूढ़ाविति इत्वाभावः । "नक्षत्रे चाक्षिमध्ये च तारा स्यात्तारकेत्यपी"ति विश्वः ॥२८१

लोचेति । अष्टकं चक्षुषि । लोच्यते, नीयते, ईक्ष्यतेऽनेन करणे युट्‌त्रनौ । चक्षेरुस् । अशू व्याप्तौ सिक् । अक्षि । दृशेः क्विपक्तौ । "नेत्रं रथे लोचने च नेत्रो नेतरि भेद्यवदि"ति रत्नकोषः ॥२८२

अस्रु इति । पञ्चकं नेत्रजले । असु क्षेपणे, अशू व्याप्तौ च रुः । "आवर्त्तयन्नदीरस्नैर्द्विषतां योषिताञ्च यः" इति माघे शोणितावाचिना श्लेषादस्रं दन्त्यान्तम् । अश्रमश्रुणीति तालव्ये उष्मभेदः ॥२८३

अपेति । नेत्रयोरन्तौ समीपौ । अपाङ्गत्यच् ॥२८४

कटमसदृशमक्षि अस्मिन् । कटाक्षकाक्षाविति रभसे काक्षोऽपि । "काक्षेणानादरेक्षितः" इति भट्टिः ॥२८५

केति । षट्कं कर्णे । कृ-वृ-तृ-स्वपि-द्रुभ्यो नन् । शब्दो गृह्यतेऽनेन । श्रूयतेऽनेन त्रन्-क्ति-युड़सुनः । श्रोत्रस्थाने पुंसीति क्वचित् पाठः ॥२८६

# प्रणव-पारिजातः

( संस्कृत-मासिकपत्रम् )

त्रयोदशवर्षम्, तृतीयसंख्या ] [ कार्त्तिकमासः १८६२ शकाब्दः


## श्रीदुर्गाद्भुतमहिमस्तोत्रम्

निबन्धकः—श्रीश्रीजीवन्यायतीर्थः

त्रिजगदधीश्वरि ! जय शिवकिङ्करि !
शङ्करि जय जय समरभयङ्करि !
हास्ययुतास्ये ! हिमगिरिबाले !
जय जय करधृतशरकरवाले ! ॥१

ऊर्द्ध्वं नयनगलदग्निकणोग्रे
जय जलजोज्ज्वललोचनयुग्मे !
वामचरणतलमर्दितदैत्ये !
दक्षपदाब्जाहृतपशुभृत्ये ! ॥२

जय जय शूलकरालकराग्रे !
जय सुर-नरवरदानव्यग्रे !
रुद्रगृहिणि ! करुणार्द्रचरित्रे !
शैलसुते जय भावविचित्रे ! ॥३

उद्धतदानवशासनदक्षे
विहितभक्तजनवैभवरक्षे !
दशभुजपालितविश्वसमृद्धे !
जय जय पितृवनचारणसिद्धे ! ॥४

वाणीकमलालङ्कृतपार्श्वे !
दीपितसायुधकरिमुखहर्षे !
स्फुट-खल-शासकपाशरिकाशे !
जय कृतमायापाशविनाशे ! ॥५

आकुलसुरकुलपरमशरण्ये !
भीषणगर्जनकम्पितसैन्ये ।
अस्त्रविलासोज्ज्वलितदिगन्ते !
जय जय सौम्ये ! जय शिवकान्ते ॥६

विपुलमहिषबलदननसमर्थे !
विफलास्यबलानामपदार्थे ।
चरणं कलयसि पशुपतिपृष्ठे
जय जय पशुपतिपतिगुणनिष्ठे ! ॥७

तव महिमाद्भुतभावविलासी
तनुरसि महती त्वञ्च विभासि !
जननी जगतां श्रुतिभिरवर्ण्या
परमा प्रकृतिर्जय बहुवर्णा ॥८

श्रीदुर्गाद्भुतमहिमस्तोत्रं
पठति जनो यः परमपवित्रम् ।
स जयति शमनत्रासमशेषं
गच्छति वाञ्छितसुखमयदेशम् ॥९

—०—

## श्रीश्रीनामामृतलहरी

श्रीश्रीठाकुरसीतारामदासोङ्कारनाथकृतमहारसायनस्यानुवादः

अनुवादिका—अध्यापिका डक्टर वाणी चक्रवर्त्ति-काव्य-स्मृतितीर्था

### पञ्चमं स्पन्दनम्

किं तात वेदागमशास्त्रविस्तरै-
स्तीर्थैरनेकैरपि किं प्रयोजनम् ।
यद्यात्मनो वाञ्छसि मुक्तिकारणं
गोविन्द गोविन्द इति स्फुटं रट ॥

किं वेदैरागमादि बहुसंख्यकैस्तीर्थैर्वा तव प्रयोजनम्? आत्मनो मुक्तिकारणमिच्छसि चेत्, तर्हि गोविन्दो गोविन्द इति नाम घोषय रे सुस्पष्टम्। अरे, उच्चारय मम नाम।

मामादिशसि तव नामोच्चारणार्थम्—भवतु, किं तावत् ते नाम? प्रतिदिनं त्वं बालत्वमिव उपगताऽसि! किं न जानासि रे मम नाम?

जानामि, किन्तु केषाञ्चित् केषाञ्चिज् जनानां कथाभिर्विस्मरामीव कालेकाले। बुद्धिभ्रंशो जायते। पुनरेकवारं सुष्ठुतया ब्रूहि खलु ते नाम।

मम तावन्नामानि—प्रकृतिः पुरुषो ब्रह्मा-विष्णु-र्महेश्वर आत्मा-परमात्मा, कृष्णः, काली, रामो, गणेशः, सूर्यो-ऽग्नि-र्गङ्गा, राधा, दुर्गा।

तर्हि स्त्रियः पुरुषाश्च सर्वे ननु त्वमेव?

अपि त्वमेतद् विषयमद्य प्रथमं शृणोषि?

नहि नहि, ब्रूहि ब्रूहि।

पश्य, चैतन्यं जडत्वञ्च मिलित्वा जातं प्रकाण्डमेतद् ब्रह्माण्डम्। इह खलु जगति चैतन्यस्यैव भवत्युपासना। एकत्वं तावच्चैतन्यम्। येनैव नाम्ना ननु निर्दिशति जनो मामेव आह्वयति, एकः खल्वहम्। सर्वेषामेव आह्वानेन प्रत्युत्तरं ज्ञापयामि

त्वं चेदेकः, किं तर्हि प्रयोजनमेतावद्भिर्नामधेयैः। एकेनैव नाम्नाह्वानेन सिध्यति ननु प्रयोजनम् ?

ब्रह्मस्वरूप ( ॐ ) ॐङ्कारम्—तदेव ममैकं नाम। युगधर्मवशान्नराणां धारणाशक्तिरल्पतां गता। मदीयसर्वगतभावग्रहणशक्तेरभावात् तेषामुद्धारार्थं कृष्णः, काली, राम—इत्येतान् सर्वान् विग्रहान् धृतवानहम्। एतल्लीलानां श्रवणेन मननेन च मयि दृढां भक्तिं लभमानो भक्तः संसारपाशान् मुक्तो जायते। किं तावत् पृथक् पृथग् रूपाणां धारणेन प्रयोजनम् ?

पश्य, नास्ति ननु सर्वेषां रुचिः समाना! कश्चिन् मम वंशीयुक्तं वदनं द्रष्टुकामः, अतोऽहं तेषां प्रीतये यमुनापुलिने कदम्बतले वशीं करे धारयन् श्याम-सुन्दरसज्जा-धरः सन् "राधा राधा" इति वंशीध्वनिं करोमि। पुनः केचन मां युगलरूपेण द्रष्टुमभिलषन्ति—अतस्तेषां कारणेनाहमेको राधासहितकृष्णो भूत्वा तेषामनन्दवर्धनं कुर्वंस्तिष्ठामि। कश्चिन् मां धनुर्वाणधारिरूपेण द्रष्टुं कामयते—अतस्तेषां प्रीतये रामरूपं धृतवानस्मि। नृमुण्डमालिनीं लोलरसनां गलितवसनां भीषणां कालिकामूर्तिं द्रष्टुं कश्चन भक्त इच्छति, तदर्थमहं कालीरूपेण लीलां प्रकाशयामि। कोऽपि वा व्याघ्राम्बरधारिणो नागराजहारिणस्त्रिपुरारेराकृत्या मां प्रत्यक्षीकर्तुं वाञ्छति, स एवाहं भवामि। कश्चिन्मातरिति आह्वयन् सन्तुष्टो जायते—तन्माता सती तमहं क्रोड़े धारयामि। कोऽपि सखेति कथयन् मां बाहुबन्धनेन बन्धुमिच्छति, सखा सन्नहं तस्य बाहुपाशेन बद्धस्तिष्ठामि। कश्चन दासो भूत्वा मां सेवितुकामो भवति —तत् प्रभुर्भवन्नहं तस्मात् सेवां गृह्णामि। कश्चित् पतिरिति कृत्वा मह्यं जीवनं यौवनञ्चार्पयति—अहं तस्या जीवननाथो भवामि। नास्ति मे कापि स्वाधीनता।

अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विजः।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः॥

भवाम्यहं ते भक्ताधीनः, भक्तो भवति मे हृदयस्य धनम्। यथा मां

  

भक्तो निर्दिशति, तथाहं तिष्ठामि। येनैव च प्रकारेण मां भक्त आह्वयति, तमेव प्रकारमहमधिगच्छामि।

अहो, एतावती ननु शक्तिर्भवति भक्तस्य! कथय मे, कथमहं भक्तो भवितुं पारयामि—कथय।

अतएव वदामि जप रे नाम। गुरुरूपेण यन्नाम त्वां शिक्षयितवानहं —सततं त्वं जप रे तदेव नाम। अपि तन्नाम वर्जयित्वा नामान्तरं न जपिष्यामि? गुरुरूपेण त्वं मह्यं राम इति नाम जप्तुं शिक्षां दत्तवान्, किमहं कालीनाम जप्तुं न शक्ष्याम्यहम्?

बाढ़म्—अवश्यं शक्ष्यस्येव। मम रामस्य नामान्तराणि ननु काली कृष्णो, हरि, हर इति। मम रामः—कालो, कृष्णो, हरि, हर, इति रूपै र्लीलां प्रकटितवान्; एतच्चिन्तयंस्त्वं कालीकृष्णादीनां चरित्रं श्रोतुं पारयसि, नाम गातुं च शक्नोषि।

यानि तु दिवसानि यावद् भावो न दृढ़ीभवति, तानि दिनानि यावद् गुरुदत्तम् इष्टनाम सदा कीर्तनीयं भवेत्, तदीयं चरित्रञ्च श्रोतव्यं स्यात् तेन गाढ़ा भवति रतिरिष्टे, विगलिता जायते सङ्कीर्णता, स्थिरश्च सम्पद्यते भक्तः। जप रे त्वमविरामम् इष्टस्य नाम।

पश्य, तुभ्यमेकां हृद्यां कथां कथयिष्यामि।

किं वदिष्यसि रे—ननु ब्रूहि। तस्मिन् दिने तव कस्यचिद् वैष्णवभक्तस्य वृत्तं श्रुतवान्—स त्वदीयमूर्तिमन्तरेण मूर्त्यन्तरं न विलोकयति। आसीत् तद्गृहे चित्रमेकं कालीदेव्याः, गृहात्तद् दूरीकृत्य स निश्चिन्तोऽजायत। न स गृह्णाति प्रसादमपि शक्तिदेवतायाः। अहं तावद् भक्तिहीनः—अतएव "श्यामोऽहं, श्यामाहम्" इत्येवं मां बोधितवान् त्वम्, न तु तावत् तान् बोधयितुं समर्थोऽसि! तेषां समीपे श्यामावेशं धारयन् "श्यामोऽहम्" इति ब्रुवन्तमपि त्वां ते गृहाद् बहिष्करिष्यति पश्य, व्यापारमिमं न पारयामि सम्यग् बोद्धुम्।

कथं, पूर्वमेवाहमुक्तवान्—भावस्य प्रतिष्ठार्थं गुरुदत्तमिष्टं स्वीकृत्य स्थातव्यम्; इष्टमूर्त्तिदर्शनम्, इष्टस्य प्रसादभोजनं, पादोदकपानञ्च कर्तव्यं,

भावराज्ये स्थानलाभार्थञ्च दिवारात्रमिष्टनाम जपनीयम्; तेषु कृतेषु स भावमयं देहं धारयित्वा मया सहानुक्षणं क्रीड़ितुं शक्नोति समार्थं वैष्णवभक्त इदानीमपि साधनाभक्तेः स्तरे दण्डायमानः सन् बहिर्विषयमनु घूर्ण्यमानो धावति। मन्मूर्तिं विना किमपि यदि स न पश्येत्, तदा तेन सदैव चक्षु र्निमील्यावस्थातव्यम्। कथं गृहद्वाराणि आत्मीयस्वजनान् पशुपक्षिणः स्त्री-पुत्रांश्च चक्षुषा पश्यति? तानि सर्वाणि ननु न भवास्यहम्। कथं स तानि न दूरीकरोति? बहिःस्थस्य गृहस्य कालीमूर्तिदूरीकरणात् प्राक् मनोमन्दिरे दिवारात्रं नाम्न उज्ज्वलदीपः प्रज्ज्वालयितव्यः—एते सर्वे अन्धकारा न विद्यन्ते।

वेदे उपनिषदि रामायणे महाभारते पुराणे च—सर्वत्रैवोक्तं मया "एकोऽहम्"। योऽहं रुद्रोऽस्मि, स एवाहम् उमास्मि; स एवाहं विष्णुरस्मि। यो देवतामेकामाश्रित्य देवतान्तरम् अवज्ञायते, नाहं भवामि तं प्रति प्रीतः, तथापि ते तदेव सम्पादयन्ति दुःखञ्च प्राप्नुवन्ति।

नैतत् ते स्वयं साधयन्ति—त्वमेव ननु गुरुरूपेण शिक्षयितवान्। वाढ़म् गुरुरूपेणाहमुपदिष्टवान् देवतान्तरमिति बुद्ध्या न गृह्णीयात् प्रसादं, न च कुर्य्यात् पूजाम्। "सर्वमेव इष्टं मम"—इति विश्वासं दृढ़ं कुर्यात्। ते खलु तस्मिन् न सफला भवन्ति। वैष्णवः—कालीनामश्रवणेन धावन् पलायते, शाक्तः—वैष्णवाय पारिहास्यं प्रदर्शयति। पुनश्च—

नमोऽस्त्वनन्ताय सहस्रमूर्त्तये
सहस्रपादाक्षिशिरोरुबाहवे।
सहस्रनाम्ने पुरुषाय शाश्वते
सहस्रकोटियुगधारिणे नमः॥

इत्युच्चारयन् किंवा "सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते"—इति मन्त्रेण प्रणमति च। पश्य, इममेकमवलम्बितुमसमर्थस्य इयं भवति दुर्गतिः। गुरुरूपेण जपार्थमुपदिष्टवान्, न तु करोति तत्—एतदर्थम् एतेषामन्धकारो

न दूरीभवति, रेखोपरि रेखाङ्कनं न समाप्तं जायते, आ जन्मनः "क" "ख" इत्येव केवलं ते लिखन्ति ।

ममादेशाः सम्यगेव पालनीयाः, स्वेच्छया आदेशैकदेशमात्रपालनेन न जायते दुःखनिवृत्तिः । किं ते प्रयोजनम् अन्येषां संवादेन ? जप रे त्वं नाम, यावत् स्थिरो भवितुं न पारयसि—तावज्जप रे नाम । यातु पृथ्वी ते पदतलाद् अपसृता सती, पततु वा नभो खण्डशः तव शिरसि, भवतु वा सर्वनाशः सञ्जातः—कस्यामपि दिशि भ्रूक्षेपमकृत्वा अहर्निशमुच्चारय नाम । सुस्थिरं जानीहि रे त्वं—मदीयक्रोडे तिष्ठसि त्वं—त्वामहं वक्षसि निधाय रक्षां विदधामि । जप रे नाम ।

हे नाथ ! शरणागतोऽहं, निराश्रयोऽहम्, अहं तव, अहं तव अहमस्मि तवैव भोः—

हरे मुरारे मधुकैटभारे
गोपाल गोविन्द मुकुन्द शौरे ।
यज्ञेश नारायण कृष्ण विष्णो
निराश्रयं मां जगदीश रक्ष ॥

मा भैः ! मा कुरु मयि सम्भव्याम् असम्भव्यां वा कामपि कल्पनाम् । शक्नोम्यहं मृणालतन्तुना हस्तिबन्धनं विधातुं, गोष्पदे पर्वतं निमज्जयितुं च पारयामि, मम गतिं निर्णेतुं पारयति एतादृती शक्तिः कस्यापि नं विद्यते । त्यज रे संसारचिन्ताम्, अर्थचिन्तां, देहस्य चिन्तां, ऋणस्य च चिन्तां—कृतवानहं तेषां व्यवस्थाम् । अहमस्मि तव । आह्वय माम् । तव सर्वा ज्वाला दूरीभवेत् । मा भैः—मा भैः—मा भैः ।

( —क्रमशः )

# हरिनामामृतम्

## नाम नाटकम् ( प्रथमो भागः )।

अध्यापक-स्वर्गत-अमियनाथ चक्रवर्त्ति एम्-ए, काव्यतीर्थेन विरचितम्

## प्रथमोऽङ्कः

### प्रथमं दृश्यम्

[ परिषदो नाट्योत्सवभवने दर्शकानां सम्मुखे सुसज्जितमञ्चोपरि माङ्गलिकावशेषे—

( नान्दीगानम् )

नान्दीगायकः। श्रुत्वा शास्त्राणि नीत्वा गुरुचरणरजो नाट्यवस्तून्यधीत्य
संगृह्यातः समन्तात् कृतिनटनिचयं सावधानं सदैव।
मातुर्भाषानुसारं सरलसुरगिरा तर्पणार्थं हृदां वो
वर्षेऽस्मिन् दर्शयामो हरिभजनयुतं कृष्णनामामृतं सत्॥

[ नान्द्यन्ते सूत्रधारः प्रविशति ]

सूत्रधारः। अहो, अस्माकं चक्षुषां सम्मुखे संस्कृतपरिषदो बहूनि वर्षाण्यतिगतानि। तस्मिन्नस्याः परिषदो जन्मकाले स्वल्पा आसीत् संस्कृतिप्रचेष्टा। किन्तु किं खलु पश्यामि अस्मिन् वर्त्तमाने वत्सरे ? अद्य बहुसंख्यकानि सांस्कृतिकप्रतिष्ठानानि अत्र तत्र जन्म गृहीत्वा जनानां देहमनसां कल्याणं विदधति— संस्कृत-संस्कृतिमुद्दिश्यापि कतिपयानि क्षेत्राणीदानीं कर्मतत्पराणि जातानि, येनाद्य नगरवासिनोऽत्र एकं साधारणसभामण्डपं प्रतिष्ठापयितुमुद्युक्ता दृश्यन्ते। यं संस्कृतपरिषत् पुनर्वर्षे वर्षे ज्ञानविज्ञानचर्च्चासु नूतनतरं द्वारं समुद्घाट्य अद्भूतमाचरति। इदानीं सर्वे सविस्मयं जानन्ति—अस्मिन्नेव भारतवर्षे वृक्षतलवासिनः कणामात्रभोजिनः संयमधनाश्चरित्रवन्त ऋषिमानवा यानि यानि शास्त्राणि सृष्टवन्तः, अद्य तान्येव शास्त्राणि स्वल्पबुद्धयः कुचरित्रा वयम् आद्रियामहे। आदृत्यापि वयमद्य तानि सम्यग् बुद्ध्या ग्रहीतुं न पारयामः।

अतः संस्कृतपरिषत् प्रतिवर्षं विशिष्टविशेषज्ञैः सरलभावेन एकमेकं वेदादिशास्त्रं जनेषु परिवेशयन्ति। जनाः शृण्वन्तु, जानन्तु, चिन्तयन्तु च, कानि विस्मयकराणि अस्मद्देशीय-ज्ञानविज्ञानानि संस्कृतभाषायां सुरक्षितानि वर्तन्ते पन्यन्तु च कीदृशं सारल्यं संस्कृतभाषायां विद्यते।

[ कश्चिद् वृद्धः प्रविशति ]

वृद्धः। अरे संस्कृतगर्वित पण्डित! के शृण्वन्तु, के जानन्तु, के पश्यन्तु? अहं तु पश्यामि शास्त्रसभासु मादृशा मरणपथ-यात्रिणः स्थविराः एवावसरयापनाय समागच्छन्ति। येषां कृते अयमुद्यमो युष्माकं, ते तावत् तरुणा नागच्छन्ति।

सूत्रधारः। सत्यम् अतिसत्यं त्वया कथितम्। न केवलमद्य संस्कृतशास्त्रेषु विमुखास्तरुणाः, अपि तु चिन्ताजनकेषु सर्वेषु विषयेष्वेव—

वृद्धः। तर्हि पश्य किमनेन युष्माकं संस्कृतार्थं चेष्टितेन।

सूत्रधारः। सत्यमादर्शहीना दुर्मेधसस्तरुणजना अपि तु शिक्षितानाम-नेके अद्य केवलं स्वार्थाय अर्थोपार्जनमात्रमभिलक्ष्य जीवनं यापयन्ति।

वृद्धः। (व्याकुलम्) नैतदुच्चैः कथय, यदि शृण्वन्ति ते तरुणास्तदा मुण्डं चूर्णयिष्यन्ति।

सूत्रधारः। यत् खलु सत्यं, तत्कथने नास्ति मे भयम्। अधुना लब्धा अस्माकं स्वाधीनता; इदानीं सुयोगो जातो देशवासिनां प्रकृतमनुष्यत्वसंघटनाय। किन्तु धर्मविषये, भारतवर्षस्य शाश्वतादर्शविषये चातीव दीना अस्माकं दृष्टिः। तेनाव-हेलितं चरित्रं, धिक्कृतञ्च मनुष्यत्वम्। अतोऽक्षमाणामद्य भोगे स्पृहा जायते, असंयतानामद्य स्वार्थे मोहश्च सञ्जातः।

वृद्धः। न कुत्रापि चरित्रविषये कस्यापि अद्य चिन्ता वर्तते। अद्य पुनरसमीक्षाकारिणामस्माकं परस्परं नाशशीलाः कलहाः सञ्जाताः।

सूत्रधारः। अधुनातीव उद्वेगकरा व्यापाराश्चतुर्दिक्षु घटन्ते। यदि भारतवर्षीयाणामैक्यकरं संस्कृतमद्यापि आदृतं स्यात्, यदि, परस्परं स्वार्थत्यागे सच्चरित्रघटने मतिर्जायते—।

वृद्धः। अलं प्रलापेन। न किमपि स्यात्।

सूत्रधारः। महाशय! तथापि अयं हि जातेरेकोऽवसादकालः, नायं कलिश्चिरमेवं स्थास्यति। अस्मिन् दिने बहून् क्लेशान् सहित्वापि अस्माकं मङ्गलकरं कर्म एव करणीयम्।

वृद्धः। केवलं वृद्धानां मङ्गले किं भवेत्?

सूत्रधारः। महदेव फलं भवेत्। न केवलं वृद्धा, अपि तु सर्वे जना वारं वारं हितानि शृण्वन्तः, परिवारेषु अलक्ष्यभावेन तानि विस्तारयिष्यन्ति।

वृद्धः। वृद्धवाक्यमद्य कोऽपि न गणयति।

सूत्रधारः। तथापि शुभङ्करं कर्म एव करणीयम्, यदि तेनैकोऽपि अनुप्राणितो भवति, तर्हि तन्मङ्गलाय भवेत्।

वृद्धः। आशायाः सीमा नास्ति। आशा वर्तते एव।

सूत्रधारः। पश्यतु तावत् पुनस्तरुणानामाकर्षणाय संस्कृतभाषया अभिनयमपि प्रदर्शयति।

वृद्धः। कौतूहलप्रियास्तरुणाः। तस्माद् अभिनयेनापि कियत् फलं भवेत्, तच्चिन्त्यम्। भवतु, किं तावदभिनीयते युष्माभिः?

सूत्रधारः। "हरिनामामृतम्" नाम संस्कृतं नाटकम्।

वृद्धः। एतन्नामकं नाटकं तु मया कदापि न श्रुतम्।

सूत्रधारः। अभिनवम्, अभिनवं नाटकम्!

वृद्धः। केन तावत् तद्विरचितम्?

सूत्रधारः। श्रूयतां—

परिषदः स्वकीयेन सदस्येन परात्मना।
दुर्गानाथात्मजेनैव सतीनाथानुजेन च॥
श्रीमताऽमियनाथेन रचितं चक्रवर्तिना।

सुबोधसंस्कृतैर्नाट्यं प्रतिवर्षं प्रदर्श्यते ॥

वृद्धः । प्रतिवर्षम् ?

सूत्रधारः। वाढ़म्। त्वं किमपि न जानासि ? प्रथमवर्षे महाभारतमवलम्ब्य "धर्मराज्यम्" द्वितीयवर्षे श्रीमद्भागवतमवलम्ब्य "सम्भवामि युगे युगे," तृतीयवर्षे रामायणमवलम्ब्य "मेघनादवधम्", चतुर्थवर्षे श्रीगौराङ्गस्य सन्न्यासग्रहणार्थं संसारत्यागपर्य्यन्तं प्रथमचरितमवलम्ब्य "हरिनामामृतम्" नाम नाटकम् अभिनीयते।

[ ईषत् सङ्गीतध्वनिः श्रूयते। उभौ उत्कर्णौ शृणुतः— )

वृद्धः। संस्कृतेन नाटकं तु भयङ्करं भवेत्।

सूत्रधारः। न न, न कदापि भयङ्करम्। नाटकमिदं सरलं सुबोधं मनोरमञ्च।

वृद्धः। भवतु, अभिनयस्तु मे प्रियो भवति।

सूत्रधारः। युगावतार-श्रीकृष्णचैतन्येन प्रवर्तितं नाममाहात्म्यम् अस्माकमद्य महौषधम्।

( अधिकतरं सङ्गीतवाद्यध्वनिः श्रूयते )

वृद्धः। कथं सङ्गीतवाद्यध्वनिरिव श्रूयते।

सूत्रधारः। आं पश्यामि तावत्।

( किञ्चिद् गत्वा इतस्ततो बहिर्दृष्टिं निक्षिप्य )

सम्भवतो वृन्दावनस्थितगोपीजन-कीर्त्तनं भवति।

( अधिकतरं मनोयोगेन नेपथ्यं प्रति बद्धदृष्टिरतीव हर्षोत्फुल्लः सन् लम्फन्निव )

भो महाशय! अलोकसामान्यज्योतिष्मान् कश्चिद् अदृष्टपूर्वो महात्मा भावविगलितचित्तो नृत्यति, गायति, क्रन्दति च—अद्भुतम् अत्यद्भुतम्—!!

वृद्धः। मादृशस्थविरजनोऽपि श्रुत्वेदं तरुणायते इव।

सूत्रधारः। त्वर्य्यतां तर्हि, त्वर्य्यतां महाशय!

वृद्धः। त्वरयामि ननु। चलतु—चलतु—

( दृश्यावसानम् ) ( पटपरिवर्तनम् )

# श्रीमद्भगवद्गीतायां भक्ति-कर्म्मवादौ

( निबन्धकः—अध्यापकः श्रीरवीन्द्रकुमारसिद्धान्तशास्त्री )

( पूर्वतोऽनुवृत्तम् )

"दूरेण ह्यवरं कर्म्म बुद्धियोगाद् धनञ्जय !

बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥" इति।

कर्म्मणि फलनिरपेक्षा प्रवृत्तिरेव भगवतोऽभिप्रेता। तस्य सर्व्वाभिर्वोक्तिभिरेतदेव स्फुटी भवति। अनया मुक्तिरेव लभ्यत इति तेन ज्ञापितम्। अत्रोक्तम्—

"कर्म्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः।

जन्मबन्धविनिर्म्मुक्ताः पदं गच्छन्त्यनामयम् ॥" इति।

रणान्निवृत्तोऽर्ज्जुनः इदानीं विषयवासनाविहीन इव जातः। विषयासक्तिश्चातीव भीषणा, नृणां सर्व्वनाशिनी च। अतः पुनरर्ज्जुनस्य मनोयोगमाकर्षितुं विषयचिन्तायाः निन्दा कृता भगवता श्रीकृष्णेन। तदुक्तम्—

"ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते।

सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते ॥

क्रोधाद्भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः।

स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥ इति।

ये खलु मानवाः विषयचिन्तां कुर्व्वन्ति, तयैव चिन्तया तान् विषयान् जायते तेषामासक्तिः। तया च बलवत्तरा भवति वासना। तस्याश्च वासनायाः समुत्पद्यते क्रोधः, यः खलु हेतुर्मोहस्य। एष च मोहः कार्य्याकार्य्यज्ञाननाशको मानवानाम्। सोऽस्य नाशे बुद्धेरपि विनाशो भवेत्तेन च मानवस्यैव विनाशः। अतो या विषयचिन्ता परम्परासम्बन्धेन विनाशमेवानयति, सा कथं परिहर्त्तव्या न भवेत् ?

अर्ज्जुनस्यात्मीयानात्मीयज्ञानमासीदिति न विद्यते स्म तस्मिन् साम्यज्ञानम्। सुखदुःखादिविषयचिन्तैव तं समरान्निवारितवतीति न खलु

तस्य विषयविरागः स्वीकर्त्तुं शक्यते। एतदेव क्रमशो कौशलेन भगवता तस्याचेतसि प्रगाढ़ं प्रवेशयितुमारब्धम्। स तु स्वं विषयरागरहितं मत्वा भगवतस्तादृशं युक्तिराशिं स्वकीयप्रशंसनायैव विरचितं मन्यते स्म।

"सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।
ततो योगाय युज्यस्व नैवं पापमवाप्स्यसि॥"

इत्येतावानेव श्रीभगवत उपदेशः। अर्ज्जुनस्य तु तादृशं समताज्ञानं नासीत्। तथा चेत् कथं स आत्मीयनाशदुःखेनाभिभूतो रणान्निवृत्तो भवितुमर्हेत्? यस्य तु प्रवृत्तौ निवृत्तौ च तुल्यज्ञानं विष्ठायां चन्दने च समताबुद्धिस्तादृशो महामानव एव शान्तिमाप्नोति। स एव स्थितप्रज्ञसंज्ञां लभते। यस्माद्दुःखादर्ज्जुनस्य रणवासनानिवृत्तिः, स्थितप्रज्ञे जने तु तादृशस्य दुःखस्य सत्तैव न विद्यते।

"रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति॥
प्रसादे सर्व्वदुःखानां हानिरस्योपजायते।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्य्यवतिष्ठते॥"

इत्याद्युक्त्या भगवतैव तद् विज्ञापितम्। यस्य सुखदुःखादिष्विन्द्रियविषयेष्वनुमात्रमप्यासक्तिर्न विद्यते, स एव स्थितप्रज्ञपदभाग् महामानवः शान्तिं लब्धुं शक्नोति। अर्ज्जुनस्यासक्तिवशादेव शान्तिर्न जाता। अत्रोक्तम्—

"तस्माद् यस्य महाबाहो! निगृहीतानि सर्व्वशः।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता॥" इति
"आपूर्य्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्।
तद्वत्कामा यं प्रविशन्ति सर्व्वे, स शान्तिमाप्नोति न कामकामी॥" इति
"विहाय कामान् यः सर्व्वान् पुमांश्चरति निस्पृहः।
निर्म्ममो निरहङ्कारः स शान्तिमधिगच्छति॥" इति च।

तदानीं मोहग्रस्तोऽर्ज्जुनो भगवद्वाक्यरहस्यमभिप्रायमुपलब्धुमसमर्थः

किंकर्त्तव्यविमूढ़ इवाभवत्। स च भगवतः स्वोक्तिविरोधमाशङ्कमानः पुनस्तमेव तस्य प्रकृताभीष्टार्थविषये पप्रच्छ।

इतः प्रभृति तृतीयाध्याय आरब्धः। अयमेव तृतीयाध्यायः कर्म्मयोगसंज्ञया संज्ञितः। तस्मिन्नेव कर्म्मयोगविषये विस्तृतमालोचितम्। अप्रतिमप्रतिभावता पार्थेन पृष्टानां कर्म्मयोगविषयिणां प्रभूतानां प्रश्नानां प्रकृष्टान्युत्तराण्यस्मिन्नेव प्रथितयशसा भगवता श्रीकृष्णेन प्रदत्तानि।

"दूरेण ह्यवरं कर्म्म बुद्धियोगाद् धनञ्जय!"

इति प्रागुक्तां भगवदुक्तिं संस्मृत्य कथन्तदेवं कर्म्मणः निकृष्टतां जानन्नपि त्वं 'हतो वा प्राप्स्यसि स्वर्गम्' इत्याद्युक्त्या मां कर्म्मण्येव प्रवर्त्तयितुमिच्छसीति पृष्टः पुनर्भगवानर्ज्जुनेन। तथा चार्ज्जुनस्योक्तिः—

"ज्यायसी चेत् कर्म्मणस्ते मता बुद्धिर्ज्जनार्द्दन।
तत् किं कर्म्मणि घोरे मां नियोजयसि केशव॥"

कश्चिद् रिपुस्तदनुचरो वा कश्चित् प्रतिपक्षीयं वीरं मोहयितुं राक्षसोचितस्वभावः कश्चिदन्यो वा कमपि योगिनं योगात् प्रच्यावयितुमन्याय्यमपि वाक्चातुर्य्यं प्रकाशयितुमर्हति। भवांस्तु मे परमात्मीयः सखा सर्व्वदा हितकाङ्क्षी च। अतः कथं भवतैवं स्वोक्तिविरोधदूषितमिवान्याय्यदेशीयं वाक्चातुर्य्यं प्रकाश्यत इति सन्देहदोलामारूढो धनञ्जयः स्फुटमाह।

"व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम्॥" इति।

तस्यैवं सन्देहगर्भं प्रश्नं श्रुत्वा स्वप्रयुक्तेन भेषजेन किञ्चित् कार्य्यं कृतमिवेति मत्वा तं सन्देहमपनोदयितुं भगवान् वदति—न हि मादृशो जनः स्वोक्तिविरुद्धं वाक्यं वक्तुमर्हति, न च तव हितादन्यत् किमपि ममाभिलषितम्। त्वयैव मद्वचनस्याभिलषितार्थो नानुभूत इत्येवं सन्दिह्यते। मम वाक्ये व्यामिश्रताया गन्धोऽपि नास्ति। यथा हि 'जलपथेन गन्तव्यम्' 'नावा गन्तव्यम्' चेत्युक्तिद्वयस्यापातविरोधि-

तायाः प्रतिभासेऽपि वस्तुतो विरोधो नास्त्येव, यतो जलपथमाश्रित्यैव कश्चिज्जनो नावा गन्तुं शक्नोति, न तु जलपथव्यतिरेकेण तादृशस्य गमनस्य सम्भवः, अत्रापि तथैवावधेयम्। कर्म्ममार्गो ज्ञानमार्गश्चेति यद्यपि द्वौ मार्गौ श्रूयेते, तर्ह्यपि ज्ञातव्यमोतप्रोतभावेनैव तयोरवस्थानम्। यद्यपि,

"लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ।
ज्ञानयोगेन साङ्ख्यानां कर्म्मयोगेन योगिनाम्॥"

तथापि नैतदसङ्गतं, यतः,

"न कर्म्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते।
न च सन्न्यसनादेव सिद्धिं समधिगच्छति॥"

ननु 'नैष्कर्म्म्यात् सिद्धिरापद्यत' इति श्रूयते, कथन्तदा भगवान् तथैव मां नोपदिशतीत्येवं सन्देहस्याप्युत्तरमनेनैव श्लोकेन प्रदत्तम्। अस्यायमभिप्रायः—'निर्गतं कर्म्म यस्मात् तस्य भावो नैष्कर्म्म्यम्', अतः कर्म्मण आगमनाभावे विद्यमानताभावे वा कथन्तस्य निर्गमः सम्भवेत्? तेन कश्चिज्जनश्चेन्नैष्कर्म्यं लब्धुमिच्छति, तदा तेन प्राक् कर्म्मैव करणीयम्। पश्चादुपयुक्तकाले तस्य परित्यागादेव स नैष्कर्म्मं लब्धुमर्हेत्। यश्च पश्चात् कर्म्मत्याग उक्तः, सोऽपि तत्फलत्यागार्थं एव। वस्तुतस्तु केनापि कदापि कर्म्मणः सर्व्वथा त्यागो न सम्भवति। यद्यपि कर्म्मफलपरित्यागेन सिद्धिर्लभ्यत इत्युक्तं, तथापि न सा लभ्यते कर्म्मफलपरित्यागमात्रेणेति विज्ञापितं श्लोकस्यास्य द्वितीयार्द्धेन। सन्न्यसनं हि सम्यक् त्यागः। एव शब्दोऽन्यव्यावर्त्तनार्थः। अतः त्यागमात्रेणैव सिद्धिर्नापद्यते, तेन सह कर्म्मणो योगोऽप्यपरिहार्य्य एवेति पर्य्यालोचितार्थः। वस्तुतस्तु कर्म्मणः सर्व्वथाभावे नैष्कर्म्यमेव न सम्भवतीति विद्यते, नैष्कर्म्येऽपि कर्म्मणो योग इति नास्ति सन्देहावकाशः। अत्र,

'न कर्म्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते।'

इति यदुक्तं तदेव दृढीकरोति—

"न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्म्मकृत् ।
कार्य्यते ह्यवशः कर्म्म सर्व्वः प्रकृतिजैर्गुणैः ॥"

इति वाक्यार्थम् ।

भगवत्स्रष्टा ग्रहनक्षत्रादयः सर्व्वे एव चेष्टन्ते, का कथा मानवानाम् । यदा कस्यचिन्मनुष्यस्यान्यत् किमपि कर्म्म न विद्यते, तदासौ मननं करोति । स्मरण-मननादेरप्यभावे मृत्युरेव भवति । न हि कस्यचिज्जीवितजनस्य मनोव्यापारो निमेषार्द्धकालायापि विरतो भवितुमर्हति । तथा च श्रुतिः "मृत्युरत्यन्तविस्मृतिरिति" । संस्कारजन्यव्यापारश्च स्मृतिः, विगता स्मृतिर्यतोऽसौ विस्मृतिः । अत्यन्तविस्मृतिस्तु मृत्युं विना कदापि भवितुं नार्हतीति ज्ञात्वा सैव मृत्योर्नामान्तरमिति निगदितम् । तेनैवोपनिषत्प्रसिद्धेयं भगवदुक्तिर्विशुद्धैवेति न सन्देहः ।

ननु 'न गच्छामि, न खादामि, न हसामि' इत्येवं स्थिरनिश्चयं कृत्वा यथा वयं गमनादिकार्य्येभ्यो विरता भवितुमर्हामः, कथन्तथैव 'न किमपि कर्म्म करोमी'ति स्थिरीकृत्य तस्माद् विरता भवितुं नार्हेमेति संशयस्योत्तरं श्लोकस्यास्य शेषार्द्धेन प्रदत्तम् । यथा 'नाहं दुःखमनुभवामि' इत्येवं स्थिरीकृत्यापि कश्चित् प्राकृतो जनः स्वपुत्रमरणादिकमालोक्य न हि दुःखाद् विरतो भवितुमर्हति, तथैव कोऽपि मानवोऽन्यो वा कर्म्मणः सर्वथा निवृत्तो भवितुं नार्हति । या खलु प्रकृतिस्तादृशेन व्यापारकलापेन तादृशं जनं दुःखयति, सैव विगतकर्म्मवासनमपि जनं कर्म्मणि प्रवर्त्तयति । सत्त्वं रजस्तमश्चेति त्रयो गुणाः । एतेषामेकेनानेकेन वा प्रत्येकमेव वस्तुजातं परिपूर्णम् । मनुष्येष्वपि कुत्रचिदेतेषामेकस्य, कुत्रचिद् द्वयोः, कुत्रचिद् वा त्रयाणामेव बाहुल्यम् । गुणाश्च कर्म्मप्रयोजकाः । तेन प्रकृतिरेव कर्त्री गुणैः करणैर्मानवं कर्म्मणि प्रवर्त्तयतीति कर्म्म कर्त्तुमनिच्छन्नपि मानवोऽवश इव कर्म्म करोति ।

—(क्रमशः)

अकर्त्रभिप्रायार्थोऽयमारम्भः। तेन किं व्यादत्से विहगवदनमिति। अप्राप्तिपक्ष एव सूत्रविधानात् कर्त्तृगामिक्रियाफले भविष्यतीति पुरुषोत्तमः।

२०६। क्षान्तौ ण्यन्तागमेः॥

आगमयतेऽपराधं कृष्णः क्षमते इत्यर्थः। कालहरणेऽपि केचित्। आगयमस्व साधुमिति उदाहरन्ति च।

२१०। नौतेः पृच्छेश्चाङ् यदि पूर्व्वतः॥

आनुते क्रोशतीत्यर्थः। आपृच्छते अनुज्ञार्थं याचते इत्यर्थः।

---

निषेध इति शेषः। विपादिकां व्याददातीति विस्तारयतीत्यर्थः। पादस्फोटो विपादिकेत्यमरः। नदीति। नदी कर्त्री कूलं तटं व्याददाति विदारयतीत्यर्थः। स्वीयाङ्गेति। स्वीयञ्च तदङ्गं चेति स्वीयाङ्गं स्वीयाङ्गं कर्म्म यस्य तस्मात्तात्र एव निषेधः आत्मनेपदस्येति शेषः। अन्यच्चेति। अन्यञ्च अपरञ्च। किञ्चिद्वदनं मुखं व्यादेहीति विस्तारय इति दिशन्निव आज्ञापयन्निव स हरिरमरवैरिणो देवशत्रोर्बकस्य बकासुरस्य वक्त्रं मुखं व्याददे विदारितवान्। स्वीयाङ्गकर्म्मकत्वाद् वदनं व्यादेहि इत्यत्रात्मनेपदम्। स्वीयाङ्गकर्म्मकत्वाभावात् बकस्य वक्त्रं व्याददे इत्यत्र न आत्मनेपदनिषेधः। अकर्त्रभिप्रायार्थ इति क्रियाफलस्य कर्त्तृगामित्वाभावे आत्मपदार्थ इत्यर्थः। अतः क्रियाफलस्य कर्त्तृगामित्वाभाव एव निषेध इति। किमिति? हे विहग! वदनं किं व्यादत्से विस्तारयसि। अत्र क्रियाफलस्य कर्त्तृगामित्वान्न निषेध इति॥

२०६। क्षान्तौ। क्षान्तावर्थे ण्यन्तादागमेरुत्तरे कर्त्तर्य्यात्मनेपदं स्यात्। कालेति। कालहरणे गम्यमाने ण्यन्तागमेरुत्तरे आत्मनेपदं भवतीति केचित्। केचिदिति क्रमदीश्वरादय इत्यर्थः। आगमयतेः कालहरणे इति क्रमदीश्वरलक्षणम्। कालहरणं कालप्रतीक्षणम्। आगमयस्व साधुरिति शोधनकालप्रतीक्षणं साधु कारयेत्यर्थः॥

२१०। णौतेः। आङ् यदि पूर्व्वतः पूर्व्वस्मिन् वर्त्तते तदा नु स्तुतौ प्रछ ज्ञीप्सायाम् इत्येताभ्यामुत्तरे कर्त्तर्य्यात्मनेपदं स्यात्॥

२११। अन्वाङ्परिभ्यः क्रीडश्च ॥

अनुक्रीडते। एवम् आ परि। अत्र सर्व्वत्रोपेन्द्रा एव गृह्यन्ते न तु कृष्णप्रवचनीयादयो गौणमुख्यन्यायेन, तेन नेह कृष्णमनुक्रीडति।

२१२। समोऽकूजने इष्यते ॥

संक्रीडते। कूजने तु संक्रीडति शकटः।

२१३। शकेः सनन्तात् पृच्छायाम् ॥

हरिभक्तिं शिक्षेत।

---

२११। अन्वाङ्। अन्वाङ् परिभ्य उत्तरस्मात् क्रीड़ उत्तरे कर्त्तर्य्यात्मनेपदं स्यात्। अत्रेति अत्र प्रकरणे सर्व्वत्र सत्वादिप्रकरणे कृष्णप्रवचनीयादय इत्यादिपदेन, मधुनि विशन्ति भ्रमरा इत्यादौ नेर्व्विश इति न प्रवर्त्तते। बहु विजयति बनमित्यादौ पराजयति सेनेत्यादौ च विपराभ्यां जेरिति न प्रवर्त्तते। मधुनीति सप्तम्यन्तम्। बह्वीति वनविशेषणम्। विः पक्षी। परेति सेनाविशेषणम्। कृष्णप्रवचनीयाद्यग्रहणे हेतुमाह, गौणेति। कृष्णमनुक्रीड़तीति—कृष्णेन सह क्रीड़तीत्यर्थः ॥

२१२। समो। अकूजनेऽर्थे सम उत्तरस्मात्। क्रीड़ उत्तरे आत्मनेपदमिष्यते। सक्रीड़त इति सकर्म्मकं क्रीड़तीत्यर्थः। कूजने त्विति कूजनमव्यक्तध्वनिः। संक्रीड़तीति अव्यक्तध्वनिं करोतीत्यर्थः ॥

२१३। शकेः। पृच्छायामर्थे वर्त्तमानात् सनन्तात् शकेरुत्तरे कर्त्तर्य्यात्मनेपदं भवति शिक्षेतेति। शकः शिक्षङित्यनेन सना सह शकः शिक्षङादेशः। पृच्छेदित्यर्थः। ननु ञित्वादात्मनेपदं सिध्यत्येव, तथापि किमर्थं लक्षणं कृतमिति न निश्चितं, पृच्छायामेव भवतीति नियम न व्याख्येयः, तथा सति ङित्वात् शिक्षत इति आख्यातप्रकरणे यदुक्तं तद्विरुद्धं स्यात्। किञ्च, पृच्छाया अन्यत्र आत्मनेपदस्यानभीष्टत्वञ्चेतर्हि शिक्षङो ङिदनुबन्धत्वं च निरर्थकं स्यात्। हरिभक्तिं शिक्षेतेत्यादौ शकेरित्यादेर्विधिसूत्रत्वेन आत्मनेपदस्य सिद्धत्वात्। अथो वा आख्यातप्रकरणे आत्मपदप्रकरणस्याभावादेतत्सूत्रस्याप्यभावोऽतत्र तदपेक्ष्यैव तत्रात्मपदसुबोधाय ङित्वमिति पृथगुक्तमिति साधु ॥

२१४। नाथेराशिषि तन्मतम् ॥

विष्णुभक्तेर्नाथते। याञ्चायान्तु तां नाथति। यदातु द्विक्रियता प्रेरणं वाञ्छा च तदा वाञ्छाया आशीरूपतया आत्मपदं भवत्येव।

मार्गणैरथ तव प्रयोजनं
नाथसे किमु पतिं न भूभृतः॥

इत्यादि महाकविप्रयोगात्।

२१५। हर्षे च जीविकायाञ्च कुलायकरणेऽपि च॥

अपस्किरः। चतुष्पाच्छकुनिकर्त्तृकत्व एव ज्ञेयम्। निपातात् सुट्। अपस्किरते हृष्यन्, जीविकां कुर्व्वन्, नीड़ं कुर्व्वन् वा किञ्चित् प्रक्षिपतीत्यर्थः।

---

२१४। नाथेः। आशीः कामना तस्यामर्थे वर्त्तमानात् नाथेरुत्तरे आत्मनेपदं मतम्। आत्मनेपदित्वादात्मनेपदे नियमार्थं वचनम् आशिष्येवेति। विष्णुभक्तेर्नाथत इति नाथृ याच्ञादिषु नाथतेः कर्म्म वा कामनायामिति कर्म्माभावपक्षे सम्बन्धषष्ठी विष्णुभक्तिमिच्छतीत्यर्थः। तां विष्णुभक्तिं नाथतीति याचत इत्यर्थः। मार्गणैरिति। उ भो भूभृतः राज्ञः प्रेरयन्ति यदि तं पतिं न कामयसे, तदा तव मार्गणैरन्वेषणैः किं न किमपीत्यर्थः। विष्णुभक्तेरित्यत्र गौणे कर्म्मणि षष्ठी। दुहादेर्गौणे कर्म्मणि युक्तमित्युक्तत्वात्॥

२१५। हर्षे। हर्षे जीविकायां कुलायकरणे च विषये अपस्किर उत्तरे कर्त्तर्य्यात्मनेपदं स्यात्। जीविका वृत्तिः। पेषी कोषो द्विहीनेऽण्डं कुलायो नीड़मस्त्रियामित्यमरः। चतुष्पादिति चतुष्पाच्च शकुनिश्च चतुष्पाच्छकुनी तौ कर्त्तारौ यत्र स चतुष्पादिति चतुष्पाच्च शकुनिश्च चतुष्पाच्छकुनी तौ कर्त्तारौ यत्र स चतुष्पाच्छकुनिकर्त्तृकः तस्य भावस्तत्त्वं तस्मिन्। चतुष्पाद् वृषभादिः। शकुनिः पक्षी। निपातात् सुड़िति सुट् निपात्यत इत्यर्थः। अस्माभिर्यदुक्तं कालापाश्च प्रकारान्तरेण तदेवाह।—तद्यथा—अपाच्चतुष्पाच्छकुनिषु इष्टभक्ष्यनिवासार्थेष्वालेखने इति किर इत्यनुवर्त्तते। अपस्किरत इति। कृ विक्षेपे तुदादिर्वृषभः शकुनिश्चेति शेषः। चतुष्पात्कर्त्तृकत्वे अपस्किरते वृषभ इति

२१६। अनुहरतेर्गतिताच्छील्य इष्यते ॥

पवनमनुहरते हनूमान्। ताच्छील्यमात्र इति तु भर्त्तृहरि-पुरुषोत्तमौ।

२१७। शपेस्तु शपथे तत् स्यात् ॥

गुरवे शपते।

२१८। स्थो निर्णीतौ प्रकाशने प्रतिज्ञायाम् ॥

स्थ इति प्रभुश्च। वैष्णवाचार्य्ये विचारस्तिष्ठते। कृष्णाय तिष्ठते गोपी। कृष्णं परमातिष्ठते। श्रेष्ठां प्रतिज्ञां करोतीत्यर्थः।

२१९। प्रावसंवेश्च ॥

---

हृष्यन् किञ्चित् प्रक्षिपतीत्यर्थः। चतुष्पाच्छकुनिकर्त्तृकत्वाभावादपस्किरति मनुष्य इत्यादौ न भवति। हृष्यन् किञ्चित् प्रक्षिपतीत्यर्थः॥

२१६। अनु। गतेस्ताच्छील्यं गतिताच्छील्यं तस्मिन् गम्यमाने नतु पूर्व्वात् हृञ् हरणे इत्यस्मादुत्तरे कर्त्तर्य्यात्मनेपदम्। इष्यते ताच्छील्यं तत्स्वभावता। पवनमनुहरते हनूमानिति। पवनस्येव गमनमस्येत्यर्थः। पवनो वायुः, स तु हनूमत्पिता॥

२१७। शपेः। शपथेऽर्थे वर्त्तमानात् शप आक्रोश इत्यस्मादुत्तरे कर्त्तरि तदात्मनेपदं स्यात्। गुरवे शपत इति गुरुं प्रति शपथं कुर्व्वन् सत्यमिदमिति ज्ञापयतीत्यर्थः। श्लाघ-हृङ्-स्था-शपां ज्ञापयितुमिष्ट इत्यनेन सम्प्रदानम्। शपथ इति किम् ? अवैष्णवं शपति आक्रोशतीत्यर्थः॥

२१८। स्थो। निर्णीतौ गम्यमानायां प्रकाशने प्रतिज्ञायाञ्च अर्थे वर्त्तमानात् स्थ उत्तरे च कर्त्तर्य्यात्मनेपदं स्यात्। निर्णीतिर्निर्णयः। प्रकाशनं स्वाभिरुचिप्रकटीकरणम्। प्रतिज्ञा अभ्युपगमः अङ्गीकार इति यावत्। वैष्णवाचार्य्ये विचारस्तिष्ठत इति। अत्र धातोरवस्थानमेवार्थः निर्णीतिस्तु गम्येति कृष्णाय तिष्ठते गोपीति कृष्णं प्रति स्वाभिरुचिं प्रकाशयतीत्यर्थः। श्लाघेत्यादिना सम्प्रदानम्। कृष्णं परमातिष्ठत इति अङ्गीकरोतीत्यर्थः। पत्रं सर्व्वपरम्। आङैवायमर्थो द्योत्यते॥

प्रतिष्ठते। एवमव सं वि।

२२०। अथोदोऽनूर्द्ध्व चेष्टने ॥

हरिसेवायामुत्तिष्ठते तत्रोत्सहते इत्यर्थः। अनूर्द्ध इति किम्? आसनादुत्तिष्ठति कृष्णः। अचेष्टामात्रेऽपि न हरिभक्तेः सुखमुत्तिष्ठति।

२२१। देवार्चा-सङ्गतिकृति-मैत्रीषु पथि कर्त्तरि।
मन्त्रस्य करणत्वे चाकर्म्मत्वे चोपपूर्व्वकात् ॥

भक्तो हरिमुपतिष्ठते। गङ्गा यमुनाम्, अर्ज्जुनः कृष्णम्, पन्थाः मथुराम्, वैष्णवो मन्त्रेण कृष्णं, हरिरनुव्रते उपतिष्ठते। लिप्सायामित्येके —भिक्षुरन्नमुपतिष्ठते उपतिष्ठति वा। स्थ इति निवृत्तम्।

---

२१९। प्राव। प्र अव सं वि इत्येतेभ्य उत्तरस्मात् स्थ उत्तरे कर्त्तर्य्यात्मनेपदं स्यात्। प्रतिष्ठत इति गच्छतीत्यर्थः ॥

२२०। अथो। अनूर्द्धचेष्टनेऽर्थे वर्त्तमानादुद उत्तरस्मात् स्थ उत्तरे कर्त्तर्य्यात्मनेपदं स्यात्। अनूर्द्धञ्च तच्चेष्टनञ्चेति विग्रहः। ऊर्द्ध्वव्यतिरिक्ते चेष्टने इत्यर्थः, हरिसेवायामुत्तिष्ठते इति अचेष्टनमनूर्द्धमेव। आसनादुत्तिष्ठति कृष्ण इति अत्र चेष्टनमूर्द्धः। अचेष्टामात्रेऽपि नेति अनूर्द्ध्व चेष्टन इत्युक्तत्वादिति शेषः। हरिभक्तेः सुखमुत्तिष्ठतीति उत्पद्यत इत्यर्थः। उत्पत्तेरचेष्टारूपत्वादत्र-धातोरचेष्टनार्थत्वम् ॥

२२१। देवा। देवार्चायां सङ्गतिकृतौ मैत्र्याञ्च अर्थे उपपूर्व्वकात् स्थ उत्तरे कर्त्तर्य्यात्मने पदं स्यात्। पथि कर्त्तरि सति मन्त्रस्य करणत्वे च सति अकर्म्मकत्वे च सति उपपूर्व्वकात् स्थ उत्तरे कर्त्तर्य्यात्मनेपदं स्यात्। देवार्च्चा देवपूजा। सङ्गतिकृतिः सङ्गमकरणम्। मैत्री मित्रता। हरिमुपतिष्ठत इति पूजयतीत्यर्थः। गङ्गा यमुनामुपतिष्ठत इति उपश्लिष्यतीत्यर्थः। अर्ज्जुनः कृष्णमुपतिष्ठत इति कृष्णेन सह मैत्रीं करोतीत्यर्थः। पन्था मथुरामुपतिष्ठत इति गच्छतीत्यर्थः। वैष्णवो मन्त्रेण कृष्णमुपतिष्ठते इति वशीकरोतीत्यर्थः। अन्यस्य करणत्वे तु न। कृष्णमुपतिष्ठति यौवनेन गोपी वशीकरोतीत्यर्थः। हरिरनुव्रते उपतिष्ठतेऽत्र अनुगतजने कृपयतीत्यर्थः। लिप्सा। लब्धुमिच्छायां गम्य-

२२२। समः पृच्छति-गमृच्छि-स्वृ-श्रुभ्यो वेत्तितस्तथा।
दृशोऽर्त्तेश्चाकर्म्मकत्वे॥

अकर्म्मकत्वे इति प्रसुश्च। संपृच्छते संगच्छते समृच्छिष्यते इत्यादि। अर्त्तेस्तु समारत। अरामान्येत्यादौ वेत्तेरुट् तु वा। संविद्रते संविदते।

२२२३। आङ्पूर्व्वात्तु यमेर्हनेः॥

आयच्छते आहते स्वयमेव। सकर्म्मकत्वे तु, आयच्छति आहन्ति कंसम्।

२२४। उद्विभ्यां तपतेः॥

---

मानायां सत्यामुपपूर्व्वात् स्थः कर्त्तर्य्यात्मनेपदं स्यादित्येके॥

२२२। समः। प्रच्छ ज्ञीप्सायां, गमऌ गतौ, ऋच्छ प्रापणे, स्वृ शब्द-पतातयोः, श्रु श्रवणे, विद ज्ञाने, दृशिर प्रेक्षणे ऋ गत्यादावित्येतेभ्यः कर्त्तर्य्यात्मने-पदं स्यात्। संपृच्छते सम्यग् जानाति, संगच्छते मिलतीत्यर्थः। ऋ गतौ प्रापणे च भ्वादिः, ऋ गतौ ह्वादिः द्वयोरपि ग्रहणविशेषात् कृष्णधातुके ऋ-ऋच्छोः समासरूपत्वात् रामधातावुदाहरणं दर्शितम्। आरामान्येत्यादावि-त्याख्यातसूत्रं संविद्रते इति बहुवचनान्तम्॥

२२३। आङ्। आङ् पूर्व्वो यस्य तस्माद् यमेर्यमधातोर्हनेर्हनधातोश्च कर्त्तर्य्यात्मनेपदं स्यात्। हनधातोरकर्म्मत्वार्थं कर्म्मकर्त्तृत्वम्। ननु हिंसा कर्म्मस्था अतः कर्म्मस्थधात्वर्थत्वात् कर्म्मवद्भावे कथमकर्म्मकत्वम्। उः। प्रधानाप्रधानयोः प्रधाने कार्य्यसम्प्रत्यय इति न्यायात् अतिदेशिककार्य्यमनित्य-मिति न्यायाच्च कर्म्मवत्त्वेऽप्यकर्म्मकत्वम्। तपः कर्म्मकत्वे आत्मपदविधानं यक् तु तपःकर्म्मण्येत्यादिना कर्त्तरि कर्म्मवत् कार्य्यं करणीयम्। तपःकर्म्म-कस्यात्मपदविधानादन्यत्राकर्म्मकत्वे आत्मपदं तदेवाह॥

२२४। उद्विभ्यां चेति। स्वाङ्गकर्म्मकादनन्तरं वक्ष्यति च अत-एवात्र कंसमिति प्रत्युदाहरणे कर्म्म दर्शितम्। उद्विभ्यां साङ्गकर्म्मकत्वे तपः आत्मपदं परसूत्रे भविष्यतीति ज्ञेयम्। तथा च जुमरलक्षणम्। साङ्गकर्म्म-

उत्तपते वितपते। सकर्म्मकत्वे तु, उत्तपति कंसम्। अकर्म्मकत्वं निवृत्तम्।

२२५। स्वाङ्गकर्म्मकाच्च यमादितः ॥

प्राण्यङ्गं मूर्त्तिवत् साङ्गं विना द्रवविकारजे।
तद्वत् प्राणिप्रतिकृतेरङ्गं स्वाङ्गमितीष्यते ॥

आयच्छते पाणिम्। विच्छिद्य पतितत्वेऽपि आयच्छते छिन्नपाणिं वा। द्रवत्वे विकारत्वे च न, आयच्छति रक्तं शोथं वा। अमूर्त्तिमत्वे च न, आयच्छति बुद्धिम्। प्राणिप्रतिमायामपि तु स्यादेव, आयच्छते प्रतिमापाणिम्। एवं हनि-तपी उदाहार्य्यौ।

---

काच्चोद्वितपाङ् यम-हन इति। ननु कथमेकस्य धातोरकर्म्मकत्वं सकर्म्मकत्वञ्च। उः। कर्म्मणोऽविवक्षयाऽकर्म्मत्वम्। तथा च जुमरः, शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यते इत्यनुक्ते कर्म्मणि स्थितेऽप्यकर्म्मकत्वमिति ॥

२२५। स्वाङ्गम्। स्वकीयमङ्गं कर्म्म यस्य तस्मात् आङ्पूर्व्वाद् यमादेरात्मपदं भवति। प्राण्यङ्गमिति। द्रवं विकारजञ्च विना प्राणिनोऽङ्गं मुखादि स्वाङ्गमिष्यते इच्छाविषयी क्रियते इत्यर्थः। तत्र बुद्ध्यादेरपि प्राणिस्थत्वात्तस्य स्वाङ्गत्वं वारयितुमाह,—मूर्त्तिमदिति। काठिन्यादिस्पर्शविषयो मूर्त्तिस्तदभावाद् बुद्ध्यादेण स्वाङ्गत्वमिति। तथा द्रवविकार-दयोरपि प्राण्यङ्गत्वात् स्वाङ्गत्वे प्राप्ते निवारयति विनेति। द्रवञ्च विकारञ्च ते विनेत्यर्थः। तत्र रक्तकफादेर्द्रवात्मकत्वात् न स्वाङ्गत्वम्। विकारो धातुवैषम्यं तज्जातत्वात् शोथादेरपि न स्वाङ्गत्वमिति। प्राण्यङ्गं यथा स्वाङ्गं तद्वत् प्राणिप्रतिकृतेः प्रतिमाया अपि अङ्गं स्वाङ्गमिष्यते। आयच्छत इति यमुपरमे पाणिं उपयमयतीत्यर्थः। छिन्नं पाणिम् आयच्छते इत्यत्र पाणिस्थत्वाभावात् कथं स्वाङ्गत्वं नचेत् कथमात्मपदम् अत आह विच्छिद्य पतितत्वेऽपीत्यादि। तथाच जुमरः। अतस्थं तत्र दृष्टं चेति तदानीं तत्रातत्स्थम् अप्राणिस्थं किन्त्वादौ तत् प्राणिनि दृष्टमित्यर्थः। एवं हनितपी उदाहार्य्यौ इति आङ्पूर्व्वौ हनीतपी इति। एवं सति जुमरमतं न सङ्गतम्। तन्मते उद्भ्यां तप आत्मपदं

२२६। प्रादेरूहास्यतिभ्यां वा ॥

समूहति समूहते। निरस्यति निरस्यते।

२२७। ह्वः संनिव्युपतः सदा ॥

संह्वयते इत्यादि।

२२८। आह्वः स्पर्द्धे ॥

कंसः श्रीकृष्णमाह्वयते।

२२९। गन्धने तु भर्त्सने यत्नसेवयोः।

प्रकथे चोपयोगे च साहसे तु कृञो भवेत्।

कंसः कृष्णार्थमुत्कुरुते उदाकुरुते वा हिंसापूर्व्वकं सूचयतीत्यर्थः। कृष्णपक्षमुत्कुरुते भर्त्सयतीत्यर्थः। वैष्णवो गङ्गाजलस्योपस्कुरुते सौगन्ध्यादिनाभिरुचितं करोतीत्यर्थः। भक्तः कृष्णमुपस्कुरुते प्रकुरुते वा सेवते इत्यर्थः। कृष्णो गीतां प्रकुरुते प्रकर्षेण कथयतीत्यर्थः, असंख्यं धनं प्रकुरुते धर्म्माद्यर्थं विनियुङ्क्ते इत्यर्थः। गोप्यः कृष्णं प्रकुर्व्वते। तत्र साहसात् प्रवर्त्तन्ते इत्यर्थः।

२३०। पूजाचार्य्यकृति-ज्ञानोत्क्षेपणेषु भृतौ व्यये।
नोञी विगणने कर्त्तृस्थिते चामूर्त्तकर्म्मणि ॥

---

नाङस्तस्मात् उपेन्द्रस्तु प्रयोगानुसारेणोपकल्पनीयस्तेन सर्व्वं समञ्जसम् ॥

२२६। प्रादेः। ऊह वितर्के, असु क्षेपणे इत्येताभ्यां प्रादेरुत्तराभ्याम् आत्मपदं वा भवति ॥

२२७। ह्वः। सुगमम् ॥

२२८। आह्वः। स्पर्द्धनं स्पर्द्धः तस्मिन् गम्यमाने आङपूर्व्वात् ह्वेञ स्पर्द्धायामित्यस्मादात्मपदं स्यात् ॥

२२९। गन्ध। गन्धने अपकारप्रयुक्त्या हिंसासूचने प्रादेः कृञ आत्मपदं स्यात्। हिंसासूचकापकारप्रयोग इत्यर्थः। एवं भर्त्सनादावर्थेऽपि कृञ आत्मपदं भवेत्। उपयोगः धर्म्मादिविषयविनियोगः। उत्कुरुते प्रकुरुते वेत्यादौ उपेन्द्रान्तरं दर्शयित्वा यद्वेति उक्तमेतेनैतत् सूचितं,

(२९८) चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ॥
(२८९) तद्वृन्दे कैशिकं कैश्य-(२९०) मलकाश्चूर्णकुन्तलाः ।
(२९१) ते ललाटे भ्रमरकाः (२९२) काकपक्षः शिखण्डकः ॥
(२९३) कवरी केशवेशो-(२९४) ऽथ धम्मिल्लः संयताः कचाः ।

---

उत्तेति। पञ्चकं मस्तके। शृणातेरसुन्निरच्। "निचकर्त्त शिरान् द्रौणिर्नालेभ्य इव पङ्कजान्" इत्यादि दर्शनाददन्तश्च। शीर्षं निपातितं तालव्यादि मूर्द्धन्यान्तम्। मृडः कण् मूर्द्धदेशः। मसो परिमाणे क्तः कः स्वार्थे। मस्तश्च—'दण्डकमण्डलुमण्डितहस्तः सुललिततिलक-विभूषित-मस्तः' इति प्रयोगात् ॥२८७

चीति। पट्कं केशे। चिन्वन् वर्द्धमानः कूर्य्यते छिद्यत पृषो-दरादिः। कुन्तं लाति कः। बलेर्घञ्। कच बन्धनेऽच्। के मस्तके शेते तिष्ठति शीङोऽधिकरणे चेति डः। शिरसि रोहति कः ॥२८८

कैशीति। द्वयं केशसमूहे। समूहे इकण्-यणौ ॥२८९

अलकेति। भङ्गुरकुन्तला अलकाः। अलञ् भूषणे वुण्। "प्रधाना भङ्गुराः केशा अलकाः क्लीबपुंसयो"रिति हड्डः। अतएव "स्वभाववक्राण्य-लकानि तासाम्" इति भारविः ॥२९०

त अलका ललाटे लम्बमाना भ्रमरा इव कः भ्रमरकाः ॥२९१

केति। द्वयं क्षत्रियकुमाराणां शिखापञ्चके। केचित् सामान्य-चूड़ायामाहुः। "शिखण्डौ तु शिखाबर्ह" इति तालव्यादौ रभसः ॥२९२

केति द्वयं केशरचनामात्रे। "खोपा" इति ख्याते इति केचित्। कवरात् कैश्य इति ईप्रत्ययः ॥२९३

कुसुमगर्भकेशो मौक्तिकादिर्बहिर्बद्धो धम्मिल्लः पृषोदरादिः। लकारद्वययुक्तः ॥२९४

(२९५) शिखा चूड़ा केशपाशो (२९६) व्रतिनस्तु जटा सटा ॥
(२९७) वेणिः प्रवेणिः (२९८) शीर्षण्य-शिरस्यौ विशदे कचे।
(२९९) पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे ॥
(३००) तनूरुहं रोम लोम (३०१) तद्वृद्धौ श्मश्रु पुंमुखे।
(३०२) आकल्पवेशौ नेपथ्यं प्रतिकर्म्म प्रसाधनम् ॥

---

शीति। त्रयं शिरोमध्यस्थचूड़ायाम्। चुदेरङि चूड़ा निपातिता। अल्पः केशः केशपाशः, नदादित्वाद यः ॥२९५

व्रतीति। द्वयं व्रतिनः शिखायाम। जट संघाते सट अवयवे दन्त्यादिरच् ॥२९६

वेणिरिति। प्रोपितभर्तृकादिभिर्या बध्यते तत्र। वीधातोर्णिः, उणादिषु णिरुवीश्चेति स्त्रीत्वम्। प्रेत्यन्योपसर्गनिवृत्त्यर्थम। पक्षे ई प्रत्ययः ॥२९७

शीति। द्वयं परस्परासंस्पृष्टकेशे। शीर्षशिरोभ्यां शिरसि भवे ण्य-यौ ॥२९८

पाश-पक्ष-हस्ताः कचात् कचपर्य्यायशब्दात् परे सन्तः समूहार्था इत्यर्थः। यथ—"रतिविगलितवन्धे केशपाशे प्रियायाः" इति। एवं केशपक्षः केशहस्तादिश्च ॥२९९

त्रेति। त्रयं लोमानि। तन्वां रोहति कः तनूरुहम्। तनूजादिच् "तनूजालीजालं स्तनयुगलतुम्बीफलयुतम्" इति शान्तिशतके। रुहे-र्म्मनि अन्त्यलोपे कपिलिकादित्वाल्लत्वम् ॥३००

पुंसां मुखे वृद्धं रोम श्मश्रु दाड़ीति ख्याते। श्मनि मुखे श्रयते क्विप्। श्म मुखे काननेऽपि चेति रुद्रः श्मश्रु शिंशपेति तालव्ये उष्मभेदः ॥३०१

आकेति। पञ्चकं सुवर्णचन्दनादिकृतशरीरशोभायाम्। आक-ल्प्यते क्ळृपेर्घञ्। "नेपथ्ये गृहमात्रे च वेशो वेश्यागृहेऽपि चेति" ताल-

(३०३) दशैते त्रिष्वलङ्कर्त्ताऽलङ्करिष्णुश्च मण्डितः ।
(३०४) प्रसाधितोऽलङ्कृतश्च भूषितश्च परिष्कृतः ।
(३०५) विभ्राट् भ्राजिष्णु-रोचिष्णू (३०६) भूषा तु स्यादलङ्क्रिया ।
(३०७) अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम् ॥
मण्डनञ्चा-(३०८) ऽथ मुकुटं किरीटं पुंनपुंसकम् ।
(३०९) चूड़ामणिः शिरोरत्नं (३१०) तरलो हारमध्यगः ॥
(३११) बालपाश्या पारितथ्या (३१२) पत्रपाश्या ललाटिका ।

---

व्यान्ते रुद्रः। वेवेष्टि शरीरमिति वेशो मूर्द्धन्यान्तश्च। "द्वेषविध्वंशमपि सद्वेष"मिति माघचरिते विरुद्धालङ्कारात्। नेपथ्यं पृषोदरादि। प्रतिक्रियते' इति मन्। प्रसाध्यते युट् ॥३०२

दशेति। 'इह दशैते' इत्याद्यलङ्क्रियान्तं सार्द्धं पद्यं क्वचिदेव पुस्तके दृश्यते, तच्च सुगमार्थमेव तत्र अलमिति त्रयमलङ्कारकर्त्तरि ॥३०३

प्रसेति चतुष्कमलङ्कृते ॥३०४

वीति। त्रयं दीपनशीले ॥३०५

भूषेति। द्वयमलङ्करणक्रियायाम् ॥३०६

अलमिति। पञ्चकं हाराद्याभरणे। अलं क्रियतेऽनेन घञ्। आभ्रियते इति कर्म्मणि युट्। परिष्क्रियते विभूष्यते मण्ड्यतेऽनेनेति घञ्-युटौ ॥३०७

मुकुटमिति। द्वयं मुकुटे। मकि मण्डने इत्यस्य पृषोदरादित्वाद्रूपम्। मुकुटं मकुटं विदुरिति शब्दार्णवः। किरतेः कीटन् ॥३०८

चुड़ेति। द्वयं मुकुटस्थनायकमणौ ॥३०९

तेति। हारमध्यगो विशिष्टनायकभूतो मणिस्तरलः। तारं लाति कः, संज्ञात्वाद्ध्रस्वः ॥३१०

(३१३) कर्णिका तालपत्रं स्यात् (३१४) कुण्डलं कर्णवेष्टनम् ॥
(३१५) ग्रैवेयकं कण्ठभूषा (३१६) लम्बनं स्याल्ललन्तिका ।
(३१७) स्वर्णैः प्रालम्बिकाऽथोरः सूत्रिका मौक्तिकैः कृता ॥
(३१८) हारो मुक्तावली (३१९) देवच्छन्दोऽसौ शतयष्टिका ।

---

बालेति। द्वयं सीमन्तिकास्थितायां स्वर्णादिरचितायां पट्टिकायां "सिथीपाटी" इति ख्यातायाम्। बालं पाशयतीति यः, परितः सर्व्वतः तथा भूता पारितथ्या, परितथा शब्दात् यण् ॥३११

पत्रेति। द्वयं सुवर्णादिरचितललाटाभरणे ॥३१२

कर्णीति। द्वयं कर्णताड़काख्ये सुवर्णाभरणे ॥३१३

कुण्डेति। द्वयं कर्णभूषणे "कुण्डल" इति ख्याते। कुण्डेः कलच्। कर्णौ वेष्ट्येते अनेन युट् ॥३१४

ग्रैवेति। द्वयं कण्ठभूषायां "गुणिपात" इति ख्यातायाम्, ग्रीवां भूषयत्येयण् कः स्वार्थे ॥३१५

लेति। द्वयं लम्बमानग्रीवाभरणे ॥३१६

सैव ललन्तिका सुवर्णैः कृता चेत् प्रालम्बिका ॥३१७

सैव मुक्तामयी उरःसूत्रिकाख्या।' हेति। द्वयं मुक्तामालायां ह्रियते मनोऽनेन घञ्। मुक्तानामावली दीर्घा पंक्तिः सा च ग्रथितैव भूषणप्रकरणात्। भिदादिपाठात् हारापि—"हारा मुक्तावली हारः" इति रभसः ॥३१८

असौ हारः शतयष्टिकः शतसूत्रनिर्म्मितश्चेत् "देवच्छन्दः" इत्युच्यते। देवैश्छन्द्यते परिधीयते घञ् यष्टिर्लतासरः सारः इत्येकार्थाः ॥३१९

अथ गुत्सादयो यष्टिभेदात् हारविशेषा भवन्ति। तत्र, "द्वात्रिंशद्यष्टिके गुत्सगुच्छौ हारेऽथ गोस्तनः।" चतुःशरोऽथ गुच्छार्द्धश्चतुर्व्विंशतियष्टिके। गुत्सार्द्धश्चार्द्धहारस्तु चतुःयष्टिसरो मतः। अथ

(३२०) हारभेदा यष्टिभेदा गुत्स-गुत्सार्द्ध-गोस्तनाः ॥
अर्द्धहारो माणवक एकावल्येकयष्टिका ।
(३२१) सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकैः ॥
(३२२) आवापकः पारिहार्य्यः कटको वलयोऽस्त्रियाम् ।
(३२३) केयूरमङ्गदं तुल्ये (३२४) अङ्गुलीयकमूर्म्मिका ॥
(३२५) साक्षराङ्गुलिमुद्रा स्यात् (३२६) कङ्कणं करभूषणम्
(३२७) स्त्रीकट्यां मेखला काञ्ची सप्तकी रसना तथा ॥

---

माणवको ज्ञेयो हारो विंशतिषष्टिकः" इति एका यष्टिका एकावली ॥३२०

सैव सप्तविंशतिमौक्तिकैः कृता नक्षत्रमाला ॥३२१

आवेति। चतुष्कं वलये। आवपति हस्ते वुण्। आवयक इति क्वचित् ॥३२२

केयूरमिति। द्वयं ताड़ इति ख्याते। "केयूवान् सर्व्वबाहुषु" इति चण्ड्यां पुंस्यपि ॥३२३

अङ्गुलीति। द्वयमङ्गुल्याभरणे। जिह्वामूलाङ्गुलिभ्यां तत्र भवे ईयः। "अयं मैथिल्यभिज्ञानं काकुत्स्थस्याङ्गुलीयकः" इति भट्टौ पुंस्यपि प्रयुक्तम्। ऊर्म्मिरिव ऊर्म्मिका ॥३२४

साक्षरेति। सा ऊर्म्मिका अक्षरवती चेदङ्गुलिमुद्राख्या ॥३२५

केति। द्वयं कङ्कणे। कणति इति कङ्कणम्। क्लीबे स्यान्मण्डने सूत्रे कङ्कणं करभूषण"मिति मूर्द्धन्यान्ते रभसः। रत्नकोषे तु मण्डनसूत्रे "कङ्कणो ना प्रतिसर" इति पुंस्युक्तम्। "नितम्बे पत्राली नयनयुगले कङ्कणभर" इति शेषाच्च मूर्द्धन्यान्तम् ॥३२६

मेखलेति। पञ्चकं स्त्रीकट्याभरणे। तत्र च "एकषष्टिर्भवेत् काञ्ची मेखला सप्तयष्टिका। विंशत्या सप्तकी ज्ञेया कलापः पञ्च-

क्लीबे सारसनं चा-(३२८) ऽथ पुंस्कट्यां शृङ्खलं त्रिषु।
(३२९) पादाङ्गदं तुलाकोटि-र्मञ्जीरो नूपुरोऽस्त्रियाम् ।
हंसकः पादकटकः (३३०) किङ्किणी क्षुद्रघण्टिका।
(३३१) त्वक्फल-कृमि-रोमाणि वस्त्रयोनिर्दश त्रिषु ।
(३३२) वाल्कं क्षौमादि (३३३) फालन्तु कार्पासं बादरञ्च तत्।
(३३४) कौशेयं कृमिकोशोत्थं (३३५) राङ्कवं मृगरोमजम् ॥

---

विंशकः" इत्यन्यत्र। इह तु भेदो नादृतः स्त्रीकट्याभरणसामान्यतः। रसना दन्त्यतालव्ये प्रागुक्ता। सह आरसनेन वर्त्तते सारसनम् ॥३२७

पुंस्कट्याभरणञ्चेत् शृङ्खलम्। शिञ्जानः स्खलति पृषोदरादिः। तालव्यादिरयम् ॥३२८

पेति। पट् नूपुरे। केचित्तु हंसादिद्वयं रवशून्ये पादभूषणे आहुः, साहचर्य्यस्य व्यभिचारात् तुलाकोटिः स्त्रियाम्। इतोऽन्यार्थादनादेशाद्वा क्तेरित्यत्र तुलाकोटिस्तुला कोटी'ति श्रीपतिनोदाहृतश्च। हंस इव कारयति डः ॥३२९

कीति। द्वयं घाघर इति ख्याते। किं कुत्सितं कणति पृषोदरादिः। किङ्किणी चणकोऽपि चेति णत्वभेदः ॥३३०

त्वगिति। त्वगादीनि चत्वारि वस्त्रयोनिर्वस्त्राणां कारणम्। क्षौमादिवर्ज्जं वाल्कफालादीनि निष्प्रवाण्यन्तानि दश त्रिषु। चकरादेकादशकश्च ॥३३१

क्षौमादि परतो वक्ष्यमाणमिह वाल्कस्य विवरणार्थमुक्तम् क्षौमादीत्यादिना नेत्रपट्टादि। वाच्यलिङ्गकाण्डोऽमरमालायां—"कार्पासं बादरं प्रोक्तं दुकूलाद्यञ्च वाल्कलम्! कौषेयं कृमिजञ्चापि राङ्कवं मृगरोमजम्। तन्त्रकञ्च नवं ज्ञेयं निष्प्रवाणि तथैव च"। तत्र क्षौमं पट्टभवं कौषेयं "तसर" इति ख्यातम् "मृगो मेषादिस्तल्लोमजमपि रूढ्या राङ्कव" मिति गोवर्द्धनः ॥३३२-३३५

(३३६) अनाहतं निष्प्रवाणि तन्त्रकञ्च नवाम्बरे ।
(३३७) तत् स्यादुद्‌गमनीयं यद्धौतयोर्व्वस्त्रयोर्युगम् ॥
(३३८) पत्रोर्णं धौतकौशेयं (३७९) बहुमूल्यं महाधनम् ।
(३४०) क्षौमं दुकूलं स्याद्(३४१) द्वे तु निवीतं प्रावृतं त्रिषु ॥
(३४२) स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर्वस्तयोर्द्वयोः ।

---

अनेति। त्रयं नवीनवस्त्रे। "ईषद्धौतं नवं शुक्लं सदृशं यन्न धारितम्। अनाहतं विजानीयात् सर्व्वकर्म्मसु पावनम्।" इति पुराणम्। प्रवाणिस्तन्त्रकुण्डस्ततो निर्गतम्। 'तन्त्रविमुक्तं वासो निष्प्रवाणी'ति हारावली। तन्त्रान्नवोद्धृतं तन्त्रकम् ॥३३६

प्रक्षालितवस्त्रयुगलमुद्‌गमनीयम्। उक्तञ्च क्लीवकाण्डे वोपालितेन,—"स्यादुत्तरीयमंशुकमुद्‌गमनीयं प्रधौतवस्त्रयुग"मिति। "गृहीतप्रत्युद्‌गमनीयवस्त्रा" इति कुमारे प्रत्युद्‌गमनीयञ्च ॥३३७

धौततसरवस्त्रं पत्रोर्णम् ॥३३८

यत्किञ्चिद्‌बहुमूल्यं वस्तु महाधनमिति न तु वस्त्रमेव प्रस्तावात्। तथाच "पुराधिरूढः शयनं महाधनम्" इति भारविः ॥३३९

क्षौममिति। द्वयं पट्टवस्त्रे। टु क्षु रु कु शब्दे मः। अंशुकञ्चोत्तरीयञ्च दुकूलं क्षौममस्त्रिया"मित्यमरमालायां क्लीवकाण्डम्। यः पुनः क्षुमाशब्दादणि विकारवाची क्षौमशब्दः स तु वाच्यलिङ्गः। क्षौमी शाटी क्षौमः पटः क्षौममाच्छादनम् ॥३५०

निवीति। द्वयं प्रावृतवस्त्रे। अञ्चलवस्त्र इति ख्याते। व्येञ् संवरणे क्तः, सम्प्रसारणे दीर्घत्वञ्च ॥३५१

देति। द्वयं दशोति ख्याते वस्त्रावयवे। "दशावस्था दीपवर्त्योर्व्वस्त्रांशे भूम्नि पुंस्त्रियो"रिति रभसः। आपो वस्त्रस्य दशा इति बहुत्वे श्रीपतिः। वस्तिरनियतसंख्यः दशासामानाधिकरण्याद् बहुत्वे उक्तः ॥३४२

(३४३) दैर्घ्यमायाम आरोहः (३४४) परिणाहो विशालता ॥
(३४५) पटच्चरं जीर्णवस्त्रं (३४६) समौ नक्तक-कर्पटौ ।
(३४७) वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम् ॥
(३४८) सुचेलकः पटोऽस्त्री स्याद् (३४९) वराशिः स्थूलशाटकः।
(३५०) निचोलः प्रच्छदपटः (३५१) समौ रल्लक-कम्बलौ ॥
(३५२) अन्तरीयोपसंव्यानपरिधानान्यधोऽंशुके

---

दैर्घ्येति। त्रयं वस्त्रादेर्दीर्घत्वे। आङो यमरुहोर्घञ् ॥३४३

परीति। द्वयं विस्तारे, वस्त्रविषये ओसार इति ख्याते। परि नहे-र्घञ् उपसर्गाण्णत्वम् ॥३४४

पटेति। द्वयं पुरातनवस्त्रे। पटदिति चरति ॥३४५

नेति। द्वयम् अतिजीर्णवस्त्रे 'नेकड़ा' इति ख्याते। नक्तकाद्यष्टकं वस्त्रमात्रे इति केचित्। तथाच रभसः—"पपटोऽस्त्री कर्पटः शाट-सिचयांशुकनक्तका" इति। तदा समौ समलिङ्गौ न तु समानार्थाविति योज्यम् ॥३४६

वेति। षट्कं वस्त्रे। वस्यतेऽनेन ष्ट्रनसुनौ। आच्छाद्यतेऽनेन। वासोऽदन्तश्च प्राग्दर्शितम् चिनोति आच्छादयति लः। वसेर्यूट्। अंशु कायति ॥३४७

सुचेलेति। द्वयं शोभनवस्त्रे। शोभनं चेलम्। यद्यपि कप्रत्यये स्वलिङ्गं प्राप्नोति, तथापि संज्ञात्वात् पुंस्त्वम्। अष्टकं वस्त्रसामान्ये इत्यन्ये। "पटः पियालवृक्षे ना सुचेले पुंनपुंसकमिति धरणिः ॥३४८

स्थूलशाटको वराशिः, येन वस्त्रान्तरमाच्छाद्यते। "वरासि स्थूल-शाटके" इति नन्त्यान्ते रभसः। तालव्यान्त इति सुभूः ॥३४९

नीति। द्वयं चलनाकारे परिहितवस्त्रे "पाछुड़ीति" ख्याते। "निचोलः प्रच्छदपटो निचुलः प्रच्छदश्च सः" इति व्याड़िः ॥३५०

रेति। द्वयं कम्बले ॥३५१

# प्रणव-पारिजातः

( संस्कृत-मासिकपत्रम् )

त्रयोदशवर्षम्, चतुर्थसंख्या ] [ मार्गशीर्षमासः १८९२ शकाब्दः]

## "काशीमाहात्म्यम्"

### प्रथमोऽध्यायः

श्रीमहेशचन्द्र-सांख्यतीर्थः

जगतः पितरौ नत्वा स्वल्पधीप्रतिपत्तये ।
काशीक्षेत्रस्य माहात्म्यं समासेनेह लिख्यते ॥

छात्राः— देव ! भवन्तमभिवादयामहे ।

गुरुः— वत्साः ! दीर्घजीविनो यशस्विनः स्वधर्म्म-निरताश्च भवत । कथमनध्यायदिवसेऽत्र आगताः ?

शिष्याः—अत्रभवतो मुखारविन्दात् काशीमाहात्म्यं श्रोतुं समुत्सुका वयम् । यदि श्रवणयोग्याः स्मस्तर्हि तत् कथयित्वानुगृह्णातु भवच्चरणारविन्दाश्रितान् सेवकान् ।

गुरुः— साधु साधु ! दिवसस्य षष्ठं सप्तमञ्च यामार्द्धम् इतिहास-पुराणादीनां कथया अतिवाहयेत् । तथाचोक्तं—

"इतिहासपुराणाद्यैः षष्ठञ्च सप्तमं नयेत्" इति ।

अवहिताः शृणुत । यत्र ढुण्ढिविनायकः काशीवासिनां विघ्नराशीन् विनाश्य तत्रत्यानां वासस्यानुकूल्यं विदधाति, यत्र करुणामयी जगज्जननी श्रीश्रीअन्नपूर्णा सर्व्वदा अन्नं प्रदाय तान् प्रतिपालयति, यत्र पूतसलिला उत्तरवाहिनी भागीरथी काशीसमागतानां पापराशीन् विनाशयति, यत्र च कृपासिन्धु-दीनबन्धुः श्रीश्रीविश्वेश्वरः अन्तकाले 'तारक-ब्रह्म' नाम उपदिश्य सर्वान् जन्तून् संसारसागरात उद्धरति,

यस्या महिमानं वर्णयितुं ब्रह्मादयोऽपि न समर्था:, तन्माहात्म्यं कथयितुं मन्दबुद्धिना वाग्विभवहीनेन मया यद्यपि कथं कथमपि न शक्यते, तथापि युष्माकमौत्सुक्य-निवृत्तये महर्षि-वेदव्यासेन कृष्णद्वैपायनेन विरचितं स्कन्दपुराणान्तर्गतं काशीखण्डमनुसृत्य तथान्यस्माद् ग्रन्थादाकृष्य यथामति संक्षेपेण कथ्यते।

या काशी भूमौ स्थितापि भूलोकरूपेण न परिगणिता, या अधोदेशे स्थितापि स्वर्गादपि गरीयसी, या पृथिव्यां वद्धापि मुक्तिप्रदा, या पवित्रतटिन्या भागीरथ्यास्तीरेऽवस्थिता, या भूस्वर्ग इत्यभिहिता, यत्र मृताः प्राणिनः अमृतत्वं लभन्ते, या च देवैरपि सेव्यते, सा काशी संसारतापसन्तप्तैः सर्व्वैः मुमुक्षुभिः सेवनीया आश्रयणीया च।

अनिलः—प्राक् पूज्यपादेन भवता कथितं "ज्ञानान्मुक्तिः" इति। तत् कथं काश्यां मरणान् मुक्तिः स्यात् ?

गुरुः— शृणु, भूतभावनो भूतपतिर्भगवान् शङ्करः प्राणिनामन्तकाले 'तारकब्रह्म' नामोपदिशति, तस्मादेव ज्ञानं जायते, ततो मोक्ष इति।

शङ्करः— अत्र किमपि प्रमाणमस्ति किम् ?

गुरुः— अथ किम्।

प्राणिनामन्तकालेऽत्र तारकस्योपदेशतः।
अविमुक्ते स्थितान् जन्तून् मोचयेन्नात्र संशयः॥
काश्यां मृतस्तु सालोक्यं साक्षात् प्राप्नोति सत्तमाः।
ततः स्वरूपतां याति न परावर्त्तते पुनः॥
सलोकतां स्वरूपञ्च सान्निध्यञ्चापि सत्तमाः।
कल्पं कल्पमवाप्नोति ततो ब्रह्मात्मको भवेत्॥

अन्यच्च— यतो विश्वेश्वरेणैते तिर्य्यञ्चोऽप्यत्रवासिनः।
निधनावसरे मोच्यास्तारकस्योपदेशतः॥३।६३

अत्रोत्क्रमणकालेऽहं स्वयमेव द्विजोत्तमाः ।
दिशामि तारकं ब्रह्म देही स्यात् येन तन्मयः ॥

इति काशीमाहात्म्ये प्रथमोऽध्यायः ॥

—०—

## यत्किञ्चित् समयोचितम् ।

निबन्धकः—श्रीकालीपदतर्काचार्य्यः

भारति ! परिहर भारतवर्षं
जनता गणयति न तवोत्कर्षम् ।
अस्तं गतमिह शर्म समस्तं
सज्जनचित्तं जातं त्रस्तम् ॥१

शिक्षा सम्प्रति हितहतिशूलं
तदभावो भुवि भव्ये मूलम् ।
क्वचन प्रगतः कुशलविवेकः
परितः प्रसृतस्तिमिरोत्सेकः ॥२

प्राक्तनसंस्कृतिरस्तु विलुप्ता
यस्यामवनतिविततिः सुप्ता ।
इति बहुलायतमतमालोके
विप्लववीजं निखिले लोके ॥३

शिक्षोपकरणमस्तु समस्तं
सञ्चितपूर्वं सुतरां ध्वस्तम् ।
इति मतिरसती वत तरुणानां
केषाञ्चन नवभारतजानाम् ॥४

सुकरो नाशः शिवकरणानां
बहुयुगसञ्चितवस्तुशतानाम् ।
दुष्करमेकस्यापि विधानं
नात्र विमूढा दधते ध्यानम् ॥५

शिक्षाविषये भारतवर्षं
सुचिरादेव प्रचितोत्कर्षम् ।
निखिलधराया गुरुतां यातं
तद्गौरवमपि नो स्मृतिभातम् ? ॥६

भारतमेतद् येषां यशसा
भुवनवरेण्यं प्रोज्ज्वलमहसा ।
न यशस्तेषां जनता सहते
तन्मूर्त्तिमपि ध्वंसं नयते ॥७

निजजीवनमिह भवति यथेष्टं
परजीवनमपि तथैव शिष्टम् ।
विविनक्ति न तन्निष्ठुरजनता
हन्ति यतस्तत् स्वार्थे निरता ॥८

निजगोष्ठीमतपरिरक्षार्थं
लोका विदधति विविधमनर्थम् ।
हित्वा कृत्याकृत्यविचारं
चरन्ति किं नहि सबलात्कारम् ॥९

अभयः सम्प्रति नहि पथिचारः
परितो मृत्युर्लसदधिकारः ।
सपदि हुताशनगोलकजनितं
बधिरं कुरुते मनुजं नदितम् ॥१०

निखिलं खाद्यं दोषग्रस्तं
शुद्धं भेषजमपि गतमस्तम् ।

तदपि महार्घं जनदुष्प्रापं
धातुर्गमयति गुरुमभिशापम् ॥११

क्व नु कुशलायति शीलं यातं
ज्ञानमपीष्टं महदवदातम् ।
कर्म दुरन्तं कुरुते जनता
गतिरिह का वा स्थितये भविता ? १२

गतिपरिहीणा दुर्गतिलीना
क्व नु वत गन्ता जनता दीना ?
त्रिदिवे सति तव योग्यस्थाने
कथमिह तिष्ठसि नरकसमाने ॥१३

वहुधा निन्दित-कृत्यकलापे
योग्या न तव स्थितिरिह पापे ।
वदामि महता तापेनैवं
भारतमभजत गुरु दुर्दैवम् ॥१४

तनयस्नेहो यदि तु निदानं
किं नहि कुरुषे दुःखात् त्राणम् ।
भगवति भारति ! भुवि तव विदिता
वैभवधारा तनयेषु हिता ॥१५

किं न तया त्वं हंसि विकारं
किं वा न चरसि निजमधिकारम् ।
जननी सहते नहि सुतकष्टं
सर्वत्रैतद् भुवने स्पष्टम् ॥१६

त्वं किल जननी भारतजानां
तव पदसेवाचिरनिरतानाम् ।
तदिदं स्मृत्वा कुरु शिवदृष्टिं
साधय परितो मङ्गलवृष्टिम् ॥१७

दमय दुरन्तं जन-सन्तानं
दवयति यो बहुजनकल्याणम् ।
जनतां लम्भय हितमतमेकं
हर गोष्ठीगणवैरोद्रेकम् ॥१८

इह गोष्ठीशतसृष्टिरनिष्टं
ददती कुरुते सुजनं क्लिष्टम् ।
तद्विलयादिह मङ्गलमास्तां
भारतमुन्नतपदमध्यास्ताम् ॥१९

राज्यं शासनमुक्तं प्रायः
प्रसरति परितो मात्स्यन्यायः ।
हन्ति बलाढ्यो दुर्बललोकं
सुजना येनादधते शोकम् ॥२०

यत् साहित्यं मानववित्तं
विदधे नित्यं विमलं चित्तम् ।
तदिह विदध्याद् यदि संशुद्धिं
पुनरागमने दध्या बुद्धिम् ॥२१

विन्दतु वृद्धिं शुभसाहित्यं
जनयतु शुद्धिं बुद्धेर्नित्यम् ।
प्राक्तनशीलं पुनरिह भायात्
कविकुलकृत्यं फलमपि यायात् ॥२२

—०—

# हरिनामामृतम्

## नाम नाटकम् ( प्रथमो भागः )।

अध्यापक-स्वर्गत-अमियनाथ चक्रवर्त्ति एम्-ए, काव्यतीर्थेन विरचितम्

( पूर्वतोऽनुवृत्तम् )

### द्वितीयं दृश्यम्

[ वृन्दावनधामनि कुञ्जे कुञ्जे परिभ्रमन् श्रीकृष्णदर्शन-व्यग्रहृदयो नित्यानन्दप्रभुर्गायन् श्रीराधाकुञ्जं प्रविश्य लम्फन् उन्मत्तवत् नृत्यति ; स्कन्धे स्तम्भः, गतौ स्थैर्याभावः, वामकरे वक्रयष्टिः, कट्यां बद्धवेत्रः कमण्डलुः शृङ्गश्च, परिधाने शिरसि च नीलवस्त्रं, वामश्रुतिमूले च विचित्रं मकरकुण्डलं, वदने क्षणे हासः, क्षणे क्रन्दनध्वनिर्हुङ्काराश्च हलधरभावस्य तस्य। इतस्ततः श्रीकृष्णमूर्तिमन्विष्यति। सर्वतोऽन्विष्यन् परिक्रामति क्रन्दति च। ]

( गानम् )

नित्यानन्दः। कुत्र कृष्णः कुतः कृष्णः

कुत्र कृष्णोऽसि वल्लभः ?

[ एकैकशः कुञ्जचतुष्टयाभ्यन्तरेषु अन्विष्यन् कृष्णम् अदृष्ट्वा विलपति ]

नित्यानन्दः। हा हा वृन्दावने नास्ति

कृष्णो मे प्राणवल्लभः।

कृष्णं विना न जीवामि—

हा कृष्ण, हा कृष्ण, कृष्ण, कृष्ण !

दर्शनं देहि मे त्वराम्।

कृष्ण, कृष्ण !

[ अश्रुप्लावितकपोलः उच्चैः क्रन्दति। ]

[ प्रविशति कश्चिद् व्रजवासी नामातिवृद्धो गोपः। ]

नित्यानन्दः। भो भो वृन्दावनवासिन्! दर्शय मे वृन्दावननाथं श्रीकृष्णम्।

व्रजवासी। अरे, कस्त्वम् ? किञ्च कथयसि ?

नित्यानन्दः। (कृताञ्जलिर्गोपसमीपमुपगम्य सगद्गदम् आदरेण)।
अरे, अरे, वृन्दावनवासिन्, कथय—कुत्र खलु वृन्दावननाथः श्रीराधावल्लभः श्रीकृष्णः, कथय, कथय।

व्रजवासी। नाहं तवाभिप्रायमवगच्छामि। कस्त्वम्? किञ्च त्वं वाञ्छसि?

नित्यानन्दः। वृन्दावनवासिन्, मा कुरु विलम्बम्। दर्शय मे प्राणस्वरूपं श्रीकृष्णम्। चरणौ ते स्पृशामि।

[चरणधरणार्थमुपागच्छति]

व्रजवासी। (अपसृत्य) अत्र खलु श्रीराधाकुण्डमध्ये एव श्रीराधाकुञ्जं लतादिभिर्निविड़म् आवृतम्। पश्य, श्रीराधासहितः श्रीकृष्णोऽत्रैव दृष्टो भवेत्।

नित्यानन्दः। अहो भाग्यमहो भाग्यं
सफलमद्य जीवनम्।
श्रीकृष्णदर्शनेनैव
वाञ्छा पूर्णा भविष्यति॥

अपसारयामि तावत् लतागुल्मादीन।

[हुङ्कारैः लम्फति आनन्देन, नाट्येनापसारयति च। अपसारणकाले आवेगेन—कर्म करोति। अपसार्य्य पश्यति, न तु दृश्यते शून्यसिंहासने श्रीकृष्णो राधिकापि वा।]

व्रजवासी। (रसनां दन्तैश्छित्त्वा साश्चर्यं कर्णौ स्पृष्ट्वा च) हा हा, सम्यग् विनष्टं वृन्दावनं, नात्र तिष्ठति वृन्दावननाथः!

[क्रन्दति आवेगेन।]

निश्चितं यवनराजानुचरैर्लुण्ठितं वृन्दावनधनम्।

नित्यानन्दः। (व्याकुलं क्रन्दन्)
हतं भाग्यं हतं भाग्यं
जीवनं निष्फलं मम।

कृष्णं साक्षाद् न पश्यामि
वनादन्तर्हितः स्वयम् ॥
देशाद् देशं परिभ्रम्य
शेषे वृन्दावनागतः ।
ततोऽप्यन्तर्हितः कृष्णो
हा हा त्यक्ष्यामि जीवनम् ॥

व्रजवासी । हा हा, श्रीराधाकुञ्जे यदि शून्यं वर्ततेऽद्य श्रीकृष्णस्यासनं—तदा—

नित्यानन्दः । नाहं जीवितुं शक्नोमि श्रीकृष्णदर्शनं विना । अनेनैव मम दण्डेन निजमस्तकं स्वयमेव चूर्णयन् पातयिष्यामि । हा हा कृष्ण ! कुत्रासि, कुत्रासि त्वम् ?

[ नाट्येन यष्ट्यास्फालनं दर्शयति । ]

व्रजवासी । धैर्यं धर भोः श्रीकृष्णदर्शनलोलुप !

( तथापि नित्यानन्दं निजमस्तकचूर्णनोद्यतं दृष्ट्वा भयेन—उच्चैः— )

सर्वनाशः, सर्वनाशः !

( द्वारसमीप द्रुतं गत्वा )

प्रभो, प्रभो ! आत्महत्या—आत्महत्या—

[ सहसा प्रविशति ईश्वरपुरीनामा वैष्णवप्रधानः । ]

ईश्वरपुरी । न न आत्महत्या कर्तव्या ।

[ निवारयितुमुपसरति ]

नित्यानन्दः । ( दृष्ट्वा अपरूपं सन्न्यासिनम् आत्महननाद् विरम्य सबलं ललाटे कराघातान् कुर्वन् )

किन्तु, कुत्र कृष्णः, कथय—कुत्र कृष्णदर्शनं सम्भवेत् । न जीवामि श्रीकृष्णदर्शनं विना ।

( पदयुगे पतति ; ईश्वरपुरी तं धरति, तमाकुलं पश्यति च । )

नित्यानन्दः। (कथमपि संज्ञां लब्ध्वा व्याकुलम्) गयां काशीमयोध्यां प्रयागादींश्च बहुशः परिभ्रम्य प्रभो, श्रीकृष्णदर्शनार्थं तल्लीलास्थलं श्रीवृन्दावनम् इदानीमहं समागतः। प्रभो, दर्शय मे श्रीकृष्णचन्द्रं मम हृदयवल्लभम्। कथय—कथय—कुत्र मे कृष्णः ? कुत्र कृष्णः ? कुत्र कृष्णः ?

(पुनः पदयुगले निपतति)

ईश्वरपुरी। (सावेगम् अश्रुपूर्णनेत्रकपोलं नित्यानन्दमुत्तोलयितुं चेष्टते)
उत्तिष्ठ, उत्तिष्ठ, कृष्णैकचित्त नयनाभिराम प्रेमिकयुवक! उत्तिष्ठ।

नित्यानन्दः। कुत्र कृष्णः ? कृष्णः ? कृष्णः ?

(ईश्वरपुरीमहोदयस्य सम्मुखे दण्डायते।

ईश्वरपुरी। (तं पश्यन्) कस्त्वं रे युवक! भगवत्प्रेमोन्माद-कातर-हृदयं हावभाव-लाव-लावण्यविलसितसकलशरीरं देदीप्यमान-विमलोज्ज्वलज्योतिर्भास्वरम् अत्यद्भुत-मनुजजन-विरल-प्रेमनिकेतनं दिव्यस्वरूप-सुकान्तिकान्तं दुर्लभदर्शनं त्वामद्यात्र निरीक्षमाणो धन्योऽस्मि वत्स! कस्त्वं महाभाग ?

व्रजवासी। (कृताञ्जलिः सन् दैन्यमभिनयति, प्रणमति सावेगमुच्चारयति च)।
हरिहरिः! हरिहरिः!

नित्यानन्दः। कृष्णः कृष्णः, कुत्र मे प्राणवल्लभः श्रीकृष्णः ?

ईश्वरपुरी। (सावेगम्)
मन्ये, न हि साधारणोऽयं पुरुषः; परमभागवतप्रेमपुलकैर्दिव्यः कश्चित् परमात्मस्वरूपो धृतमनुष्यमूर्तिरपार्थिवो जनः!

नित्यानन्दः। (ईषद्विरक्तभावेन)
तथापि कृष्णस्य वार्तां न कथयसि! हा हा—

( क्रन्दन् भूमौ विलुण्ठति )

व्रजवासी । हरिहरिः ! हरिहरि !!

नित्यानन्दः । कृष्णशून्यमद्य वृन्दावनम् ! हा हा, कथं जीवामि कृष्ण-दर्शनं विना ? हा कृष्ण !

( पतति, अश्रूणि विगलयति च )

ईश्वरपुरी । अहह ! ( धृत्वा उत्तोलयति )

श्रूयतां भ्रातः ! घनारण्यमयमद्य श्रीकृष्णलीलास्थलं वृन्दावनम् । कृष्णस्तु भगवान् स्वयम् । कृष्णमयानि भुवनानि । वृन्दावनेऽपि सर्वत्र स वर्तते । अधुना तु अप्रकट एव । न जाने कुत्र श्रीभगवान् अतःपरं प्रकटतां गतो दर्शनीयो भवेत् ।

व्रजवासी । ( विस्मयेन )

हरे कृष्ण, हरे कृष्ण !

ईश्वरपुरी । निश्चितं स कलिजीवतारणार्थं सम्भविष्यति ।

नित्यानन्दः । किन्तु कदा ? कदा कुत्र स आविर्भविष्यति प्रभो ! तद्-दर्शनमन्तरेण मुहूर्तमपि जीवितुम् असमर्थोऽहम् । कृष्ण ! कृष्ण !! कृष्ण !!!

ईश्वरपुरी । ( स्पर्शं कृत्वा )

शान्तो भव । अचञ्चलः सन् मनसि श्रीकृष्णध्यानं कुरु । गोपवृद्ध ! कानिचित् फलानि संगृह्य आनय ।

व्रजवासी । आनयामि प्रभो !

( त्वरया निष्क्रान्तः )

[ नित्यानन्दो निमीलितनयन उपविश्य कृष्णध्यान-मभिनयति । सहसा तस्य मनसि श्रीकृष्णस्य गौराङ्गमूर्त्तिः प्रकटतां गता । पश्चाद्भागे छायामूर्तिश्च दृश्यते । ]

नित्यानन्दः । ( सहसा तदालोक्य लम्फन् उत्थाय प्रफुल्लवदनः सन् )

दृष्टः, दृष्टः खलु मया सोऽपरूपः—अभूतपूर्वगौरवर्णाभः प्रेमपुलकितसर्वाङ्गः श्रीकृष्णः !

ईश्वरपुरी । ( सगद्गदम् )

भाग्यवांस्त्वम् !!

नित्यानन्दः । किन्तु कदा कुत्र स सत्यतो दर्शनीयः स्यात् ?

ईश्वरपुरी । कथं तद् जानासि ? तथापि मम मनसि भवति—कश्चित् सर्वविद्याविशारदो दिव्यसुन्दरानुपमप्रेमविह्वललोचनयुगलस्तरुणो मनुष्यदुर्लभो युवा मया कुत्रापि दृष्टः ।

नित्यानन्दः । ( साग्रहम् ) कुत्र प्रभो, कुत्र दृष्टस्त्वया ?

[ प्रविशति व्रजवासी फलसहितः ]

ईश्वरपुरी । वङ्गभूमौ नवद्वीप इति ख्याते नगरे ।

नित्यानन्दः । वङ्गभूमौ !

ईश्वरपुरी । गङ्गातटे !

नित्यानन्दः । गङ्गातटे !!

ईश्वरपुरी । नवद्वीप इति ख्याते नगरे ।

नित्यानन्दः । नवद्वीप इति ख्याते नगरे !!!

( नित्यानन्दो गमनोन्मुखः । )

ईश्वरपुरी । तिष्ठ ।

( स विरतः । व्रजवासिसकाशात् फलानि नीत्वा )

ईश्वरपुरी । ( आशिषः फलानि च ददत् )

मम आशीर्भिः सह गृहाण पाथेयानि फलान्येतानि ।

( स्थाल्यां फलानि गृहीतानि )

नित्यानन्दः । ( द्रुततालं नृत्यन् गायति )

भाग्यं भाग्यं नवद्वीपे
तूर्णं तूर्णं चलाम्यतः ।
नित्यानन्दवपुर्धन्यं
क्षणमध्ये भविष्यति ॥

( लम्फन् लम्फन् नृत्यन् निष्क्रामति। ईश्वरपुरी व्रजवासी च विह्वलभावेन तत्र तिष्ठतः। )

॥ दृश्यावसानम् ॥

( —क्रमशः )

## श्रीमद्भगवद्गीतायां भक्ति-कर्म्मवादौ

( निबन्धकः—अध्यापकः श्रीरवीन्द्रकुमारसिद्धान्तशास्त्री )

( पूर्वतोऽनुवृत्तम् )

"न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्म्मकृत्।
कार्य्यते ह्यवशः कर्म्म सर्व्वः प्रकृतिजैर्गुणैः॥"

इति वाक्यार्थम्—

भगवत्सृष्टा ग्रहनक्षत्रादयः सर्व्वे एव चेष्टन्ते, का कथा मानवानाम्? यदा कस्यचिन्मनुष्यस्यान्यत् किमपि कर्म्म न विद्यते, तदासौ मननं करोति। स्मरण-मननादेरप्यभावे मृत्युरेव भवति। न हि कस्यचिज्जीवितजनस्य मनोव्यापारो निमेषार्द्धकालायापि विरतो भवितुमर्हति। तथा च श्रुतिः 'मृत्युरत्यन्तविस्मृति'रिति। संस्कारजन्य-व्यापारश्च स्मृतिः, विगता स्मृतिर्यतोऽसौ विस्मृतिः। अत्यन्तविस्मृतिस्तु मृत्युं विना कदापि भवितुं नार्हतीति ज्ञात्वा सैव मृत्योर्नामान्तरमिति निगदितम्। तेनैवोपनिषत्प्रसिद्धेयं भगवदुक्तिर्विशुद्धैवेति न सन्देहः।

ननु 'न गच्छामि, न खादामि, न हसामि इत्येवं स्थिरनिश्चयं कृत्वा यथा वयं गमनादिकार्य्येभ्यो विरता भवितुमर्हामः, कथन्तथैव 'न किमपि कर्म्म करोमो'ति स्थिरीकृत्य तस्माद् विरता भवितुं नार्हमेति संशयस्योत्तरं श्लोकस्यास्य शेषार्द्धेन प्रदत्तम्। यथा 'नाहं दुःखमनुभवामि' इत्येवं स्थिरीकृत्यापि कश्चित् प्राकृतो जनः स्वपुत्रमरणादिकमालोक्य न हि दुःखाद् विरतो भवितुमर्हति, तथैव कोऽपि मानवोऽन्यो वा कर्म्मणः सर्व्वथा निवृत्तो भवितुं नार्हेत्। या खलु प्रकृतिस्तादृशेन व्यापार-

कलापेन तादृशं जनं दुःखयति, सैव विगतकर्म्मवासनमपि जनं कर्म्मणि प्रवर्त्तयति। सत्त्वं रजस्तमश्चेति त्रयो गुणाः। एतेषामेकेनानेकेन वा प्रत्येकमेव वस्तुजातं परिपूर्णम्। मनुष्येष्वपि कुत्रचिदेतेषामेकस्य, कुत्रचिद् द्वयोः, कुत्रचिद् वा त्रयाणामेव बाहुल्यम्। गुणाश्च कर्म्मप्रयोजकाः। तेन प्रकृतिरेव कर्त्री गुणैः करणैर्म्मानवं कर्म्मणि प्रवर्त्तयतीति कर्म्मकर्त्तुमनिच्छन्नपि मानवोऽवश इव कर्म्म करोति।

ननु लोकेऽस्मिन्नेवं बहवो मनुष्या दृश्यन्ते, ये कर्म्मेन्द्रियाणि संयम्यैव तिष्ठन्ति। सुरूपां हावहेलादियुक्तां भूषितां तरुणीं विलोक्यापि ते ताभिः सह न सङ्गता भवन्ति, हस्तयोः पार्श्वे रत्नराशिमवलोक्यापि तेषामेकतरमपि न गृह्णन्ति च। एवमन्यान्यपि कर्म्मेन्द्रियाणि तैर्विषयेभ्यो निवार्य्यन्ते। कथन्तदा,

"न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्म्मकृत्।"

इति भवत उक्तिः सङ्गच्छते ? इत्येवं प्रश्नमाशङ्क्य तस्योत्तरमाह—

"कर्म्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते॥" इति।

तस्यायमभिप्रायः—शारीरिकं वाचनिकं मानसिकञ्चेति कर्म्म त्रिविधम्। तत्र शारीरिकस्य वाचनिकस्य च परित्यागेऽपि मानसिकं कर्म्म सहसा त्यक्तुं कोऽपि न पारयति। तेन शारीरिकं कर्म्म परित्यज्यापि यो मनसा तत् करोति निन्दनीय एव सः। पूर्व्ववर्णितां तरुणीमनादायापि यदा कश्चित् पुमान् मनोमात्रेण तस्याः सङ्गसुखमनुभवति, तदा तस्य तादृशकर्म्मपरित्यागोऽपि वृथैव भवेत्। अतो ब्रह्मचर्य्यसंज्ञायामपि महर्षिभिर्निगदितम्—

"कर्म्मणा मनसा वाचा सर्व्वावस्थासु सर्व्वदा।
सर्व्वत्र मैथुनत्यागो ब्रह्मचर्य्यं प्रचक्षते॥" इति।

तादृशं ब्रह्मचर्य्यञ्च न सुलभम्। तेन च तादृशकर्म्मपरित्यागोऽपि दुःसाध्य एव। यस्तु मनसापि कर्म्म परित्यक्तुमर्हति, तस्य मुक्तिः करे स्थितैव; यतस्तेन चित्तवृत्तिनिरोधरूपं योगमासाद्य भगवत्सारूप्यमेव

लभ्यते। तथाच पातञ्जलसूत्रे "योगश्चित्तवृत्तिनिरोधः" इति, 'तदा द्रष्टुः स्वरूपेऽवस्थानम्" इति च।

केचन महाभागाः पुनः फलेषु निःस्पृहाः कर्त्तव्यमात्रबुद्ध्या कर्म्माणि कुर्वन्ति। तेषामीदृशमाचरणमतीवप्रशंसनीयमिति श्लोकेनाह—

यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्ज्जुन !
कर्म्मेन्द्रियैः कर्म्मयोगमसक्तः स विशिष्यते ॥" इति।

एतेन कर्म्मणो द्वैविध्यं विज्ञापितम्। केचन मनसा विषयासक्ता अपि केवलं शारीरं कर्म्म परित्यजन्ति, अपरे तु कर्म्म कुर्व्वन्तोऽपि तत्र निःस्पृहास्तिष्ठन्ति। अनयोस्तु द्वितीयः प्रकार एव श्रेयान्।

साम्प्रतं पुनः शारीरं कर्म्म प्रशस्य कर्म्मणोऽकरणात् तत् करणस्यैव प्राधान्यमुद्घोषयन्नाह—

"नियतं कुरु कर्म्म त्वं कर्म्म ज्यायो ह्यकर्म्मणः।
शरीरयात्रापि च ते न प्रसिध्येदकर्म्मणः ॥" इति।

अहो! मनोरमा युक्तिरियम्। शरीरपोषणार्थं सर्व्वेष्वेव प्राणिषु अशनादीनां क्रियाणामपरिहार्य्यं प्रयोजनमस्ति। अशनं विहायापि यद्यपि कश्चित् कतिचिद्दिनानि जीवितुं शक्नोति, तह्यपि निःश्वास-प्रश्वासादि कर्म्म विहाय न क्षणमात्रमपि जीवितुं शक्नुयात्। एतेन,

'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्म्मकृत्'।

इति प्राग् यदुक्तं तदेव समर्थ्यते।

ननु किं जीवनधारणेनेत्यपि न वाच्यं शरीररक्षणं विना धर्म्मकर्म्मादेरसम्भवात्, तस्याभावे च सर्व्वेषामेवाभिलषिताया मुक्तेरपि सर्व्वथाऽसम्भवात्। मोक्षसाधनार्थमपि शरीरयात्रानिर्व्वाहस्य प्रयोजनं विद्यत एवेति विज्ञाय कुमारसम्भवे महाकविना कालिदासेनाप्युक्तम् 'शरीरमाद्यं खलु धर्म्मसाधनम्' इति।

ननु यदि कर्म्मैव करणीयन्तदा चौर्य्यदस्युतादीनि कर्म्माण्यपि सम्पादनीयतां भजेरन्निति समाशङ्क्याह—

"यज्ञार्थात् कर्म्मणोऽन्यत्र लोकोऽयं कर्म्मबन्धनः।
तदर्थं कर्म्म कौन्तेय ! मुक्तसङ्गः समाचर ॥" इति

'कर्म्म कुरु' इति यदुक्तं तत्तु वैधकर्म्मविषयकमेव। तेनैवोक्तं भगवता 'तस्मादसक्तः सततं कार्य्यं कर्म्म समाचर' इति। अवैधानां कर्म्मणां करणे तु प्रत्यवाय एव विद्यते।

तर्ह्यपि फलनिरपेक्षः सन् कर्म्म कुर्य्यादिति भवदुपदेशः। कथन्तदा वैदिककर्म्मसु यज्ञादिषु प्रवर्त्तितव्यम्, तत्रापि फलश्रुतेर्विद्यमानत्वादित्येवं प्रश्नमाशङ्क्य श्लोकेनानेन तस्याप्युत्तरं प्रदत्तम्। अयमभिप्रायः—फलरहित एव कर्म्म कुर्य्यात्। वैदिकयज्ञादिकर्म्मसु फललाभश्रवणात्तादृशेन वैधफललाभेन तदाकाङ्क्षया वा दोषो न भवति। अवैदिककर्म्मविषये एव फलाकाङ्क्षा दोषाय। अतो यज्ञादीनि कर्म्माणि सफलान्यपि कर्त्तव्यान्येव। तदन्यत्र तु फलनिरपेक्षेण भवितव्यम्। यज्ञकर्म्मणि प्रवर्त्तना ब्रह्मणैव विहितेति विज्ञापयितुमाह—

"सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥" इति।

अतो ब्रह्मणा विहितमिदं यज्ञकर्म्म कथमपि दोषाय भवितुं नार्हतीति तात्पर्य्यार्थः।

ननु भवतु नाम यज्ञकर्म्म ब्रह्मणैव विहितं, तेनास्माकं कीदृशं फलं भविष्यतीत्याह—

"देवान् भावयतानेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥" इति

यज्ञकर्म्मणि देवानुद्दिश्य यानि हवींषि प्रदीयन्ते तैस्तेषां प्रीतिरुत्पद्यते, तेन च प्रीता देवास्तादृशानां प्रीणकानामप्युपकाराय यतन्ते। देवा येषामुपकारं कर्त्तुमिच्छन्ति, किं नाम खलु लोकेऽस्मिंस्तेषां दुर्लभं

—( क्रमशः )

कृष्णः शास्त्रेषु नयते, स तेषु पदार्थान् सर्व्वसम्मानितान् कुर्व्वन् स्थापयतीत्यर्थः। उद्धवमुपनयते आत्मानमाचार्य्यीकुर्व्वन् तत्समीपं प्रापयतीत्यर्थः। सर्व्वं नयते निश्चिनोतीत्यर्थः। चक्रं दुष्टेषु उन्नयते उत्क्षिपतीत्यर्थः। स कामानुपनयते कामदानवेतनेनात्मसमीपीकरोतीत्यर्थः। सर्व्वमुपनयते धर्म्मार्थं सर्व्वं विनियुङ्क्ते इत्यर्थः। सङ्कल्प विनयते तद्रूपमृणं निर्य्यातयतीत्यर्थः। क्रोधं विनयते दूरीकरोतीत्यर्थः। पुरुषोत्तमस्त्वाह। पूजायां शास्त्रार्थं नयते युक्तिभिः सम्मानयतीत्यर्थः। आचार्य्यकृतौ, उद्धवमुपनयते आत्मवदाचार्य्यीकरोतीत्यर्थः। इति।

२३१। वृत्युत्साहस्फीततासु क्रमेः।

क्रमेरिति प्रभुश्च। हरौ बुद्धिः क्रमते तद्भक्तस्य वर्त्तते न प्रतिहन्यते इत्यर्थः। कृष्णभक्तये क्रमते उत्साहं करोतीत्यर्थः। वैष्णवानां श्रीः क्रमते वर्द्धते इत्यर्थः॥

२३२। नोपेन्द्रतो विना परोपाभ्याम्।

---

नत्वन्योपेन्द्रणोर्थं बोधयतीति॥

२३०। पूजा। पूजा सम्मानं, आचार्य्यस्य कृतिराचार्य्यकृतिः, विगणनम् ऋणादिशोधनं, कर्त्तृस्थे चामूर्त्तकर्म्मणीति सामानाधिकरण्यम्। एतेषु अर्थेषु वर्त्तमानान्नीञ् आत्मपदं भवति। कृष्ण इत्यादि। सर्व्वसम्मानितान् कुर्व्वन् इत्यनेनात्मनः सम्मानितत्वं सुतरामेव सम्मानितोऽयं स्वयमपि धातूनामनेकार्थत्वात् उपेन्द्रस्याभिन्नत्वेऽपि भिन्नार्थः सम्पद्यते वाक्यार्थबोधकृतामात्रस्य तात्पर्य्यात्। तद्रूपसङ्कल्परूपम् ऋणं निर्यातयतीत्यर्थः। सङ्कल्पः कर्म्म-मानसमित्यर्थः। 'ये यथा मां प्रपद्यन्ते तां-स्तथैव भजाम्यहमि'ति भगवदुक्तेः। पुरुषोत्तमस्त्वाह इति स्वमतदार्ढ्याय॥

२३१। वृत्युत्साह। वृत्तिरप्रतीघातः। वृत्युत्साहादिषु क्रमतेः कर्त्तर्य्यात्मनेपदं स्यात्। तद्भक्तस्य वर्त्तते इति बुद्धिरित्याकर्षणीयम्। कृष्णभक्तिनिमित्तम्। श्रीः सम्पत्तिर्लक्ष्मीः शोभा च॥

हरौ बुद्धिः प्रक्रामतीत्यादि। इह तु स्यात्। पराक्रमते उपक्रमते॥

२३३। तथाङ्पूर्व्वाज्ज्योतिरुद्गम ईष्यते।

आक्रमते भानुः। उद्गमे किं। आक्रामति गिरिं रविः, अवष्टभ्नातीत्यर्थः॥

२३४। वेः पादविहृतौ तद्वत्।

विक्रमते त्रिविक्रमः॥

२३५। आरम्भे प्रादुपात्तथा।

प्रक्रमते उपक्रमते॥

२३६। अनुपेन्द्राद्विभाषा।

क्रामति क्रमते। क्रमिर्निवृत्तः॥

२३७। ज्ञोऽकर्म्मकापह्नवार्थतः।

गङ्गाजलस्य जानीते। तत्त्वमपजानीते गोपते इत्यर्थः॥

२३८। संप्रतिभ्यां समुत्कण्ठापूर्व्वकस्मरणं विना।

---

२३२। नोपेन्द्रतः। परोपाभ्यां विना अन्यस्मादुपेन्द्रात् परस्मात् क्रमतेः कर्त्तर्य्यात्मनेपदं स्यात्॥

२३३। तथाङ्। तथाङ्पूर्व्वात् ज्योतिः सूर्य्यादिस्तस्य ऊर्द्ध्वं गमस्तस्मिन् तथा आत्मनेपदमिष्यते। आक्रामति गिरिमित्यत्रावलम्बनमात्रं न तूर्द्ध्वगमनं विवक्षितम्॥

२३४। वेः पाद। पादविहृतिः पादविक्षेप इति स्मरणात्॥

२३५। आरम्भे। सुगमम्॥

२३६। अनु। सुगमम्॥

२३७। ज्ञोऽकर्म्म। अकर्म्मकश्चापह्नवार्थश्चेति रामकृष्णसमाससिद्धात् ज्ञः। गङ्गाजलस्य जानीते इति ज्ञोऽबोधार्थस्य करणात् गङ्गाजलात् षष्ठी। तत्त्वं स्वरूपे सिद्धान्ते इति। तत्त्वं स्वरूपम् अपजानीते अपह्नुते जानातीत्यर्थः।

२३८। संप्र। एतदारभ्य यत्र यत्र सूत्रं न व्याख्यायते, तत्र तत्र सुगम-

संजानीते जनं हरिः भक्तायाभीष्टं प्रतिजानीते प्रतिज्ञां करोतीत्यर्थः। उत्कण्ठापूर्व्वकस्मरणे तु, हरिं संजानाति भक्तो हरेर्व्वा।

२३६। यत्नोपसान्त्वनज्ञानभाषणेषूपमन्त्रणे।

विमतौ चापि वदतेः॥

वदेरिति प्रसुश्च। भक्तौ वदते वैष्णवः। हरिर्भक्तानुपवदते। भक्तो हरिं वदते। भाषणे तु—हरिर्भक्तौ वदते। तत्र प्रकाशमानस्तां व्यनक्तीत्यर्थः। उपमन्त्रणे, हरिर्गोपीमुपवदते रहस्युपच्छन्दयति लोभयतीत्यर्थः। पृच्छतीति वा। तथा विवदन्ते तर्कनिष्ठाः॥

२४०। व्यक्तवाचां सहोक्तिषु।

संप्रवदन्ते वैष्णवाः। नेह संप्रवदन्ति मयूराः॥

२४१। अनोरकर्म्मकात्तत्र।

अनुवदते श्रीशुकस्य सूतः॥

---

मिति पदमूह्यं करणीयम्। हरेर्वेति संज्ञो वा कर्म्मणो हरेः षष्ठी॥

२३६। यत्न। यत्नपूर्व्वकमुपसान्त्वनमिति वा विग्रहः। यत्नं बहूद्यमम्। भक्तौ वदते वैष्णवः। तस्यां प्रयत्नं करोतीत्यर्थः। यस्मिन्नेतन्नास्ति तन्मते। हरिर्भक्तानुपवदते यत्नपूर्व्वकम् उपसान्त्वयतीत्यर्थः। भक्तो हरिं वदते जानातीत्यर्थः। तत्र भक्तौ तां भक्तिम्। रहसि निर्जने उपच्छन्दयन् नानाप्रकाररहस्यवाक्यं कथयन्। विमतावुदाहरणम्। तथा विवदन्ते तर्कनिष्ठाः। विमतिर्विप्रतिपत्तिर्विरोधोक्तिरिति यावत्॥

२४०। व्यक्त। अत्र सहशब्दस्तुल्यार्थः। संप्रवदन्ते तुल्यव्यक्तवाचः कुर्व्वन्तीत्यर्थः। नेहेति व्यक्तवाचामभावात्। व्यक्तवाचो हि मनुष्याः प्रसिद्धाः॥

२४१। अनोः। अनोरुत्तरस्मादकर्म्मकाद्वदतेः परस्मात् कर्त्तर्य्यात्मपदं स्यात्। अनु पश्चात्। अतः अनुवदत इत्यत्र श्रीशुको यथा वदते, तथैव तस्य पश्चात् सूतो वदते॥

२४२। विप्रलापे विभाषया।

विप्रवदन्ते विप्रवदन्ति वा स्मार्त्ताः। वदतिर्निवृत्तः।

२४३। सृजेः श्रद्धावतः श्यश्च।

वैष्णवो मालां सृज्यते। श्रद्धां विना तु सृजति इति भट्टमल्लः। भूतेशे तनि इण् इति वर्द्धमानः। असर्जि मालां वैष्णवः॥

२४४। अवाद्गुः।

अवगिरते। गृणातेर्नेष्यते अवगृणाति॥

२४५। अङ्गीकृतौ समः।

संगिरते॥

---

२४२। विप्र। विप्रलापो विरोधोक्तिः॥

२४३। सृजेः। श्रद्धाविशिष्टस्य सृजेरात्मपदं श्य आगमश्च भवति। धात्वर्थः श्रद्धा तद्युक्तस्य सृजेरित्यर्थः। वैष्णव इति वैष्णवः सश्रद्धं यथा स्यात्तथा मालां करोतीत्यर्थः। स्वमतदाढ्याय श्रद्धायाः अन्यत्र परपदं भट्टमल्लस्य मतं दर्शितम्। भूतेशे। भावे कर्म्मणि कर्म्मकर्त्तरि इण् आदेशः कर्त्तरि न प्राप्नोति तत्रापीण् वर्द्धमानमते॥

२४४। अवाद्गुः। अत्र न छन्दः कथमिति न निर्द्धारयामः *। गृधातोः क्विबन्तात् षष्ठीं कृत्वा गुरिति निर्दिष्टम्। यद्वा, अवाद्गुरिति लिपिकारेण कृतम् अवाद् ग्रः इति पाठः सभ्यः। अस्मिन् पाठे छन्दोदोषोऽपि नास्तीति। लक्षणे गृ निगरणे इत्यस्य ग्रहणं न तु गृ शब्दे इत्यस्य तदेवाह, गृणातेर्नेष्यते इति॥

---

* अत्र न छन्द इति अननुसन्धित्सुना प्रक्षिप्तमिति गम्यते। महापण्डितस्य तत्र भवतः टीकाकृतो नेदं लिखनं मन्ये। श्रीश्रीजीवपादलिखने भ्रान्तिरिति स्वप्नेऽपि न भाव्यते, तत्रापि न छन्द इति तु दृष्टिदोषादेव प्रतिभाति। यत्र छन्दोदोषो नास्तीति कृतं, तत्रापि श्यश्च इत्यनेन सवात् इत्यस्य असिद्धिः कार्य्यः इत्यहो मूलोच्छेदि पाण्डित्यम्॥

२४६। उदः सकर्म्मचरतेः।

कर्म्मोच्चरते विष्णुभक्तः उत्क्रम्य तिष्ठतीत्यर्थः। अकर्म्मकत्वे तु वंशीध्वनिरुच्चरति ॥

२४७। तृतीयायोगतः समः।

रथेन सञ्चरते हरिः ॥

२४८। दानः सा चेच्चतुर्थ्यर्थे।

सेति तृतीया। विष्णुप्रसादं तद्विमुखैः संप्रयच्छते ॥

२४९। स्वीकारे तूपयच्छतेः।

रुक्मिणीमुपयच्छते। स्वीकार इति दारकर्म्मण्येवेति काशिकादयः। स्वीकारमात्र इति तु पुरुषोत्तमः। उपायंसत नासवमिति भट्टिः ॥

---

२४५। अङ्गी। अङ्गीकारः प्रतिज्ञा अहमिदं दास्यामीत्यादिरूपा ॥

२४६। उदः। उद इति श्लोकार्द्धैकचरणम् ॥

२४७। तृतीया। इत्येकवचनं पृथग्युग्मचरणवत्। तृतीयया युक्तत्वात् समः परस्मादकर्म्मकाच्चरतेरुत्तरे कर्त्तर्य्यात्मनेपदं स्यात्। वारिपूर्णां महीं कृत्वा पश्चात् सञ्चरते गुरुरित्यत्र न चरधातोः कर्म्म महीमिति, किन्तु कृञः अतोऽकर्म्मत्वम्। ननु तथापि संपूर्व्वात् तृतीयायोगे आत्मपदविधानात् कथमात्मपदम्? उच्यते—पश्चादिति पदम् अव्ययं तृतीयान्तं ज्ञेयम् ॥

२४८। दानः। सेति तृतीयेति कथमिति चेत्तदैवं वाच्यं तृतीयायोगे इत्युक्तेर्हेतोस्तृतीया लभ्यतेऽतः सेति तृतीयेत्युक्तम्। ननु तथापि तृतीयायोगत इति समस्तैकपदात् कथमेकदेश आकर्षणीयः? उच्यते—समस्तस्यासमस्तेन नित्यापेक्षेण सङ्गतिरिति न्यायात्। सेत्यनेन नित्यसापेक्षेण असमस्तेन सह समस्तस्य समस्तैकदेशस्य तृतीयेत्यस्य सङ्गतिर्मेलनं ज्ञेयम्। सा तृतीया यदि चतुर्थ्यर्थे स्यात्तदा दान उत्तरे कर्त्तर्य्यात्मनेपदं स्यादित्यर्थः ॥

२४९। स्वीका। दारेति विवाहकर्म्मण्येवेति स्वीकारविशेषे एव तच्च वृत्तिः कृतो नाभीष्टमिति पुरुषोत्तममतं प्रमाणं दर्शितं अमरमतमप्येतत् उपायंसत- इति बहुवचनान्तम्। आसवं मधुभ्रमरा नोपावृंसत न स्वीकृतवन्त इत्यर्थः ॥

२५० । अथ स्मृ-ज्ञा-पश्यतीनां सनः ।

सुस्मूर्षते जिज्ञासते दिदृक्षते ॥

२५१ । अनुज्ञां विना ।

अनुजिज्ञासति ॥

२५२ । तथा, प्रत्याङ्पूर्व्वं वर्जयित्वा श्रुव आत्मपदं सनः ।

शुश्रूषते प्रशुश्रूषते । नेह प्रतिशुश्रूषति आशुश्रूषति ॥

२५३ । अयज्ञपात्रे तु युजेरजाद्यन्तादुपेन्द्रतः ।

उद्युङ्क्ते प्रयुङ्क्ते । नेह प्रयुनक्ति यज्ञपात्रम् ॥

२५४ । समः क्ष्णौतेः ।

संक्ष्णुते ॥

२५५ । अनवने भुनक्तेः ।

भुङ्क्ते उपभुङ्क्ते । अवने तु भुनक्ति पृथिवीं रामः पालयतीत्यर्थः ॥

---

२५० । अथ । स्मृ आध्याने, ज्ञा अवबोधने, दृशिर प्रेक्षणे एषां सम्बन्धिनः सन् आत्मनेपदं भवति ॥

२५१ । अनुज्ञाम् । अनुपूर्व्वं ज्ञाधातुं विना ज्ञ उत्तरवर्त्तिनः सनः कर्त्तर्य्यात्मपदं भवति ॥

२५२ । तथा । तथेति पृथक् कृत्वा छन्दो वाच्यम् । आत्मपदप्रकरणेऽप्यात्मपदमिति छन्दोऽर्थम् ॥

२५३ । अयज्ञ । अच् आदौ अन्ते वा यस्य तस्मात् अर्थात् संनिदुर-रहितात् । तथा च यज्ञपात्रयोगे संनिदुरः प्रादेरिति । नेति यज्ञपात्रयोगे प्रत्युदाहरणम् ॥

२५४ । समः । क्ष्णु तेजने तस्मात् शमित्यादि कर्म्म ज्ञेयम् । संक्ष्णुते शस्त्रं तीक्ष्णीकरोतीत्यर्थः ॥

२५५ । अनवने । अवनं रक्षणं पालनमिति यावत् । अनवने अपालनेऽर्थे भुनक्तेः कर्त्तर्य्यात्मपदं स्यात् । भुङ्क्तेऽन्नादिकं भक्षतीत्यर्थः । उपभुङ्क्ते गोपीं कृष्ण उपभोगयतीत्यर्थः ॥

२५६। अथ णेरणौ, यत् कर्म्म णौ स कर्त्ता चेद्ध्वेदाध्यानवर्जिते।

अण्यन्ते यत् कर्म्म तद् यदि ण्यन्ते कर्त्ता स्यात्तदा णेरात्मपदमित्यर्थः। अण्यन्ते हरिरारोहति तार्क्ष्यं, ण्यन्ते तु—हरिमारोहयते तार्क्ष्यः। एवं पश्यति यस्तं स्वयमात्मानं दर्शयते हरिः। आध्यानमुत्कण्ठापूर्व्वकस्मरणं, तत्र तु स्मारयति भक्तान् हरिः॥

२५७। मिथ्याशब्दोपपदतः पौनःपुन्ये कृञो णितः।

पदं मिथ्या कारयते मुहुरशुद्धमुच्चारयतीत्यर्थः॥

२५८। प्रलम्भे गृधि-वञ्चोर्णेः॥

बालकृष्णं गर्द्धयते वञ्चयते वृद्धा। प्रलम्भे किम् ? अहिं वञ्चयति॥

---

२५६। अथ णेरणौ। यत् कर्म्म अण्यन्ते यत् कर्म्म प्रेरणे णौ सति स यदि कर्त्ता स्यात्, कर्म्मण उद्देशे यदिति क्लीबं कर्त्तुरुद्देशे पुमान् स इति उद्देश्यविधेयभावान्वयात् यथा पञ्च वृक्षा नौर्भवति भवन्ति च। आध्यानं स्मरणम्, उत्कण्ठास्मरणमिति सम्मतम्। तार्क्ष्यो गरुड़ः स चाण्यन्ते तु कर्त्ता। अत्र रुहिर्न्यग्भावनार्थः न्यग्भावनार्थे रुहधातौ णाविति कृते यादृगर्थः केवलेऽपि तादृगर्थः पचनपाचना न्यग्भवन-न्यग्भावनादिधात्वर्थः सर्व्वत्रैव। तथाच। निष्पत्तिमात्रे कर्त्तृत्वं सर्व्वत्रैवास्ति कारके। व्यापारभेदापेक्षायां करणत्वादिसम्भव इति, अतः तार्क्ष्यस्य कर्त्तृत्वे धातोरकर्म्मकत्वं तस्मिन् सति अकर्म्मकेत्यादिना हरेः कर्म्मत्वम्॥

२५७। मिथ्या। णित इति पञ्चम्यास्तसि रूपम्। पौनःपुन्येऽर्थे वर्त्तमानात् मिथ्याशब्दसमीपपदात् कृञ उत्तरस्माण्णेरुत्तरे कर्त्तर्यात्मनेपदं स्यात्। पदमिति कर्म्मपदं मिथ्याशब्दस्य आत्मपदनिमित्तत्वात् तन्निमित्तोपपदस्य तिङन्तस्यापि समासः समासे मिथ्याशब्दस्य कर्म्मपदस्य धातुभक्तत्वात् पदमिति कर्म्मान्तरं पदस्य मिथ्याकारक इत्यर्थः। तदेवाह मुहुरित्यादि॥

२५८। प्रल। प्रलम्भो विसम्वादस्तस्मिन्नर्थे गृधिवञ्चोरुत्तरस्माण्णेः परस्मिन् कर्त्तर्यात्मनेपदं भवति। वृद्धा गोपी पौर्णमासी वा। नवनीतं

२५९। कर्त्तृगामिफले त्वथ।

प्रभुरयम् ॥

२६०। अपाद्वदः।

अपवदते ॥

२६१। समुदाङ्भ्यो यमेरग्रन्थगौरवे।

मनः संयच्छते। हरिभक्तिमुद्यच्छते। आयच्छते। सूचनार्थादित्यादि उदायसत। ग्रन्थगौरवे तु गीतामुद्यच्छति भववद्धर्मं वा॥

२६२। ज्ञ उपेन्द्र-विनाभावात्।

कृष्णं जानीते भक्तः। उपेन्द्रे तु प्रजानाति। अकर्त्तृगामिफले तु परस्य गां जानाति ॥

इतः परं निषेधः स्यात् सामान्यवचने यथा—धरित्रीं दुदुहः केचित् स्वार्थं परार्थं चेति सामान्यवचनत्वम् ॥

---

दास्यामि नर्त्तय नर्त्तिति न ददातीति वञ्चनम्। तुभ्यं नप्त्रे नप्त्रीं समर्पयिष्यामि सन्ध्यायां मद्गृहं याहीति गर्द्धते लोभयति। गृधु अभिकाङ्क्षायाम् ॥

२५९। कर्त्तृगामि। तु पुनरपि अथानन्तरं कर्त्तृगामिक्रियाफले धातोरुत्तरे कर्त्तर्य्यात्मनेपदं स्यात् ॥

२६०। अपात्। सुगमम् ॥

२६१। सम्। ग्रन्थस्य गौरवं गुरुवदानयनं स्वीकरणमिति यावत्। अग्रन्थ इत्यनेन सिद्धे गौरवपदं पूर्व्वसूत्रसहितच्छन्दोऽर्थम्। सूचनार्थादित्यादीति सेः कपिलविधानलक्षणम् ॥

२६२। ज्ञः। उपेन्द्रस्य विनाभावात् अभात्। उपेन्द्रस्य विनाभावोऽभावो यत्र तस्माद्धातोरित्यर्थः। ज्ञोऽप्रादेरित्यर्थः। श्लोकाद्यपादत्वाद् अक्षराधिक्यम् ॥

इतः परं परस्मिन् दुदुहुः केचिदिति परस्परमित्युक्तम्। तेन कर्म्मव्यतीहारे आत्मपदप्राप्तौ निषेधः ॥

(३५३) द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ॥
संव्यानमुत्तरीयञ्च (३५४) चोलः कूर्पासकोऽस्त्रियाम् ।
(३५५) नीशारः स्यात् प्रावरणे हिमानिलनिवारणे ॥
(३५६) अर्द्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम् ।
(३५७) स्यात्त्रिष्वाप्रपदीनन्तत् प्राप्नोत्याप्रपदं हि यत् ॥
(३५८) अस्त्री वितान-मुल्लोचो (३५९) दूष्याद्यं वस्त्रवेश्मनि ।

---

अन्तेति। चतुष्कं परिधानवस्त्र। अन्तरे भवम् ईयः। उपसंवीयते विधीयते युट्। परिधीयते युट् ॥३५२

प्रेति। पञ्चकमुत्तरीयवस्त्रे। प्राव्रियते घञ्। उत्तरस्मिन् देह-भागे आसज्यते घञ्। बृहतीशब्दात् स्वार्थे कः। संवीयते आच्छाद्यते अनेन युट्। उत्तरभागे हितम् ईयः ॥३५३

चोल इति। द्वयं स्त्रीणां 'काँचुली' इति ख्याते। चुलेर्घञ्। कूर्पेऽस्यते घञ् ॥३५४

नीति। कानात् वा ससारोति ख्याते। निशीर्य्यते शीतमनेन घञ्, ह्रस्वस्य दीर्घता ॥३५५

अर्द्धेति। द्वयं दिव्यस्त्रीणां वस्त्रविशेषे "चलना" इति ख्याते। अर्द्धोरुं कायति प्राप्नोति। "अर्द्धोरुकं वरस्त्रीणां वासश्चण्डातकः पुमान्" इत्यमरमाला ॥३५६

यत् पादाग्रपर्य्यन्तं पतति तदाप्रपदीनम् ईनस्तद्धितः ॥३५७

वितेति। द्वयं "चान्दोया" इति ख्याते। वितन्यते वितानः। ऊर्द्ध्वं लोच्यते निबध्यते उल्लोचः संज्ञात्वान्न कत्वम् ॥३५८

वस्त्रगृहे दूष्यम्। "त्रिषु दूष्यं दूषणीये क्लीबं वस्त्रगृहेऽपि चे"ति मूर्द्धन्यान्ते रुद्रः। दन्त्यान्तमिति कश्चित्। आद्येन स्थूलं पटगृहं दूष्यं पटवा पटकुट्यपीति शुभाङ्कः ॥३५९

(३६०) प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा ॥
(३६१) परिकर्म्माङ्गसंस्कारः (३६२) स्यान्मार्ष्टिर्मार्ज्जना मृजा।
(३६३) उद्वर्त्तनोत्सादने द्वे समे (३६४) आप्लाव आप्लवः।
स्नानं (३६५) चर्चा तु चार्चिक्यं स्थासको-
(३६६) ऽथ प्रबोधनम्।
अनुबोधः (३६७) पत्रलेखा पत्राङ्गुलिरिमे समे॥

---

प्रतीति। अयं व्यवधायकपटे प्रतिसरति पृषोदरादिः। जवेति-"वहति कोकनटे रुचिरं चिरं ललितचन्द्रकताण्डवमण्डनम्। स्फुटमिवाम्बुमुचां रुरुचे तड़िज्जवनिकावनिकान्तिकदा तदा" इति कविकलाभ्युदययमकम्। कोकनटे मयूरे रुचिरताण्डवमण्डनं चिरं वहति सति स्फुटमम्बुमुचां जवनिका तड़िदिव विस्तृता विरुरुचे। अवनिकान्तिकं ददाति कः इत्यस्यार्थः। यस्तु अदने यमनिकेति केचित्। तिरस् इति वा पत्वम्। "तिरस्करिण्यो जलदा भवन्ति" इति कुमारे ॥५६०

परीति। द्वयं स्नानादिनाङ्गसंस्कारमात्रे। प्रतिकर्म्मेति क्वचित् ॥३७१

मार्ष्टीति। त्रयं चन्दनादिनाङ्गमार्ज्जने। मृज शुद्धौ क्तिः। कारितान्ताद् युः अङ्च ॥३६२

उद्वे ति। द्वयं कुङ्कुमहरिद्रादिना गात्रनिर्म्मलीकरणे। उद्वर्त्तते उत्साद्यते युट् ॥३६३

आप्लु ति। त्रयं स्नाने। आङि रुप्लुवोरिति वा घञ् पक्षेऽल् ॥३६४

चर्च्चेति। त्रयं वस्त्राङ्गादौ विन्यस्तकुङ्कुमादिच्छटायाम् ॥३६५

प्रेति। द्वयं स्नानादिकरणेन किञ्चित् प्रतीयमानसौरभस्य पुनर्व्यक्तीकरणे इति सुभूः। नष्टपूर्व्वगन्धस्य चन्दनादेः प्रयत्नविशेषेण पुनर्गन्धोपादाने इत्यन्ये। बुधयु ट्घञौ ॥३६६

पत्रेति। द्वयं स्तनकपोलादौ कस्तूरिकादिरचितपत्रावल्याम्। पत्रावली पत्राञ्जनादिशब्दोऽप्यत्र ॥३६७

(३६८) तमालपत्र-तिलक-चित्रकाणि विशेषकम् ।
द्वितीयञ्च तुरीयञ्च न स्त्रिया-(३३९) मथ कुङ्कुमम् ।
काश्मीरजन्माऽग्निशिखं वरं बाह्लीकपीतने ।
रक्तसंकोचपिशुनं धीरं लोहितचन्दनम् ॥
(३७०) लाक्षा राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः ॥
(३७१) लवङ्गं देवकुसुमं श्रीसंज्ञ-(३७२) मथ जायकम् ।
कालीयकञ्च कालानुसार्य्यं (३७३) चाऽथ समर्थकम् ।

---

तमालादि चतुष्कं ललाटकृतचित्रके । तमालपत्राकृति तमालपत्रम् । तिलपुष्पाकृति तिलकम् । नानावर्णरचितं चित्रकम् । सामान्येन ! विशेषकम् । तत्र द्वितीयं तिलकं तुरीयं विशेषकञ्च न स्त्रियामित्यर्थः ॥३६८

कुङ्कुममिति । लोहितचन्दनान्तमेकादशकं कुङ्कुमे । काश्मीरेषु जन्मास्य काश्मीरस्तालव्यशः । अग्निशिखेव दीप्तिरस्य । वृणोतेरल् । "वरो जामातरि वृतौ देवतादेरभीप्सिते । कुङ्कुमे च मनागिष्टे क्लीबं श्रेष्ठे च वाच्यव"दिति रभसः । वाह्लीकदेशे भवं अण् । वाह्लीकं वाह्लिकं धीरहिङ्गुनोनाश्वदेशयो" रिति रुद्रः । अत्र धीरं कुङ्कुमम् । "काश्मीर-चारुवाह्लीकसङ्कोचं पिशुनं वर"मिति तन्त्रान्तरे चारुवाह्लीकपाठात् वर-वाह्लीकमित्येकं नाम इत्यन्ये । पीतयति अङ्गं युः । "रक्तं नील्यादिरक्ते स्यात् कुङ्कुमेऽसृजि लोहित" इति रुद्रः । "परिभ्रमँल्लोहितचन्दनोक्षितः" इति भारविः ॥३६९

लेति । षट् लाक्षायाम् । राहधातोः सक् । पक्षे कपिलिकादित्वात् लत्वम् । जनेर्डतुः । यु मिश्रणेऽच् , ततः प्रज्ञाद्यण् । द्रुमस्यामयो रोगः । यद्यपि लाक्षायाः सारभूतो यावोऽलक्तस्तस्यावशिष्टं जतु, तथाप्यभेदादुक्तम् ॥३७०

लेति । त्रयं लङ्गवटीति ख्याते लवङ्गे । श्रीसंज्ञं लक्ष्मीपर्य्यायमित्यर्थः ॥३७१

वंशिकाऽगुरुराजार्हलोहं क्रिमिज-जोङ्गकम् ॥
(३७४) कालागुर्व्वगुरुः स्यात्तु मङ्गल्योमल्लिगन्धि यत् ।
(३७५) यक्षधूपः सर्ज्जरसोऽरालसर्व्वरसावपि ।
बहुरूपोऽप्य-(३७६) ऽथ वृकधूपकृत्रिमधूपकौ ।

---

जेति "कालिया" इति ख्याते ( पीतकाष्ठे गन्धद्रव्ये )। जापकं चवर्गादिमूर्द्धन्यपः। "कालीयकञ्च कालेयं जापकं कान्तिदायक"मिति व्याड़िः। ( जयति अभिभवति पुष्पान्तरसौरभमिति जायकम्। जापकमिति पकारमध्यपाठो नान्यत्र कुत्रापि दृश्यते। व्याड़िवचनेऽपि जापकमित्यत्र वर्णकमित्याहतूरायमहेश्वरौ, अतोऽयं पाठः सुधीभिश्चिन्तनीयः )। कालमनुस्रियते ष्यण्। शकन्ध्वादिसूत्रे एकार्थत्वे समर्थोऽपीत्यस्यासार्वत्रिकत्वान्नाकारलोप इति कश्चित्। साम्प्रदायिकास्तु तत्रैकार्थत्वं परस्परसम्बन्धार्थत्वं न समानार्थत्वमित्याहुः। तथाच— "समर्थस्त्रिषु शक्तिष्ठे सम्बन्धार्थे हितेऽपि चे"त्यमरः। अन्ये तु समर्थमित्येव पाठं मन्यन्ते ॥३७२

वंशीति। जोङ्गकान्तं षट्कमगुरुसामान्ये। वंशिकं तालवशं क्लीवम्। अगुरुत्वादगुरु पुंस्यपि। "अगुरुर्व्वंशिकं लोहं कृष्णवृक्षे नृपप्रिय" इति व्याड़िः। अगुरुर्व्वा पुंसि लघुनाम चेति रत्नकोषः। राजानमर्हति अर्ह इत्यच् राजार्हम्, लूयते लोहं लूञो ह इति। "लोहाऽस्त्री शस्त्रके लोहे सर्व्वतैजसजोङ्गके" इति रुद्रः ॥३७३

कालेति। कालागुरुश्चागुरुरुच्यते। मल्लिकापुष्पगन्धिरगुरुर्म्मङ्गल्या ॥३७४

यक्षेति। पञ्चकं यक्षधूपे। यक्षप्रियो धूपः। "रालः सर्ज्जरसोऽरालो धूपको वह्निवल्लभः। वाद्यभाण्डान्तरे सर्वरसः सर्ज्जरसेऽपि चे"ति दन्त्यान्ते रुद्रः ॥३७५

वृकेति। द्वयं नानाद्रव्यरचिते दशाङ्गादिधूपे। वृकः कृत्रिमः ॥३७६

(३७७) तुरुष्कः पिण्डकः सिह्लो यावनो-(३७८) ऽप्यथ पायसः।
श्रीवासो वृकधूपोऽपि श्रीपिष्ट-सरलद्रवौ।
(३७९) मृगनाभिर्मृगमदः कस्तूरी चा-(३८०) ऽथ कोलकम्।
कक्कोलकं कोशफल-(३८१) मथ कर्पूरमस्त्रियाम्।
घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमबालुका॥

---

तुर्विति। चतुष्कं सिह्ला इति ख्याते गन्धद्रव्ये। तुरुष्कोऽपि। तुर्य्यते हिनस्ति दौर्गन्ध्यं तुरि त्वरणहिंसयोर्बहुलमन्यत्राप्युसि प्रत्यये संज्ञायां कनि तुरुष्कः जवनदेशजत्वाद्वा। यवनदेशजो यावनोऽन्त स्थादिः। चवर्गादिरपि—"जवनो जातिभिर्देशे वेगाधिकतुरङ्गम" इति जादौ रुद्रः ॥३७७

पेति। पञ्चकं सरसनामधेयत्वात् पायस इति सुभूः। "सरलद्रवः श्रीपिष्टो दधिक्षीरघृताह्वय" इति रभसः। "श्रीवासे परमान्नेऽपि पायसः पुंसि सम्मत" इति च रभसः। वासयति सुरभयति वासः, श्रीयुक्तो वासः। "श्रीर्वेशरचना शोभा भारती सरलद्रव" इति रभसः। "वृकः स्यात् कृत्रिमे धूपे चणके सरलद्रवे" इत्यजयः ॥३७८

मृगेति। त्रयं कस्तूर्य्याम्। "मृगनाभिर्मृगमदो मृगकस्तूरिकाण्डजा" इति रुद्रः। "मुख्यवाट्क्षत्रयोर्नाभिः पुंसि प्राण्यङ्गजे स्त्रियाम्। चंक्रमणे प्रधाने च स्त्रियां कस्तूरिकामदे" इति व्याड़िः। "मदो रेतसि कस्तूर्य्यां गर्व्वे हर्षेभदानयो" रिति साहसाङ्कः। तेन मदश्च ॥३७९

कोलेति। त्रयं कक्कोले। कातृकला इति ख्याते। कोष इव फलमस्य ॥३८०

केति। हिमबालुकान्तं पञ्चकं कर्पूरे। कृपेः खर्ज्जुरादित्वादूरन्। चन्द्रपर्य्यायनामा। "घनसारस्तु कर्पूरश्चन्द्रभस्महिमाह्वय" इति त्रिकाण्ड-शेषः। सिताभ्रमिव आभा यस्य सिताभ्रः। सिताभा अस्येति सिताभश्च ॥३८१

(३८२) गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् ।
(३८३) तैलपर्णिकं गोशीर्षे हरिचन्दनमस्त्रियाम् ॥
(३८४) तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् ।
कुचन्दनं (३८५) चाऽथ जातीकोशजातिफले समे ॥
(३८६) कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षकर्दमः ।
(३८७) गात्रानुलेपनी वर्त्ति-(३८८) र्वर्णकं स्याद्विलेपनम् ॥

---

गेति। चतुष्कं चन्दने। गन्धः सारोऽस्य। मलये जातः। भद्रा श्रीरस्या। चन्दयति नन्द्यादिः ॥३८२

तैलपर्णिकादयस्त्रयश्चन्दनविशेषाः। तत्र धवलं शीतलतमं तैलपर्णिकमुच्यते। गोशीर्षाकारे मलयैकदेशे जातमुत्पलगन्धि गोशीर्षम्। हरिचन्दनं पक्वाम्रफलगन्धिपीतवर्णम्। रुद्रस्तु—"गोशीर्षे कुङ्कुमे देववृक्षेऽस्त्री हरिचन्दन"मित्याह। अन्ये तु हरिचन्दनाख्ये गन्धद्रव्ये त्रयमाहुः ॥३८३॥

तिलेति। कुचन्दनान्तं पञ्चकं रक्तचन्दने। यत्तु रक्तचन्दनसदृशं रक्तसारं पत्राङ्गं तद्वैश्यवर्गे वक्ष्यति। कुचन्दनं गन्धराहित्यात् ॥३८४

जातीति। द्वयं जातिफलम् इति ख्याते। जात्या कोषफले। जातीफलं जातिफलमिति द्विरूपकोषः। फलमपि—फलं लाभे जातिकोषे वाणाग्रे फलकेऽपि चे"ति रुद्रः ॥३८५

कर्पूरादिभिः समभागैर्यक्षकर्दम इष्यते इति व्याड़िः ॥३८६

गेति। द्वयं गात्रानुलेपनार्थं वर्त्तितकुङ्कुमचन्दनादौ। गात्रमनुलिप्यतेऽनया। वर्त्तयन्ति तामिति किः ॥३८७

वेति द्वयं घृष्टचन्दनादिविलेपनक्रियायाम। चतुष्कमेकपर्य्यायमित्येके। "गात्रानुलेपनीवर्त्तिविदग्धयथ विलेपनम्। वर्णकं चाथ विच्छित्तिः स्त्री कषायोऽङ्गरागक" इति रभसः ॥३८८

(३८९) चूर्णानि वासयोगाः स्यु-(३९०) र्भावितं वासितं त्रिषु।
(३९१) संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम् ॥
(३९२) माल्यं मालास्रजौ (३९३)मूर्द्धिन केशमध्ये तु गर्भकः।
(३९४) प्रभ्रष्टकं शिखालम्बि पुरोन्यस्तं ललामकम् ॥
प्रालम्बमृजुलम्बि स्यात् कण्ठाद् वैकक्षकन्तु तत्।
यत्तिर्यक्क्षिप्तमुरसि (३९५) शिखास्वापीड़शेखरौ ॥
(३९६) रचना स्यात् परिस्पन्द (३९७) आभोगः परिपूर्णता।

---

चूर्णानीति। नानागन्धद्रव्याणां चूर्णानि वासयोगाः। वासेन युज्यन्ते घञ्। "नानावस्तूनि संगृह्य कृतानि सुरभीणि च। गुड़िकाकृतचूर्णानि वासयोगाः प्रकीर्त्तिता" इत्यन्यत्र। "चूर्णो धूलौ क्षारभेदे चूर्णानि वासयुक्तिष्वि"ति रुद्रः ॥३८९

भेति। द्वयं प्राहितगन्धे वस्तुनि। वास उपसेवायां क्तः। त्रिष्विति द्वयोरपि सम्बध्यते ॥३९०

गन्धमाल्यधूपादिभिर्वस्त्रताम्बूलादीनां यः संस्कारः तदधिवासनम् ॥३९१॥

मेति। त्रयं मस्तकाहितमालायाम्, अन्यत्र लक्षणया। मल्यते धार्य्यते ण्यण्। मां लक्ष्मीं लाति कः। सृजति तामिति क्विपि निपातः ॥३९२

केशमध्ये निवेशिते माल्ये गर्भकः ॥३९३

प्रेति। चूड़ातो लम्बमानं प्रभ्रष्टकम्। पुरोभागे न्यस्तं ललाटपर्य्यन्तमागतं ललामकं पृषोदरादि। ऋजु लम्बमानं प्रालम्बम्। उत्तरीयाकारेणोरसि तिर्य्यगाहितं वैकक्षकम् ॥३९४

शिखेति। द्वयं शिखास्थितमाल्यमात्रे। शेते शिरसि ॥३९५

रचेति। द्वयं पत्रावल्यादे रचनायाम्। "प्रतियत्नपरिष्यन्दौ पुमांसौ रचना स्त्रिया"मिति रत्नसः ॥३९६

(३९८) उपधानन्तूपबर्हः (३९९) शय्यायां शयनीयवत् ॥
शयनं (४००) मञ्च-पर्य्यङ्क-पल्यङ्काः खट्वाया समाः।
(४०१) गेण्डुकः कन्दुको (४०२) दीपः प्रदीपः
(४०३) पाठमासनम् ॥
(४०४) समुद्गकः सम्पुटकः (४०५) प्रतिग्राहः पतद्ग्रहः।
(४०६) प्रसाधनी कङ्कतिका (४०७) पिष्टातः पटवासकः।

---

सर्व्वस्य पूर्णत्वसाभोगः। आभुज्यते सम्यगनुभूयतेऽनेनेति घञ् आभोगः ॥३९७

उपेति। द्वयं "वालिश" इति ख्याते। उपधीयते उपवृह्यते शिरोऽस्मिन् युङ् घञौ ॥३९८

शेति। त्रयं शय्यायाम्। शय्यतेऽस्यां समजेत्यादिना क्यप्, अन्यत्रापि चेति वचनादाधारेऽनीयो युट् च। वत् पादपूरणे ॥३९९

मेति। चतुष्कं खाट इति ख्याते। मचि धारणेऽच्। अङ्केर्घञ्। खटेः क्वन् ॥४००

गेण्डिति। द्वयं नगरवालकादीनां क्रीड़नके गेडुया इति ख्याते। "गेण्डूको गेण्डकः केन्दु"रिति शाश्वतः ॥४०१

दीति। द्वयं दीपे। दीप्यते इति कः। प्रशब्दोऽन्योपसर्गनिवारणार्थः। "शीतरश्मी गृहमणिः स्नेहाशः कज्ज्वलध्वजः। छटाजालो दशाकर्षो दोषातिकर इत्यपी"ति रभसेऽस्य पर्य्यायः ॥४०२

पीति। द्वयमासने। आस्यतेऽस्मिन् युट् ॥४०३

सेति। द्वयं कर्पूरादिसम्पुटे। समुद्गच्छति डः, कः स्वार्थे ॥४०४

प्रतीति। द्वयम् आइलवाटेति ख्याते। पिकदानीति रायः। पतत्ताम्बूलादिकं गृह्णाति ग्रहेर्व्वा णः, पक्षे अच् ॥४०५

प्रसेति। द्वयं केशमार्ज्जन्याम्। "चिरुणी" वा "काँकयि" इति ख्यातायाम्। कङ्केरतच् नदादित्वादीः कः स्वार्थे। कङ्कती च प्रसाधनीति स्त्रीकाण्डेऽमरमाला ॥४०६

# प्रणव-पारिजातः

( संस्कृत-मासिकपत्रम् )

त्रयोदशवर्षम्, पञ्चमसंख्या ] [ पौषमासः १८६२ शकाब्दः]

## श्रीमद्भगवद्गीतायां भक्ति-कर्म्मवादौ

( निबन्धकः—अध्यापकः श्रीरवीन्द्रकुमारसिद्धान्तशास्त्री )

( पूर्वतोऽनुवृत्तम् )

भवितुमर्हेत् ? अतो यज्ञकर्म्मण उपकृतिरप्रतिबन्ध्यैव। यज्ञकर्म्मणि देवेभ्योऽग्रभागं दत्त्वा तदवशिष्टांशग्रहणे दोषो न स्यात्। तेभ्योऽप्रदाय ग्रहणन्तु स्तेनसदृशम्। अत्रोक्तम्—

"इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः॥
यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्व्वकिल्विषैः।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्॥" इति।

एतस्माज् ज्ञायते, यज्ञकर्म्मणो भोगो लभ्यते, स च निर्दोषो मुक्तेरप्रतिबन्धश्चेति। केवलमात्मप्रीतये भोगसाधनमेव भवति दोषाय। एतस्मिन् विषये धर्म्मशास्त्रस्य मतमपि दृश्यते 'केवलं प्रीतिजननं वृथापाकं विवर्ज्जयेदि'ति। एवं यज्ञस्य प्रशंसामुक्त्वा तादृशो यज्ञोऽपि कर्म्मण एव जायत इति निगद्य यज्ञादपि कर्म्मणः प्राधान्यं प्रख्यापयति—

"अन्नाद्भवन्ति भूतानि पर्ज्जन्यादन्नसम्भवः।
यज्ञाद् भवति पर्ज्जन्यो यज्ञः कर्म्मसमुद्भवः॥" इति।

कर्म्म विना यज्ञो न सम्भवति। सम्पादिते च यज्ञे तस्य फलाद् वृष्टिर्भवति। सत्यायां वृष्टौ शस्यानि जायन्ते। प्राणिनश्च शस्येनैव जीवन्तीति कर्म्मैव जगति प्राणिनां स्थितौ निमित्तम्। तेन जगद्रक्षणस्वरूपमिदं कर्म्म कथमपि न परिहर्त्तव्यमिति श्रीभगवदभिप्रायः।

पुनरपि कर्म्मैव प्रशंसन्नाह—

"कर्म्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षर-समुद्भवम् ।
तस्मात् सर्व्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥"

लोकप्रसिद्धमिदं कर्म्म ब्रह्मण उत्पन्नम् । ब्रह्म चाक्षरपुरुषात् परमेश्वराज्जातम् । स च परमेश्वरः सर्व्वगत ब्रह्मरूपेणावधार्य्यते । तथा च श्रुती—

"स भूमिं सर्व्वतो व्याप्य अत्यतिष्ठद्दशाङ्गुलम् ।" इति.

"पुरुष एवेदं सर्व्वं यद्भुतं
यच्च भाव्यमुतामृतत्त्वस्येशानो यदन्नेनातिरोहति ।" इति च।

अतो यत्र यज्ञोऽस्ति, तत्र तत्साधनं कर्म्माप्यवश्यमेव विद्यते। यत्र च कर्म्मणः सद्भावस्तत्र तत्कारणस्य सर्व्वगतस्य ब्रह्मणोऽपि सद्भाव एव स्यात् । ननु कर्म्म कार्य्यं ब्रह्म च तत् कारणमतः कथं कार्य्ये कारणस्य सद्भावमङ्गीकरिष्यामीत्यपि न वाच्यं श्रुतिष्वपि कार्य्ये कारणस्य विद्यमानताङ्गीकारात् । तथा च श्रुतिः—

"आत्मा वै जायते पुत्रः" इति ।

श्लोकोऽयमन्यथापि व्याख्यातुं शक्यते । तथाहि—अक्षरसमुद्भूतं यद् ब्रह्म तदपि कर्म्मब्रह्मण एवोत्पन्नं ज्ञातव्यम् । तेन 'सर्व्वं खल्विदं ब्रह्म' इत्युपनिषदुक्त्या कर्म्मब्रह्मणोरभेदोपचाराद् यत्र कर्म्मणः सत्ता तत्र ब्रह्मणोऽपि विद्यमानता ध्रुवमेवाङ्गीकार्य्या ।

एतावता कर्म्मणो ब्रह्मसारूप्यं यज्ञादिषु प्रशस्तकार्य्येषु सर्व्वत्रैव विद्यमानत्वञ्च विज्ञाप्य पुनः कर्म्मण्यप्रवर्त्तनं दूषयन्नाह—

"एवं प्रवर्त्तितं चक्रं नानुवर्त्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥" इति ।

एतेन कर्म्महीनस्य जनस्य जीवनधारणमेव निरर्थकमिति घोषितम् । एतदनन्तरमेव भगवता—

'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्य्यं न विद्यते ॥

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्व्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥"

इत्यनेनात्मारामत्वमात्मतृप्तिमात्मसन्तुष्टिश्च लब्धुमुपदिशता तादृशगुण-युक्तस्य कार्य्यं न विद्यत इति निगदितम्। ननु कस्तावदत्र कार्य्यशब्द-स्यार्थः ? औचित्यार्थ एव कलापविहितस्यास्य ध्यण्प्रत्ययस्य पाणिनि-विहितस्य वा ण्यत्प्रत्ययस्य प्रयोगो दृश्यते। अपि नाम तर्हि कार्य्य-शब्देनानेन कर्म्मण्यौचित्यबोधोऽवगम्यते ? मन्ये, औचित्यबोध एव लक्ष्यते, अन्यथा वचनान्तरैः सह विरोधोत्पत्तेर्दुर्निवारताप्रसङ्गात्।

यस्तु स्वावस्थयैवानन्दमनुभवति, आत्मचिन्तनेनैव च लोभादिरहितः स्यात्तादृशस्य महापुरुषस्य कर्म्मान्तरेषु स्पृहा भवितुं नार्हति। तादृशस्य जनस्य तु सर्व्वत्र समताबुद्धिवशाद् यथा कृतेन कर्म्मणा किमपि प्रयोजनं नानुभूयते, तथा कृतेनापि प्रयोजनबोधो हि स्पृहात एव जायते। अतः स्पृहाहीनस्य जनस्य कुतः प्रयोजनबोधसम्भावना ? समग्रेऽस्मिन् ब्रह्माण्डे सर्व्वेष्वेव प्राणिषु क्षित्यादिषु भूतेषु च तस्य कोऽपि कुतः प्रयोजनबोधो न स्यात्। यो हि पुत्रादिकं लब्धुमिच्छति दैहिकं भोगं कामयते वा, तस्यैव 'पुत्रार्थे क्रियते भार्य्या' इत्यादिश्रुतिमाश्रित्य लोकाचारदर्शनाच्च दारपरिग्रहे स्पृहा भवेत्। पुत्रस्य च प्रयोजनबोधः पिण्डादिलाभायैव। एवं दृश्यते बलकामस्य पुष्टिकरद्रव्यभोजनप्रयोजनं लज्जानिवारणार्थिनश्च वस्त्रादिपरिधानम्। यस्य वासनैव नास्ति, लज्जा-मानापमानादिषु च सर्व्वत्रैव विद्यते सम-बुद्धिः, कुतस्तस्य प्रयोजनबोधप्रसङ्गः ?

ननु तर्हि वयमपि निःस्पृहा भविष्यामः, तेन चास्माकमपि कुत्रापि प्रयोजनबोधो नानुभविष्यते। तेन च कर्म्मणोऽपि प्रयोजनबोधाभावात्त-दपि न करणीयं स्यात्। अतः किमर्थं भवता कर्म्मैव कर्त्तुमुपदिश्यत इत्याह—

"तस्मादसक्तः सततं कार्य्यं कर्म्म समाचर।
असक्तो ह्याचरन् कर्म्म परमाप्नोति पुरुषः ॥" इति।

अस्यायमभिप्रायः—यद्यपि आसक्तिराहित्यं लब्धुमुपदिश्यते भवान्, तथापि नायमुपदेशः कर्म्मविरतये प्रयुज्यते। यथा हि 'पर्व्वतं गच्छ' 'हिमालयं गच्छ' इत्यादेशद्वयेन हिमालयाभिधं पर्व्वतं गच्छेत्येकार्थ एवोपलभ्यते, तथैव 'कर्म्म कुरु' 'आसक्तिरहितो भव' इत्युपदेशद्वयेन 'आसक्तिरहितः सन् कर्म्म कुरु' इत्येकार्थ एवावगन्तव्यः। तेन,

"कर्म्मण्येवाधिकारास्ते मा फलेषु कदाचन।

इति नीतिमनुसृत्य फलनिरपेक्षः सन् केवलं वैधं कर्म्म कुरु। कार्य्यमिति ध्यण् प्रत्ययान्तपदस्योचितार्थ इति बोधकतया विहितार्थं लक्षितम्। अवैधकर्म्मसम्पादनन्तु सर्व्वथैवन्याय्यम्। तथा चोक्तं 'मा ते सङ्गोऽस्त्वकर्म्मणि' इति।

नन्वनासक्त्या कर्म्मकरणे किमपि फलं न भविष्यति। फलाभावे तु कोऽपि किमपि कर्म्म कर्त्तुं नेच्छतीति लोकप्रसिद्ध एव व्यापारः। उक्तञ्च भगवता मनुना—

"अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित्।
यद् यद्धि कुरुते किञ्चित्तत्तत् कामस्य चेष्टितम्॥" इति।

प्रश्नमिममाशङ्क्य तदुत्तरमाह—यद्यपि फलकाङ्क्षिणः साधारणस्वर्गादि-फलं विद्यते, तद्यपि तदपेक्षयापि महान् कश्चिदसाधारणः फलयोगोऽस्ति। तच्च फलं परब्रह्मप्राप्तिरूपं सर्व्वेषामेव साधकानां चरमकाम्यम्। एतन्म-हत् फलमेवाफलत्वेन कल्प्यते। श्लोकस्यास्य शेषार्द्धेन सत्यमेतन्निगद्य पुनः कर्म्मप्रवर्त्तनाया नाय्यत्वं प्रमाणयितुं यतितं भगवता। मनुनापि सङ्कल्पविहीनकर्म्मसम्पादनात् सर्व्वकामनाविरतिरूपा मुक्तिरापद्यते इति स्वीकृतम्। तदुक्तम्—

"तेषु सम्यग् वर्त्तमानो गच्छत्यमरलोकताम्।
यथासङ्कल्पितां श्चेह सर्व्वान् कामान् समश्नुते॥" इति।

एतदनन्तरं— "वेदाः विभिन्नाः स्मृतयो विभिन्ना
नासौ मुनिर्यस्य मतं न भिन्नम्।

धर्म्मस्य तत्त्वं निहितं गुहायां
महाजना येन गताः स पन्थाः ॥"

इति महाभारतीयवचनं संस्मृत्य महाजना अपि कर्म्मणैव सिद्धिं लब्धवन्त इति ज्ञापयितुमाह—

"कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः।
लोकसंग्रहमेवापि सम्पश्यन् कर्त्तुमर्हसि ॥" इति।

अत्र प्रथमार्द्धेन जनकादीनां राजर्षीणां कर्म्ममार्गेणैव सिद्धिरजायतेति विज्ञाप्य ततोऽपि स्वमतस्य दृढ़ीकरणाय द्वितीयार्द्धं निबद्धम्। अस्यायमभिप्रायः—सदैव भवान् परोपकारायात्म निबद्धम्। अस्यायमभिप्रायः—सदैव भवान् परोपकारायात्मनियोगं करोति। अतः केवलं परोपकारसम्पादनार्थमपि भवता कर्म्मणि प्रवर्त्तितव्यमिति। ननु कथं कर्म्मणा परोपकारस्य सम्भव इत्याह—

—क्रमशः

# आचारप्रभवो धर्मः

श्रीलक्ष्मीधर द्विवेदी, साहित्याचार्यः, धर्मशास्त्रशास्त्री

वैरञ्चेऽस्मिन् प्रपञ्चे आत्माभ्युदयनिःश्रेयससाधनभूतो यो धर्मः स प्राधान्येनाचारत एव समुत्पद्यते, विषयेऽस्मिन्नैकमत्यं समेषां शास्त्राणामिति विदुषां सुविदिततरमेतत्, 'आङ्' उपसर्गपूर्वकात्, 'चर्' धातोः भाववाच्ये 'घञ्' प्रत्ययेनाय शब्दो निष्पन्नः। यस्यार्थं आचरणमनुष्ठानं वा। शास्त्रेषु स्वाध्यायादीनि यानि विहितत्वेन प्रतिपादितानि, रागद्वेषविरहितान्तःकरणैः साधुजनैर्यान्युनुष्ठितानि, तेभ्य एव धर्मः सम्पद्यते; न पुनः सुरापानपराङ्गनोपभोगादिप्रतिषिद्धेभ्यः विषयजर्जरितैरनुष्ठितेभ्यः कर्मभ्यः। स्पष्टमुक्तं विशिष्ठेन "श्रुति-स्मृतिविहितो धर्मः," तदलाभे शिष्टाचारः प्रमाणं" "शिष्टः पुनरकामात्मा," मनुरपि।

"विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः"
"आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च,
तस्मादस्मिन् सदा युक्तो नित्यं स्यादात्मवान् द्विजः ॥" १।१ ८
श्रुतिस्मृत्युदितं सम्यङ्निबद्धं स्वेषु कर्मसु ।
धर्ममूलं निषेवेत सदाचारमतन्द्रितः ॥" १।१५५

धर्म्माण्यपि लोकोद्वेजकानि कर्माणि त्याज्यानि, यथा मधुपर्के गोवधः, अरिसंहारार्थं श्येनयागः वेदप्रतिपादितत्वेन धर्म्यमपि स्वर्ग-निरोधकम् । यथा वा परिवेत्ता-परिविन्त्योः भूयोदारपरिवर्त्तनम् । सद्भि-राचरितान्यपि शास्त्रगर्हितानि कर्माणि तद्वदेव सर्वथा वर्जनीयानि । यथा हि पराशरस्य महर्षेः धीवरकन्यायाः सम्भोगः ।

"कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत् ।
अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचारेन्न तु ॥"

विषयेऽस्मिन् गौतमो यथार्थमाह—"दृष्टो धर्मव्यतिक्रमः साहसं च महताम् । अवरदौर्बल्यात् तेषां तपःप्रभावातिशयाद्धवस्तदुष्कृतानां निन्दा न कर्त्तव्या न वास्मादृशैस्तादृक्कर्मणि प्रवृत्तिर्विधेया । यतो ह्युक्तं "तेषां तजोविशेषेण प्रत्यवायो न विद्यते ।" यथा इन्धनसमिद्धे वह्नौ शीकरपतनेन तन्नश्यति, परं स्फुलिङ्गे पतन् न निर्वापयति । तथा तपो-विरहितानामस्मादृशां कृते तादृशानि कर्माणि घोरपतनीयहेतुभूतानि भवन्ति । एतदर्थं तदनुष्ठानं तेषां गर्हणञ्चासमीचीनमिति महाभारते-ऽप्युक्तम् । यथा—

"कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा ।
न चरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत् ॥"

आचारनिष्ठस्य प्रागदुष्कृतनिबन्धनदारिद्र्याल्पायुष्ट्वाप्रजत्वादीनि दौर्भाग्यानि नश्यन्ति । आचारदेव द्रविणं दीर्घमायुः—सुप्रजाश्च लभ्यन्ते आचारभ्रष्टो जनः सततं रोगैः पीड्यते, निन्दया विषीदति, दारिद्र्येण च क्लिश्नाति ।

"आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः,
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ।

दुराचारो हि पुरुषो लोके भवति निन्दितः।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च॥
सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति॥" (मनु-वशिष्ठौ)

असदाचरतो लोके केवलं न निन्द्यते, अपि तु तस्याधीतं दत्तं तपश्च मोघं भवति। यथा ह्यनधीयानस्य ब्राह्मणस्य यातनामयी गतिर्भवति तथैवाचारभ्रष्टस्य विदुषः। यथोक्तं वशिष्ठेन—

"आचारः परमो धर्मः सर्वेषामिति निश्चयः।
हीनाचारपरीतात्मा प्रेत्य चेह च नश्यति॥
नैनं तपांसि न ब्रह्म नाग्निहोत्रं न दक्षिणा।
हीनाचारमितो नष्टं तारयन्ति कथञ्चन॥
आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः।
छन्दांस्येनं मृत्युकाले त्यजन्ति नीडं शकुन्ता इव जातपक्षाः।
आचारहीनस्य तु ब्राह्मणस्य वेदाः षडङ्गास्त्वखिला सयज्ञाः।
कां प्रीतिमुत्पादयितुं समर्था अन्धस्य दारा इव दर्शनीयाः॥
नैनं छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्त्तमानम्।
द्वेऽप्यक्षरे सम्यगधीयमाने पुनाति तद्ब्रह्म यथा इषेन्दाः॥"

मनुनापि

"आचाराद्विच्युतो विप्रो न वेदफलमश्नुते।
आचारेण तु संयुक्तः सम्पूर्णफलभाग् भवेत्॥

अतः श्रुतिस्मृतिप्रतिपादितानि शिष्टैराचरितानि कर्माणि सर्वैराचरणीयानि। यस्तु शास्त्राण्यधीत्यापि नानुतिष्ठति कर्मणा ध्रुवं तस्यैव विदुषो ज्ञानं भारः क्रियां विना। स खलु चन्दनभारवाही रासभः। श्रुतमन्तरेणापि यः विधिना स्वकर्मनिष्ठो भवति स एव पूज्यो भवति। युक्तमुक्तमभियुक्तेन केनचित्—"शास्त्राण्यधीत्यापि भवन्ति मूर्खा।
यस्तु क्रियावान् पुरुषः स विद्वान्॥"

—०—

# हरिनामामृतम्

नाम नाटकम् (प्रथमो भागः)।

अध्यापक-स्वर्गत-अमियनाथ चक्रवर्त्ति एम्-ए, काव्यतीर्थेन विरचितम्

(पूर्वतोऽनुवृत्तम्)

## तृतीयं दृश्यम्

[ नवद्वीपधामनि नन्दनाचार्य्यस्य गृहसम्मुखे नर्त्तनपरो नित्यानन्दप्रभुरानन्देन पूर्ववद् गायति ]

(गानम्)

नित्यानन्दः। वद रे नदीयावासिन् केन दृष्टो महात्मा
व्रजपुरकीर्तिधारी प्रेमदाता जीवात्मा।
भागीरथीतटे जातः कृष्णो जीवप्रेमात्मा
वद रे वद रे भ्रातः कृष्णनाम-सेवात्मा॥

[ गीतं श्रुत्वा गृहाद् बहिरागत्य नन्दनाचार्य्यः अवाक् तिष्ठति। ]

नन्दनः। कस्त्वं प्रभो! ज्वलदर्च्चिःप्रोज्ज्वलश्चापि मधुरमनोहर-मुखो नवागन्तुकोऽपि चिरपरिचितप्रियजनप्रतिमो भावाप्लुतमन्थरशरीरोऽपि दिव्यप्रेमवितरणकातरदर्शनः कस्त्वम्? मन्ये—मदीयगृहे विग्रहं कृत्वा त्वामहर्निशं सेविष्ये। कृपया आगम्यतां देवेन।

नित्यानन्दः। (इमं लक्ष्यीकृत्य प्रीतिपूर्णविनयेन पुनर्गायति)

(गानम्)

पथि पथि परिगच्छन् प्रेमयाच्ञां करोमि
प्रियजन-सखिभावं दर्शयन् मां गृहाण।
भजननिरत बन्धो वङ्गदेशे सुभाग्ये
यदुपतिसुतजन्म प्राप्य धन्योऽसि भक्त॥

अरे अरे, नवद्वीपवासिन्! कथय कुत्रास्ति कलिजीवतारणः श्रीकृष्णः।

नन्दनः। सर्वं किल कृष्णमयम्। किन्तु नाहमधमो जानामि कुत्र कृष्णः स्वरूपतस्तिष्ठति। अज्ञानोऽहं केवलं कृष्णनाम स्मरामि।

नित्यानन्दः। दिवानिशं केवलं स्मर रे कृष्णनाम, वद च कृष्णस्य नाम। नास्ति भेदः कृष्णस्य कृष्णनाम्नश्च मध्ये। अरे! कृष्णसदृशं प्रेममयं कृष्णस्य नाम।

नन्दनः। हरे कृष्ण, हरे कृष्ण!

नित्यानन्दः। (गानम्)

वद बन्धो वद बन्धो कृष्ण कृष्ण हरे हरे!
हरिनामामृतं बन्धो सर्वदुःखहरं शुभम्॥

नन्दन-नित्यानन्दौ—(परस्परं करौ धृत्वा सावेगम्)

(गानम्)

हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे।
हरे राम हरे राम राम राम हरे हरे॥

नित्यानन्दः। कृष्ण, कृष्ण!!

(हस्तौ उत्तोल्य)

आलिङ्ग मां सखे प्रेम्णा
भक्तस्पर्शो मम प्रियः।
भक्तदासः सदा पश्य
सेविष्ये कृष्णसेवकम्॥

[ नन्दनः प्रीत्या उपागम्य गाढ़मालिङ्गति अश्रु विसृजति च। ]

नन्दनः। किमिदं मम सौभाग्यं, येन सञ्जीवनीसुधापरीतं सफलं मम शरीरं तवानेन आलिङ्गनेन। परमदेवता त्वमिति मम मनः कथयति।

नित्यानन्दः। केवलं कृष्णनामोन्मत्तोऽहं तवैव दासमात्रम्। श्रूयतां नवद्वीपवासिन् भक्तप्रवर! भक्तानुकम्पया स्वयं श्रीकृष्णो युष्माकं नवद्वीपधामनि प्रकटीभवेद्—

नन्दनः। हरे कृष्ण, हरे कृष्ण! तव मुखे पुष्प-चन्दनादिकं पततु। किन्तु त्वमपि असाधारणः कोऽपि महान् पुरुषः, भाग्याद् अत्रोपागतः। चरणप्रसादेन धन्यं कुरु मम कुटीरम्।

नित्यानन्दः। श्रीकृष्णदर्शनं विना न मुहूर्तमपि जीवितुं शक्नोमि।

नन्दनः। अग्रे प्रभो तिष्ठ मम गृहे, पश्चात् सर्वत्रानुसन्धानं कुर्मः।

नित्यानन्दः। उत्तमम्; न न कृष्णं विना किमपि कमपि वा जानामि।

नन्दनः। आगच्छ, सर्वक्षणं कृष्णनामकीर्तनं कुर्वो मम गृहे, यावन्नाममाहात्म्येन स एव श्रीकृष्णः स्वयं दर्शनं ददाति।

नन्दन-नित्यानन्दौ— ( गानम् )

हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे
हरे राम हरे राम राम राम हरे हरे॥

[ नन्दनाचार्यस्य गृहे निष्क्रान्तौ। प्रविशति भैरवानन्दो नाम शाक्तप्रवरः पण्डितश्च वक्केश्वरः। ]

वक्केश्वरः। अस्मिन्नेव नन्दनाचार्यगृहे कोलाहलाः श्रूयन्ते।

भैरवानन्दः। महान् अनर्थः सञ्जातः। महम्मदीय-शासका अस्माकं धर्मकर्मणां विघ्ननिवारणाय सम्यग् दृष्टिं न ददति। तेनैव केचित् कौपीनधारिणः केवलं "हरे कृष्ण हरे कृष्ण!!—"

वक्केश्वरः। "हरे कृष्ण हरे कृष्ण" इति बलीवर्दवत् चीत्कारं कुर्वन्तो नवद्वीपवासिनां कर्णान् विदारयन्ति।

भैरवानन्दः। आसने उपविश्य योगमाया-स्मरणमपि दुर्घटं जातम्।

वक्केश्वरः। ( नाट्येन दर्शयन् )

अद्य केवलं कूर्मासने आसीनः सन् नासिके अङ्गुलिभिः संरुध्य मूलाधारात् प्राणापानसमानव्यानोदान-वायून् सहस्रारं प्रति सञ्चालयामि स्म ... "हरे हरे"

"कृष्ण कृष्ण"—इति घोररावः कर्णच्छिद्रे बलात् प्रविश्य वायून् खलु एवमुत्तालान् चक्रे, येन मम जीवात्मा देह-पञ्जरं त्यक्तुमेव उपक्रान्तवान्।

भैरवानन्दः। नायमुपहासविषयः। क्रमेण क्रमेणैतेषां कौपीनधारिणां संख्याबाहुल्यं जायते। न साधारणजना एते वैष्णवाः।

वक्केश्वरः। यथार्थं यथार्थम्। ते खलु वैष्णवाः केवलं गुरुचरणामृतं पिबन्त एव जीवन्ति, वृक्षतलेष्वेव वसन्ति, हरिनामोच्चारणं कुर्वन्त एवाजस्रधारं रुदन्ति, बाह्यज्ञानशून्या एव यत्र कुत्रचित् पतितास्तिष्ठन्ति।

भैरवानन्दः। य एव एकवारं हरिनाम उच्चारयति, तस्यैव एषा दशा भवति। ममेयमाशङ्का जायते—यत् स्वल्पकालेनैव नवद्वीपस्थिताः सर्वे जना हरिनामप्रभावेण वैष्णवा भविष्यन्ति।

वक्केश्वरः। किं तर्हि इदानीं शास्त्रव्यवसायिनो राजन्यवर्गाश्च कुर्वन्ति ?

भैरवानन्दः। पण्डितसमाजः केवलं पाठादिकं चरति, विधर्मा राजन्य-वर्गः केवलं शुल्कादिव्यापारेषु मनोयोगं ददाति।

वक्केश्वरः। जानामि। नैयायिका घटपट-घटपटान् इति कच्-कचायन्ते ; यवनराजपुरुषा अध-ऊर्द्ध्वञ्च देहान् नमयन्त उत्तोलयन्तश्च मुखैर्विड्-विड़ायन्ते—

भैरवानन्दः। नवद्वीपवासिनां जनानां महती नाम दुरवस्था सञ्जाता।

वक्केश्वरः। सत्यं, सत्यं, कश्चिद् यवनो वैष्णवो भूत्वा वक्षसि मालास्थलीं वहन् उत्तानचक्षुरिदानीं केवल हरिहरिरिति वदति।

भैरवानन्दः। वक्केश्वर! हिन्दुसमाजस्य महाभयमुपस्थितम्। स खलु प्रतिभाप्रवीणो नवीनपण्डितो विश्वम्भरो निरन्तरं हरिनाम उच्चारयन्नेव उन्मत्तवत् सततं रोरुद्यते।

वक्केश्वरः। उन्मादपूर्णं जायते नवद्वीपस्थलम्।

भैरवानन्दः। किन्तु रूपे कुले विनये पाण्डित्ये विद्यायां भक्त्यां प्रीत्याञ्चातुलनीयपुरुषोऽयं जगन्नाथमिश्रतनयः।

भैरवानन्दः। पाषण्डाश्चाद्य राजपुरुषाः सर्वे।

[ प्रविशतः मद्यपानोन्मत्तो विशालदेहौ जगन्नाथ-माधवौ नाम नगरपालौ। ]

जगन्नाथः। माधव, माधव! अत्र तावद् द्वौ पाषण्डौ दृश्येते।

माधवः। ( वक्केश्वरं पृष्ठतो धृत्वा )
अरे गोपाल! किमत्र भवति?

वक्केश्वर। ( अपसृत्य ) न आवां पाषण्डौ भवावः।
अहं पण्डितो वक्केश्वरो नाम।

जगन्नाथः। ( भैरवानन्दं दर्शयन् ) अयम्?

वक्केश्वरः। ( भैरवानन्दस्य पदधूलिं गृह्णन् )

अयं परमः शाक्तधुरन्धरो भैरवानन्दाचार्यपादः।

जगन्नाथः। भव रे शाक्तः, भव वा वैष्णवः, किं तेन? आवयोर्नगर-पालयोः सम्मुखे वलिप्रेरिताश्छागा इव सर्वे मानवाः।

माधवः। युष्माकं शिखाः प्रति, जटाः प्रति, रुद्राक्ष-नामावली-नयनाश्रु-कातरनादांश्च प्रति नास्ति भोः आवयोः कापि भक्तिः। चर्म्मकाराणां कुक्कुरो जानीथः?

भैरवानन्दः। ( कर्णौ स्पृष्ट्वा ) दुर्गा दुर्गा!!

वक्केश्वरः। शिवः शम्भुः, शिवः शम्भुः!!

जगन्नाथः। युष्माकं शाक्तवर्य्याणां कृपया अस्माकं मद्याभावः सञ्जातः। महान्तो यूयं राज्यशत्रवः।

भैरवानन्दः। न वयं राज्यशत्रवः, परन्तु आवामेव राज्यस्य परममित्रे।

माधवः। परममित्रे! कथम्?

भैरवानन्दः। सततं क्रियाकलापै राज्यमङ्गलानि वयं सम्पादयामः।

वक्केश्वरः। किन्तु केचन वैष्णवाः केवलं 'हरे कृष्ण हरे कृष्ण इति उच्चग्रामं कोलाहलैः संघोष्य समाजनियमभङ्गं कुर्वन्ति। महान्तौ युवां नगरपालौ शासनव्यवस्थां कुरुतम्।

जगन्नाथः। श्रुतम् आवाभ्यां यद् विश्वम्भरपण्डितः कीर्तनदलानि सृजति, अहर्निशं कोलाहलैर्नागरिकाणां धर्मविघ्नान् उत्पादयति च।

वक्केश्वरः। वैष्णवाः पुनः शिरांसि मुण्डयन्ति, परिधानवस्त्रेषु कच्छं न व्यवहरन्ति; गात्रेषु तिलकचित्राणि कुर्वन्ति; एवं हिन्दुसमाजगर्हितानि सततम् आचरन्ति।

माधवः। (उच्चैः) अलमेतावद्भिः। आवां जगन्नाथमाधवौ यत्र नगरपालौ वर्तावहे, का तत्र विघ्नाशङ्का? एकमेकं वैष्णवं करैरेव धृत्वा बलेन मद्यमध्ये निमज्जितञ्च कृत्वा शाक्तं करिष्यामि।

जगन्नाथः। हाः हाः हाः—यथार्थम् आत्थ रे माधव! कस्तिष्ठति नवद्वीपे जगन्नाथ-माधवयोः सम्मुखे? किन्तु आचार्यपाद! पश्यतु येन आवयोर्मद्याभावो युष्माकं वीराचारकर्मभिः कथमपि न सम्पद्यते। हाः हाः हाः—

[ परस्परं हस्तं धृत्वा उभौ निष्क्रान्तौ ]

वक्केश्वरः। हेः हेः हेः हेः—यवनः काजी राजा, एतौ पाषण्डौ यमदूतौ पालकौ—

भैरवानन्दः। पापपरायणा वैष्णवाः, उदासीना ब्राह्मणपण्डिताः—हा हतोऽस्माकं नवद्वीपो वक्केश्वर-पण्डित!

॥ दृश्यावसानम् ॥

—क्रमशः

# बृहदारण्यकोपनिषन्मितभाष्यम् ।

श्रीचारुकृष्णदर्शनाचार्य्यः

( पूर्वतोऽनुवृत्ता )

श्रुतिः—तदग्निनैव देवेषु ब्रह्माभवद् ब्राह्मणो मनुष्येषु, क्षत्रियेण क्षत्रियो, वैश्येन वैश्यः, शूद्रेण शूद्रः, तस्मादग्निनैव देवेषु लोकमिच्छन्ते, ब्राह्मणे मनुष्येषु, एताभ्यां हि रूपाभ्यां ब्रह्माभवत् । अथ यो ह वा अस्माल्लोकात् स्वं लोकमदृष्टा प्रैति, स हि एनमविदितो न भुनक्ति यथा वेदो वा अनुक्तोऽन्यद्वा कर्म्माकृतं यदि ह वा अप्यनेवं वित् महत् पुण्यं कर्म्म करोति । तद्धास्यान्ततः क्षीयत एव । आत्मानमेव लोकमुपासीत । स य आत्मानमेव लोकमुपास्ते न हास्यकर्म्म क्षीयते, अस्माद्ध्यात्मनो यद् यत् कामयते तत्तत् सृजते ॥१५

मितभाष्यम्—ब्रह्मसत् ब्राह्मणः सन् अभवत् आविर्बभूव । तथा तत् सृष्टिकर्त्तृ ब्रह्म मनुष्येषु मध्ये अभिवत् साक्षाद् ब्राह्मणो ब्राह्मणजातिः सन् अभवत् आविर्बभूव इत्यर्थः । इन्द्रादिषु तु देवतारूपेण स्थितेषु पश्चात् विकृतेन क्षत्रियादिरूपेणाधिष्ठितः सन् क्षत्रियादिरभवत्, तथा मनुष्येषु मनुष्यजातिरूपेण स्थितेषु पश्चात् विकृतेन क्षत्रियादिरूपेणाधिष्ठितः सन् क्षत्रियादिरभवदित्यर्थः । किन्तु देवेषु साक्षादेनाग्निरभवत्, मनुष्येषु च साक्षादेव ब्राह्मणोऽभवदिति विशेषः ।

तस्मादिति, यस्माद् देवेष्वग्नौ मनुष्येषु च ब्राह्मणेषु ब्रह्मणः साक्षादेवाविर्भावस्तस्मादित्यर्थः । देवेषु अग्नावेव हुत्वा लोकम् आत्मानमिच्छन्ति यजमाना द्रष्टुमिति शेषः, व्यतिरेके "स्वं लोकमदृष्टा" इत्युक्तेः । मनुष्येषु मध्ये ब्राह्मणे इति एव लोकमिच्छन्ते इत्यनुषङ्गः ब्राह्मण एव दत्त्वा लोकमात्मानं द्रष्टुमिच्छन्ति मुमुक्षव इत्यर्थः । द्रष्टुमिच्छन्ति आत्मानं पश्यन्ति च, इच्छासाधनस्यैव तद्विषयस्यापि साधनत्वात् अश्वेन जिगमिषति अश्वेन गच्छतीतिवत् । वस्तुतस्तु यज्ञादेर्ज्ञानसाधनत्वं विस्पष्ट-

मुक्तं श्रुत्यैव 'यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवती"ति विस्तरेण वक्ष्यते चोपरिष्टात्।

अत्र लोकपदमात्मपरमेव पथ्यं न कर्म्मफलपरं नहि कर्म्मभिः, पुत्र-वित्तस्वर्गादिप्राप्तावग्नेर्ब्रह्मत्वज्ञानमपेक्ष्यते कर्म्मिणां तथाचाराभावात् प्रयोजनाभावाच्च, कर्म्मतन्त्रे परमात्मासिद्धेश्च। एतेन "तस्मात् तस्मिन्नग्नौ कर्म्म कृत्वा तत्फलं प्रार्थयन्ते" इत्यपास्तम्। लोकपदमात्मपरं च प्रसिद्धं श्रुतौ, "आत्मानमेव लोकमुपासीत" स य आत्मानमेव लोकमुपास्ते" रोगनाशादेरपि राज्यापत्यवित्त-कर्म्मफलत्वात् तेषां लोकत्वाभावात्। "स उ लोक एव" इति।

एवञ्चाग्ने ब्रह्मत्वज्ञानादेवाग्नौ हूयते ब्राह्मणस्य च ब्रह्मत्वज्ञानादेव ब्राह्मणे दीयते मुमुक्षुभिरित्यग्निब्राह्मणयो-र्ब्रह्मत्वज्ञानादेव होमात् दानाच्च प्राप्नोति फलं ब्रह्मदर्शनमिति प्राप्तम्। तस्माज्ज्ञानसमुच्चितेनैव कर्म्मणा ब्रह्मणो दर्शनाद् भवति मोक्षः संसारादिति स्थितम्। तथाच श्रुतिः "यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छ"तीति। व्यतिरेके "स एनमविदितो न भुनक्ती"त्युक्तेः। भुनक्ति रक्षति संसारादिति शेषः। निगमनमाह— एताभ्यामिति एताभ्यामग्निब्राह्मणाभ्यामेव ब्रह्माभवत् आविर्बभूवेत्यर्थः। हिरवधारणे। न चात्र अविद्याधिकारे कर्म्माधिकारार्थं वर्णविभाग उक्तः प्रकरणेऽस्मिन् वर्णाश्रमधर्म्मानभिधानात्, किन्तु पूर्व्वोक्त-ज्ञानसमुच्चितेन कर्म्मणाऽग्निहोत्रादिनात्मज्ञानद्वारा मोक्षार्थमेव अतो व्यतिरेके स्वं लोकम-दृष्ट्वा प्रैतीत्युक्तम्। न चात्र केवलेन धर्म्माख्येन कर्म्मणात्मलोकप्राप्तिरुक्ता किन्तु अग्निब्राह्मणयोर्ब्रह्मत्वज्ञानसमुच्चितेनैव, अतः केवलकर्म्माश्रयेण पूर्व्वपक्षकल्पनं कल्पनमेव न साम्प्रतम्।

अनेवंविदिति एवमुक्तप्रकारेण ब्रह्मणः साक्षादग्निरूपेण ब्राह्मण-रूपेण च भवनमजानन्नित्यर्थः। न तु स्वं लोकं यथोक्तविधिनाऽविद्वा-निति, यथोक्तविधेरन्वयव्यतिरेकादेरनुपस्थितेस्थितेश्च ब्रह्मणः साक्षादग्नि-ब्राह्मणरूपेण भवनस्य। महदपि पुण्यं कर्म्माश्विमेधादि करोति

तत् कर्म्म तज्जन्यमदृष्टम् अन्ततः फलभोगावसान क्षीयत एव। अत्रा-नेवमित्येवंपदेन पूर्व्वोक्तो ब्रह्मणोऽग्निब्राह्मणरूपेण भवनप्रकार एवोक्त उपस्थितेः। अतोऽनेवंविदिति तादृशप्रकारमविद्वानित्येवार्थः। एवञ्च अनेवंवित्कृतकर्म्मणः क्षयिष्णुत्वोक्तेरेवंवित्कृतकर्म्मणः एवात्मज्ञानद्वारा मोक्षप्रदत्वादक्षयत्वमर्थादेव प्राप्तम्। तदस्येतीदं पदेन च पूर्व्वोक्तमनेवंविदं परामृश्य तत्कृतकर्म्मण एव क्षयिष्णुत्वं बोधितं नत्वेवंवित्कृतकर्म्मण इति च प्राप्तम्, तादृशेन कर्म्मणा ब्रह्मण एवोपासनात्, एतदेव प्रपञ्च-यिष्यति "अथो अयं वा आत्मा सर्व्वेषां भूतानां लोक इत्यादिग्रन्थेन उपसंहरति आत्मानमेव लोकमुपासीतेति। यतोऽनेवंवित्कृतकर्म्मणां क्षयिष्णुत्वमतः प्रक्रान्तेन एवंविदासता तत्तत्कर्म्मभिरात्मोपासनमेव कार्य्यमित्यर्थः। अतो अग्निब्राह्मणयो-र्ब्रह्मत्वं जानन् एतत्कर्म्मभि-र्ज्योतिष्टोमादिभिरात्मानमेव लोकं दीप्तिशीलं परमेश्वरमुपासीताक्षय मोक्षफलप्राप्तये इति शेषः। न तु इन्द्रादीन् ब्रह्मणो विभूतिभूतान् जीवविशेषान् तत्तदेवतारूपेणात्मन एवोपास्यत्वादिति फलितम्।

"भोक्तारं यज्ञतपसां सर्व्वलोकमहेश्वरम्।
अहं हि सर्व्वयज्ञानां भोक्ता च प्रभुरेव च॥"

इति भगवदुक्तेः,—

"कव्यं यः पितृरूपधृक् विधिहुतं हव्यं च भुक्ते प्रभुः।
देवत्वे भगवाननादिनिधनः स्वाहास्वधासंज्ञितम्॥"

इति विष्णुपुराणाच्च। ईदृशस्य कर्म्मणः फलमाह स य इति, स पूर्वोक्त एवम्विद् यो जनः उक्तप्रकारेणात्मानं लोकमेवोपास्ते न तु देवादीन् अस्यो-पासितुः कर्म्म नैव क्षीयते, हेति निश्चये, अक्षयमोक्षप्रदत्वात्। कर्म्मात्र यज्ञदानाद्येवं न तूपासनरूपं ध्यानं यज्ञादेरेव प्रकरणात् विचार्य्यत्वाद् प्रकरणाच्च ध्यानादेः।

— क्रमशः

२६३। परानुभ्यां कृञस्तद्वत्।

पराकरोति अनुकरोति ॥

२६४। क्षिपोऽभिप्रत्यतः परात्।

अभिक्षिपति। एवं प्रति अति ॥

२६५। प्राद्वहः।

प्रवहति। परितो भट्टमल्ल आह परिवहन्ति ॥

२६६। परेर्मृषः ॥ परिमृष्यति।

२६७। व्याङ्परिभ्यो रमः ॥

विरमति। एवम् आ परि।

२६८। उपात् ॥

विष्णुदत्तमुपरमति। उपरमयतीत्यर्थः।

२६९। विभाषा चेदकर्म्मकः ॥

---

२६३। परा। उभयपदित्वात् कर्त्तृगामिक्रियाफलाद्यावात्मपदप्राप्ते-स्तन्निषेधार्थं शेषसूत्रादिकं सेवादावर्थेऽपि च ॥

२६४। क्षिप। दिवादिरयं परस्मैपद्येव तुदादेस्तु स्वरितेत्वात् प्राप्त-मात्मनेपदं प्रतिषिध्यते इति जुमरटीका ॥

२६५। प्रात्। स्वरितेत्वात् कर्त्तृगामिक्रियाफले प्राप्ते ॥

२६६। परेः। स्वरितेत्वात् कर्त्तृगामिक्रियाफले प्राप्ते ॥

२६७। व्याङ्। अनुदात्तेत्वात् प्राप्ते ॥

२६८। उपात्। उपपूर्व्वरमिर्विनाशे वर्त्तते यथा उपरतानि धनानि। निवर्त्तने च यथा अध्ययनादुपरतः। उभयथाप्यकर्म्मकत्वम्। तस्माद्विभाषा चेदकर्म्मक इति विशेषणबलादेव विप्रमुपरमतीत्यादौ तु प्रत्युदाहरणे उपसंप्राप्ति पूर्व्विकायां रतौ रमिर्वर्त्तते इत्यवगन्तव्यमिति सर्व्वसम्मतं तस्मात् संप्राप्ति-पूर्व्वत्वात् सकर्म्मकत्वम्। अतएवान्तर्भूत-ण्यर्थं स्वीकृत्याह विष्णुदत्तमुपरमति उपरमयतीत्यर्थः। उपसंप्राप्तिपूर्व्वकं क्रीड़तीत्यर्थः ॥

६३

उपरमति उपरमते। निवर्त्तते इत्यर्थः।

२७०। बुधेर्युधेर्नशिजनोः प्रुद्रुस्रुणामिङोऽपि णेः।

बोधयतीत्यादि। इङ् अध्यापयति॥

२७१। कम्पाहारार्थणेस्तद्वत्।

वृक्षं कम्पयति। अन्नं भोजयति॥

२७२। अणौ ये स्युरकर्म्मकाः।

सचित्तकर्त्तृकाश्चैव तेषां णेः सूत्रयुग्मके।

आस्ते शेते च कृष्णः। आसयति शाययति च कृष्णं माता। अचित्तकर्त्तृकत्वे तु—नश्यति संसारः। नाशयते संसारं हरिः॥

२७३। अत्ति-पिबति-दम्यादीन् विनैव स्यान्निषेधिता।

आदयते पाययते दमयते मनो वैष्णवः। आदिना आयासयते, आयामयते, परिमोहयते, रोचयते, नर्त्तयते, वादयते। वस निवासे

---

२६६। विभाषा। पूर्व्वसूत्रेणैवास्याथकथनं द्रष्टव्यम्॥

२७०। बुधे। बुधादयोऽण्यन्ता एवोपात्ता एषां साहचर्य्यात् सर्व्वेऽण्यन्ता एव ग्राह्याः। अणाविति वक्ष्यमाणात्॥

२७१। कम्पा। चलनार्थभोजनार्थयोर्णेरुत्तरे तद्वत् आत्मपदं न भवतीत्यर्थः॥

२७२। अणौ। बुधादयोऽणिङन्ता एवोपात्ता एषां साहचर्य्याच्चेतनकर्तृत्वे अकर्म्मकाश्चाणिङन्ता एव ग्राह्या इति भाष्यादिमतं सूत्रेणोपनिबद्धम्। सूत्रयुग्मके सूत्रद्वये। कम्पाहारार्थ इति अणौ ये स्युरिति च सूत्रद्वये॥

२७३। अत्ति। अत्तेराहारार्थत्वात्। पिबतेरपि तथार्थात् दमधातोरादिपदे नायासादीनां ग्रहणं केषाञ्चित् चेतनकर्त्तृत्वे अकर्म्मकत्वात् केषाञ्चित् आहाराद्यर्थत्वादात्मपदाप्राप्ते प्रतिप्रसवसूत्रमिदम्। आयासायामपरिमोहारुचनृत्वदवसवेटाः दम्यादिपदग्राह्याः। कर्त्तृगामिक्रियाफले आत्मपदविधानात् अकर्त्तृगामिक्रियाफले प्रत्युदाहरणम्। विभानादयति सूपकार इति यद्यपि फलाकाङ्क्षया विना कर्त्तुं प्रवृत्यसम्भवस्तथापि यत् कर्त्तृगामीति कृतं तत्

वासयते, घापयते। अकर्त्तृगामिफले विप्रानादयति सूपकारः ॥

इति श्रीहरिनामामृताख्ये वैष्णवव्याकरणे विष्णुभक्त्यर्थंप्रकरणं चतुर्थं कारकं समाप्तम् ॥४

॥ —:०:— ॥

---

ज्ञापयति। फलपदे नात्र प्रधानफलमभिधीयते यथा यागक्रियायाः फलं यजमानस्य स्वर्गप्राप्तिः पाकक्रियायाः फलं भुक्त्वा तृप्तिरिति। दक्षिणा-वेतनादिकन्तु न प्रधानं फलम्। अतः क्वचित् कर्त्तृगामिफलं क्वचिन्नेति। अतएवाकर्त्तृगामिव्यावृत्त्यर्थं कर्त्तृगामीति विशेषणं सार्थकम् ॥

इति श्रीहरिनामामृताख्यवैष्णवव्याकरणविष्णुभक्त्यर्थप्रकरणटीकायां श्रीलहरेकृष्णाचार्य्य-विरचितायां वेदान्तभूषण श्रीमद् गोपीचरणदासाख्यपरिशोधितायां बालतोषणीनाम्न्यां चतुर्थी कारकपादटीका समाप्ता। लिप्सायाम्वा एक एतत्प्रभृतेः कारकस्य तु। लक्षणस्य कृता व्याख्या—श्रीजगन्नाथशर्म्मणा ॥४॥

अस्मिन् प्रकरणे सर्व्वाण्येव सूत्राणि अनुष्टुप्छन्दोनिबन्धानि, तानि च खण्डशः प्रयुक्तानि ; मिलितानि सन्ति श्लोका भवन्ति ॥

॥ —:०:— ॥

# अथ कृदन्तप्रकरणम् ।

श्रीश्रीराधाकृष्णाभ्यां नमः ।

१ । धातुं सर्वमुपादाय सर्व्वं रूपं करोति यः ।
कृत् स एवेति विस्मित्य तद्धर्म्मा कृत् प्रशस्यते ॥

---

## अथ कृदन्तप्रकरणम् ।

श्रीश्रीराधाकृष्णाभ्यां नमः ।

श्रीकृष्ण कृष्णचैतन्य ससनातनरूपक ।
गोपाल रघुनाथाप्त व्रजवल्लभ पाहि माम् ।

१ । धातुम् । नाम्न उत्तरे तद्धितप्रत्यया विधेया नाम्नस्तु कृत्प्रत्यय-सिद्धत्वमेव स्वरूपमतः कृत्प्रकरणमारभमाणः कृतो विष्णुधर्म्मत्वं प्रतिपद्य तत् कथनस्य शुभादृष्टजनकतां भङ्ग्या सूचयन् कृत्प्रत्ययस्य कथ्यमानत्वमाह धातु-मिति । यः कोऽप्यनिर्वचनीयः पुरुषः सर्व्वं धातुं पृथिव्यप् तेजोवाय्वाकाश-रूपम् उपादाय गृहीत्वा सर्व्वं रूपं स्थावरजङ्गमात्मकं करोति उत्पादयति, स एव कृत् कर्त्ता इति विस्मित्य आश्चर्य्यं कृत्वा तद्धर्म्मा तदेव सर्व्वधातुग्रहण-पूर्व्वकसर्व्वरूपकरणमेव धर्म्मः यस्य स कृत् प्रशस्यते प्रकर्षेण संकीर्त्यते । एव-म्भूतो महाविष्णुरेव भवति । अथच यः कोऽपि प्रत्ययः सर्व्वं धातुं शब्द-योनिरूपं भुवादिदशगणपठितं सनाद्यन्तञ्च उपादाय सर्व्वं रूपं नामात्मकम् । करोति सोऽपि कृत् एवम्भूतः कृत्प्रत्ययो भवति, इति विस्मित्य विस्मयं लब्ध्वा तद्धर्म्मा तत्तस्य विष्णोर्धर्म्म इव धर्म्मः यस्य सविष्णुधर्म्मा कृत् कृत्प्रत्ययः प्रशस्यते प्रकर्षेण कथ्यते इति । विष्णुर्धातुमुपादाय सर्व्वं रूपं करोति कृत्-प्रत्ययोऽपि तमुपादातत् य करोतीति कृतो विष्णुधर्म्मत्वम् । श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः । इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः इति नानार्थवर्गः । रसरक्तादीत्यत्रादिपदेन त्वगसृङ्- मांसमेदोऽस्थि-मज्जा-शुक्रानि धातव इत्यन्योक्तं गृहीतम् । तद्गुणा महाभूतक्षित्यादीनां गुणास्ते हि शब्दस्पर्शरूपरसगन्धाः ॥

२। धातोः कृद् बहुलं कर्त्तरि।

धातोरुत्तरेव कृत्प्रत्ययो बहुलं स्यात्। स च कर्त्तरीत्यधिक्रियते। वासुदेवोऽयम्॥

३। वर्त्तमानादौ शतृशानावच्युताभौ फलान्तरप्रयोगे परपदात्मपदयोः॥

शादित्यन्ये। शृशावितौ। शबादिः। ततश्च भवत् इति स्थिते नामसंज्ञायां प्रत्ययेषु विष्णुभक्तिमात्रवर्जनात् कृत्तद्धितयोरपि नामत्वं सिद्धम्। ततश्च "प्रकृति-प्रत्ययौ प्रत्ययार्थं सह ब्रूतः" इति न्यायेन धात्वंशस्यापि तदन्तर्भूतत्वात् तेन मिलित्वा नामत्वं सिद्धम्। ततो वैष्णवो भवन् विराजते, वैष्णवौ भवन्तौ विराजेते, वैष्णवा भवन्तो विराजन्ते। एवं मालां

---

२। धातोः। धातोरिति पञ्चम्यन्तम्। बहुलमिति क्रियाविशेषणम्। स चेति स च कृत्प्रत्ययः कर्त्तरि वाच्ये भवति। इतीति एतत् सूत्रमित्यर्थः। इत्यधिक्रियते इति अधिकारसूत्रमेतदित्यर्थः॥

३। वर्त्त। वर्त्तमानादौ काले धातोरुत्तरे फलान्तरप्रयोगे सति कर्त्तरि वाच्ये परपदात्मपदयोर्विषये शतृ-शानौ बहुलं भवतः, तौ अच्युताभौ अच्युताभसंज्ञौ। फलान्तरेति फलान्तरस्य वाक्यसमापकत्वेन प्रयोगे सतीत्यर्थः। परपदात्मपदयोरिति षष्ठी द्विवचनान्तं शतृप्रत्ययः परपदस्य विषये भवति, शानप्रत्यय आत्मपदस्य विषये भवतीत्यर्थः। ततश्च शतृप्रत्ययः परपदीतां शानप्रत्यय आत्मपदीनामिति शबादीति शिवत्वात् कृष्णधातुकम्। ततश्च शप् कृष्णधातुक इति शप्ननु मात्रालाघवमात्रेण पुत्रोत्सववस्मरणात् अतृ आनावच्युताभाविति कृते अच्युताभत्वेन कृष्णधातुत्वात् शपादि सिध्येत् अतो भवन् गच्छन्नित्याद्यपि सिध्येत्तर्हि शतृशानौ कथामिति चेत्तदैवं समाधेयम्। भवन्नित्यादौ सिद्धेऽपि जुहोत्यादिगणे इयृच्छन्नित्यत्रादादित्वेन। शपोऽभावात् नारायणस्य स्थाने अर्त्तें ऋच्छ इत्यनेनन ऋच्छादेशो न स्यादतः शतृशानाविति अच्युताभाविति पदं वर्त्तमाने भुरिप्रयोगार्थम्। न मेति प्रत्ययेष्विति प्रत्ययानां मध्ये इत्यर्थः, ततश्च कृत्तद्धितयोर्नामत्वात्। प्रकृतीत्यादि न्यायेन प्रत्ययार्थस्यैव प्राधान्यं

कुर्वन् विराजते कुर्वाणः। श्रीकृष्णं भजताजितम्। श्रीकृष्णं भजतः शिवम्। सम्बोधने च—हे कुर्वन्। पा पाने पिबन्। भौवादिकस्यैव पिबादेशो घ्रादीनां साहचर्य्यात्। पा रक्षणे पान् पान्तौ। फलान्तरेत्यादि किम् ? वैष्णवः करोति। अकर्म्मकात्तदत्र योगेऽपि क्वचित्।

सन् विद्यमानो घटमानोऽसौ॥

४। अतो मुगाने॥

पचमानं वैष्णवं पश्य॥

---

भवति ; अतो धात्वंशस्या भूव इत्यस्यापि तदन्तभूतत्वात् तेन धात्वंशेन मिलित्वा नामत्वं सिद्धमिति कृत्प्रत्ययस्येति शेषः। कुर्वन्निति डु कृञ् करणे तनादेः शपोऽपवाद उरिति उः। गोविन्दः करोत्यरामस्य उर्निगुणे इति अरामस्य उः, उद्वयं वः। ततः कुर्वच्छब्दात् सु चतुर्भुजानुबन्धत्वान्नम् सोर्हरः सत्सङ्गान्तहरः। श्रीकृष्णमिति भजता जनेन जितमत्र सर्व्वमिति कर्म्मोह्यं तत्त्वनुक्तं समापकजितस्य भावे विहितत्वात् श्रीकृष्णं भजतः शिवमिति भजतो जनस्य शिवं मङ्गलम्। अत्र क्रियान्तरमध्याहार्य्यम्। सम्बोधने इति उदाहरणं दर्श्यते इति शेषः। पिबन्निति पः पिब इत्यादिना पिबादेशः कथं न भवतीति चेत्तत्राय भौवादिकस्यैव पिबादेश इति हेतुमाह घ्रादीनां साहचर्य्यादिति। वैष्णवः करोतीत्यत्र फलान्तरप्रयोगाभावः। अकर्म्मकादिति अकर्म्मकाद्धातोरुत्तरे तस्य फलान्तरस्य अप्रयोगेऽपि क्वचित् शतृशानौ भवतः ; बहुलमित्यु पादानादिति शेषः। सन्निति असभुवि श्नमस्तोररामहरो निगुणे इत्यनेन अरामहरः। विद्यमान इति विद् सत्तायां दिवादिरात्मपदी अतो मुगने इति मुक् अतो मुगान इति सूत्रमतिनिकट एव वक्ष्यते, अतः असिद्धरूपं त्याज्यमिति प्रतिज्ञायां न विरोधः। घटमान इति घट चेष्टायां भुवादिरात्मा॥

४। अतो। आने परे अतः उत्तरे मुग् भवति। ऊकारवितौ। पच्यमानमिति डु पचष् पाके भुवादिरुभयपदी। कर्त्तरि। मुगिति शेषः।

५। मायुक्ताच्छतृ-शानावाक्रोशे ।

मा पचन्नवैष्णवो विष्णोर्नैवेद्यं, मा पचत्वित्यर्थः ॥

६। क्रियायाश्चिह्ने हेतौ च शतृशानौ ।

तिष्ठन् हरिं स्तौति, हरिं भजन् मोदते ॥

७। आत्मपदस्थानीयत्वाद् बाहुल्याच्च शान-कानौ भावकर्म्मणोश्च, भावकृद्ब्रह्मणि, उपेन्द्रात् कृन्नस्य सर्व्वेश्वरात् परस्य णत्वं, भा-भू-पुना-कमि-गमि प्यायि-वेप वर्ज्जम् ॥

---

अपि शाकं पचानस्येति कुमरादिमतम् । अस्मन्मते कृद्बहुलत्वादद्रष्टव्यमिति ॥

५। मायुक्ता । आक्रोशे गम्यमाने फलान्तराप्रयोगेऽपि मायुक्ताद्धातोरुत्तरे शतृ शानौ भवतः । नैवेद्यमन्नादि ॥

६। क्रिया । धात्वर्थ भिन्नायाः क्रियायाश्चिह्ने हेतौ च सति धातोरुत्तरे शतृ-शानौ भवतः । यस्य धातोरर्थाश्चिह्नं, हेतुश्च तस्माद्धातोरुत्तरे शतृ-शानौ भवत इत्यर्थः । चिह्नं ज्ञापकं हेतुर्जनकः । तिष्ठन् हरिं स्तौतीति । अत्र स्थितिः स्तुतिक्रियायाश्चिह्नं अतः स्थाधातोः शतृप्रत्ययः । तिष्ठन्निति पः पिब इत्यादिना स्थस्तिष्ठः । हरिं भजन् मोदत इत्यत्र भजनं मोदक्रियाया हेतुरिति भजधातोः शतृप्रत्ययः । क्रियाया इति किं । यः पठति स विष्णुदत्तः । अत्र पठनं विष्णुदत्तस्य ज्ञापनं, न तु क्रियायाः । चिह्ने हेतौ चेति किम् । पचति च पठति च ॥

७। आत्म । शानकानौ भावकर्म्मणोश्च भवतः । हेतुमाह आत्मेति । शानकानयोरात्मपदस्थानीयत्वेऽपि प्रथमपुरुषैकवचनाभावाद्भाववाच्ये न सम्भवतीति अपरितुष्य हेत्वन्तरमप्याह बाहुल्याच्चेति । कानो वक्ष्यते । शान-कानौ आत्मपदस्थाने भवत इति तयोरात्मपदस्थानीयत्वम् । भावकृद्ब्रह्मणि वर्त्तते । उपेन्द्रादुत्तरस्य कृत्प्रत्ययसम्बन्धिनो नस्य सर्व्वेश्वरपरभूतस्य णत्वं भवति । भा दीप्तौ भू सत्तायां पूञ् पवने कम कान्तौ गमॢ गतौ ओ प्यायि वृद्धौ टु वेपृ चलने इत्येतान् वर्जयित्वा उपेन्द्रादुत्तरस्य सर्व्वेश्वरपरभूतस्य कृन्नस्य णत्वं वा भवति ॥

८। णेर्वा ख्यातेश्च, नरामोद्भावादीश्वरादेरेव, विष्णुजनादेरीश्वरोद्भवाद्वा।

वैष्णवेन प्रगीयमाणं वर्त्तते। वैष्णवेन प्रगीयमाणो हरिः प्रीणाति। भादिनिषेधः किम्? प्रभायमानम्॥

९। ण्यन्ते च न।

प्रभाप्यमानम्। पुनेति श्नानिर्देशः। ततः पूञ् प्रपूयमानम्। पूङ्स्तु णत्वमेव प्रपवमाणम्। णेस्तु प्रगाप्यमाणम्। प्रगाप्यमानो वा। एवं ख्या-नरामेति प्रेङ्ख्यमाणमित्यत्रैव णत्वं नतु प्रकम्प्यमानमित्यत्र।

---

८। णेर्वा। ख्या प्रकथन इत्यस्माद्विहितस्य कृन्नस्य णत्वं वा भवति उपेन्द्राद्धुरस्येत्यादि सर्व्वत्र योज्यमेव। नरामोद्भवाद्विहितस्य कृन्नस्य णत्वं भवत् ईश्वरादेरेव नरामोद्भवाद्भवति नान्यस्मादिति। विष्णुजनादेरीश्वरोद्भवाद्विहितस्य कृन्नस्य णत्वं वा भवति। प्रगीयमाणमिति गै शब्दे भावे शानः; दामो-दर-मा-स्था, पिबतेत्यादिना आरामस्य ईरामः। भावकृतो ब्रह्मत्वं णत्वम्। प्रगीयमाण इति कर्म्मणि शानः। सर्व्वेश्वरात् परस्येति किं प्रभग्नः। प्रभग्न इति भन्जो आमर्द्दने क्तः ओरामेत्वात् विष्णुनिष्ठा तस्य नः। अतिरामेतामित्यादिना नरामहरः विष्णु निष्ठादेः शस्य स्थानिवद्भावात् चवर्गस्य कवर्गः। प्रभायमानमिति भावे शानः॥

९। ण्यन्ते। ण्यन्ते च भादौ णत्वं न भवति। प्रभाप्यमानमिति अर्त्तिह्रीब्लीक्नुरीक्ष्माय्यारामेभ्यः पुक् यलोपो गोविन्दश्च णौ दरिद्रीं विनेति पुक्। पुनेति श्नानिर्द्देश इति तस्मात् क्र्यादेरेव णत्वं न भवति। पुङ्स्त्विति पुङ् पवन इत्यस्य भ्वादेस्त्विरयर्थः। प्रपवमाणमिति कर्त्तरि शानः। णेर्व्वेत्यस्य उदाहरणं दर्शयति णेस्त्विति। एवं ख्येति। तदुदाहरणं यथा प्रख्याप्यमाणः प्रख्याप्यमानो वेति। नरामेतीति। नरामो कृवादीश्वरादेरेवेत्यस्योल्लेखः। प्रेङ्ख्यमानमिति इखि गतौ ईश्वरादित्वादत्र णत्वम्। प्रकम्प्यमानमिति कपि चलने ईश्वरादित्वाभावादत्र न णत्वम्।

(४०८) दर्पणे मुकुरादर्शौ (४०९) व्यजनं तालवृन्तकम् ॥

इति मनुष्यवर्गः ।

## ब्रह्मवर्गः

(१) सन्ततिर्गोत्रजननकुलान्यभिजनाऽन्वयौ ।

---

पीति। द्वयं पटवासचूर्णे गन्धद्रव्ये "आबीर इति ख्याते ।।४०७

देति। त्रयं दर्पणे, साहचर्याद्दर्पणः पुंसि। मुखं राति मुकुरः पृषोदरादिः ।।४०८

व्येति। त्रयं व्यजनसामान्ये। व्यजन्ति वायुना योजयन्ति अनेन करणे ल्युट्। तालवृन्तविकारत्वात् तालवृन्तं स्वार्थे कः। किंवा तालस्य वृन्तः घटधारेव शैत्यजनकत्वात् तालवृन्तम् इवार्थे के तालवृन्तकम्। "वृन्तं प्रसवबन्धे स्याद् घटधाराकुचाग्रयो"रिति विश्वः। अन्यत्रापि व्यजनमुपचारात्। मनुष्यप्रधानो वर्गः मनुष्यवर्गः ।।४०९

इति मनुष्यवर्गः ।

## ब्रह्मवर्गः

सेति। सन्तानान्तं नवकं वंशे। प्रख्यातस्यापत्यसन्तानो वंशः, सन्तन्यतेऽनया। गवि स्वर्गे भुवि वा त्रायते कः। जायन्तेऽत्र युट्। कोलयति संहतीभवति कः। अभिजायतेऽत्र यञ्। अन्वयति परस्पर-सम्बन्धं गच्छति। अन्वयतेरच्। एवमन्ववपूर्वादिनोऽच्। वमत्युद्-गिरति पूर्वपुरुषान् भृवसिकुभ्यः शक्। दंशवंशमशककेशपाशा इति तालव्यशभेदः। संतन्यते व्याप्यते घञ् ।।१

वंशोऽन्ववायः सन्तानो (२) वर्णाः स्युर्ब्राह्मणादयः ॥

[ विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम् । ]

(३) राजबीजी राजवंश्यो (४) बीज्यस्तु कुलसम्भवः ।

(५) महाकुलकुलीनार्य्यसभ्यसज्जनसाधवः ॥

(६) ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ।

(७) आश्रमोऽस्त्री (८) द्विजात्यग्रजन्मभूदेववाडवाः ।

---

वेति। ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णाः। वर्ण्यन्ते वेदवाक्येन वर्णयतेरल् ॥२

राजेति। द्वयं राजवंशोद्भवे। राजा बीजमुत्पत्तिकारणमत्राऽस्तीतीन्। राजवंशे भवो यत् ॥३

रीति। यस्य कस्यचित् कुलभवो बीज्यः। प्रशस्तबीजयोगात् यस्तमादित्वात् ॥४

महेति। षट्कं महाकुलसम्भवे। महाकुलस्यापत्यमित्यणि महाकुलमिति वोपदेवः। महत्कुलमस्येति ह्रस्वादिरित्यपरे। "सभ्ये च सज्जनेऽपि स्यान्माहकुलमहाकुलौ"विति रत्नाकरः। कुले जातः ईनः। अर्त्तेर्ण्यण्। अज क्षेपणे ण्यणि आज्य इति कश्चित्। सभायां साधुर्यः। सन् प्रशस्तो जनः। साध्यति परार्थं कृवापाजीत्यादिना उण् ॥५

ब्रह्मेत्यादिचतुष्टये आश्रमः। "ब्रह्मचर्य्यादिचातुष्के मठादौ चाश्रमोऽस्त्रिया"मिति रुद्रः। आश्राम्यन्त्यस्मिन् घञ्। तत्र वेदार्थं ब्रह्म तपश्चरति व्रताभीक्ष्ण्ययोश्चेति णिनिः। द्वितीयो गृही, गृहाः दारास्तद्योगादिन्, तृतीयो वानप्रस्थः वनस्य प्रस्थे एकदेशे विद्यमानः शेषेऽण्। वैखानसश्च। "वैखानसो वने वानप्रस्थश्च कथ्यते" इति रत्नकोषः। "भिक्षामटित्वा प्रयतोऽष्टमासान् साग्निर्वने तिष्ठति भूरिकालम्। यो यत्नहीनो नखलोमधारी वैखानसं तं प्रवदन्ति धीराः" इति। चतुर्थो भिक्षुः सन्न्यासी। सनन्ताशंसिभिक्षामुः ॥६-७

  

विप्रश्च ब्राह्मणो-(९)ऽसौ षट्कर्म्मा यागादिभिर्युतः ।
(१०) विद्वान् विपश्चिद्दोषज्ञः सन् सुधीः कोविदो बुधः ॥
धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः ।
धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ॥

---

द्विजेति । षट् ब्राह्मणे । देहोत्पत्तिसंस्कारोत्पत्तिलक्षणे द्वे जाती जन्मनी अस्य । यथा "जन्मना ब्राह्मणो ज्ञेयः संस्काराद्द्विज उच्यते" इति । ब्रह्ममुखादग्रे जन्म अस्य । भुवः पृथिव्या देवः । भूमिदेवादयोऽपि । वड़वा ब्राह्मणी तत्र भवः "वड़वा वाड़वेऽपि स्यात् ब्राह्मण्यां वड़वा स्त्रिया"मिति शाश्वतः । विशेषेण प्राति पूरयति कर्म्माणि प्रापूरणे उपसर्गे त्वातो डः । ब्रह्म वेदस्तदधीतेऽण् । ब्रह्मणोऽजाताविति नलोपनिषेधः ॥८

असौ ब्राह्मणः क्षत्रियादिवृत्तिरहितो यागादिभिर्युतः षट्कर्म्मा स्यात् । यथा "इज्याध्ययनदानानि याजनाध्यापने तथा । प्रतिग्रहश्च तैर्युक्तः षट्कर्म्मा द्विज उच्यते" । यत्तु "सन्ध्या स्नानं तपो होमो देवतानाञ्च पूजनम् । आतिथ्यं वैश्वदेवश्च षट् कर्म्माणि दिने दिने" इति तत् सर्व्वेषां सामान्येन नित्यकर्म्मपरिगणनं तेन नास्य विरोधः ॥९

विद्वानिति । दीर्घदर्श्यन्तं द्वाविंशतिः पण्डिते । वेत्ति धर्म्माधर्म्मौ वेत्तेः शन्तुर्व्वसु । विप्रकृष्टं चिनोति पृषोदरादिः । दोषं जानाति कः । सर्व्वधर्म्मेष्वस्ति शन्तृङ् । सुष्ठु ध्यायति क्विप् । किंवा न वेत्ति ? पृषोदरादिः । बुध्यते कः । धियं राति कः । मनीषा बुद्धिस्तद्योगात् प्रशंसायामिन् । जानाति कः । प्रज्ञायोगादण् । संख्या विचारणा तद्योगात् वन्तुः । "तर्कसाहित्यसिद्धान्तवेदवेदान्तगामिनी । बुद्धिः पण्डा समाख्याता तद्योगात् पण्डितः स्मृतः ।" कौतेरिः । प्रशस्तधीयोगान्मन्तुः । सुनोति विविधं सुञो दीर्घश्चेति रिः । सूरिः सूरी विचक्षण इति नाममालायां नान्तश्च । सानसामसमसूरसूरय इति

दूरदर्शी दीर्घदर्शी (११) श्रोत्रियच्छान्दसौ समौ ।
[ मीमांसको जैमिनीये वेदान्ती ब्रह्मवादिनि ।
वैशेषिके स्यादौलूक्यः सौगतः शून्यवादिनि ॥
नैयायिकस्त्वक्षपादः स्याद्वादिक आर्हकः ।
चार्व्वाकलौकायतिकौ सत्कार्य्ये सांख्यकापिलौ ॥ ]
(१२) उपाध्यायोऽध्यापको-(१३)ऽथ स्यान्निषेकादिकृद् गुरुः ॥
(१४) मन्त्र-व्याख्याकृदाचार्य्यं (१५) आदेष्टा त्वध्वरे व्रती ।

---

दन्त्ये सभेदः। स्त्रियां सूरी विचक्षण इत्यमरमाला। कृतं ज्ञातमनेन कृती इन्। कर्षति निष्कर्षति क्तिः। स्त्र्याकर्षे ना बुधे कृष्टिरिति रुद्रः। लब्धो वर्णः स्तुतिर्येन। विविधमाचष्टे युटि रूढ़तः सिद्धिः। दूरं द्रष्टुं शीलमस्येति णिनिः ॥१०

श्रोत्रीति। द्वयं छन्दोऽध्येतरि। श्रुतिमधीते इयः श्रोत्रादेशस्त-मादित्वात्। छन्दोऽधीतेऽण्। "जन्मना ब्राह्मणो ज्ञेयः संस्काराद् द्विज उच्यते। विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते" इति स्मृतिसागरे ॥११

उपेति। द्वयं वेदादीनां पाठयितरि। उपेत्याधीयतेऽस्मात् इङा-भ्याश्चेति घञ्। अध्यापयति वुण् ॥१२

नीति। निषेको गर्भाधानम् आदिना सीमन्तोन्नयनपुंसवनादि तत्कर्त्ता पिता गुरुः। "गुरुर्म्मन्त्रोपदेष्टा च गुरुर्ज्जनकजीवय"रिति रत्नकोषः। "गुरु पिता गुरुर्विप्रो गुरुर्देवपुरोहितः। धुर्व्वहोऽपि गुरुः प्रोक्तो गुरुः शिष्यादिकारकः" इत्यनेकार्थध्वनिमञ्जरी ॥१३

आचर्य्यते ज्ञानाय सेव्यते ण्यत्। "उपनीय गुरुः शिष्यं वेदमध्या-पयेत् यः। साङ्गञ्चैव रहस्यञ्च तमाचार्य्यं प्रचक्षते" इति मनुः। "उपनीय ददद्वेदमाचार्य्यः स उदाहृतः" इति याज्ञवल्क्यः। अन्यत्र लक्षणया ॥१४

यष्टा च यजमानश्च (१६) स सोमवति दीक्षितः ॥
(१७) इज्याशीलो यायजूको (१८) यज्वा तु विधिनेष्टवान् ।
(१९) स गीष्पतीष्ट्या स्थपतिः (२०) सोमपीती तु सोमपाः
(२१) सर्व्ववेदाः स येनेष्टो यागः सर्व्वस्वदक्षिणः ।
(२२) अनूचानः प्रवचने साङ्गेऽधीती (२३) गुरोस्तु यः ॥
लब्धानुज्ञः समावृत्तः (२४) सुत्वा त्वभिषवे कृते ।

---

अतीति । अयमध्वरे यागविषये यथार्हं कर्म्मकुर्विति ऋत्विजामादेष्टरि यागस्वामिनि । व्रतमेणाजिनादिधारणं तद्योगादिन । यजेस्तृच् शानचौ । "यष्टा च यजमानश्च याजको वेदपाठकः दीक्षितः सोमयाजी चे"ति रभसः ॥१५

सोमपानवत्यध्वरे यजमानो दीक्षितः, दीक्षः क्तः ॥१६

इज्येति । द्वयं निष्कामं पुनः पुनर्यगकरणशीले । चेक्रीयितान्तानां यजिदंशिवदामित्यूकञ् ॥१७

यज्वेति । दर्शपौर्णमासाभ्यां यजेतेत्यादिवेदबोधितवाक्येन फलाकाङ्क्षया कृतयागो यज्वा । ङ्वनिप् सुयजोरिति ङ्वनिप ॥१८

य सज्वा बृहस्पतिनाम्ना यागेनेष्टवान् सन् स्थपतिरुच्यते । सर्व्वान् वशे स्थापयति पृषोदरादिः ॥१९

सोमेति । द्वयं सोमलतारसपायिनि । सोमस्य पीतं पानमस्यास्तीति इन् । सोमं पाति कः ॥२०

सर्व्वस्वदक्षिणो विश्वजिदादियागः, स येन इष्टः स सर्व्ववेदाः सर्व्वं सर्व्वस्वं वेदयते सम्भावयति असुन् ॥२१

साङ्गे प्रवचने वेदेऽधीती अनुपूर्व्वाद्वचेः कानः कर्त्तर्य्येव ॥२२

साङ्गवेदाध्ययनानन्तरं गृहाय गुरोर्लब्धानुज्ञः शिष्यः समावृत्तः ॥२३

(२५) छात्रान्तेवासिनौ शिष्ये (२६) शैक्षाः प्राथमकल्पिकाः

(२७) एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः ।

(२८) सतीर्थ्यास्त्वेक-गुरव (२९) श्चितवानग्निमग्निचित् ॥

(३०) पारम्पर्य्योपदेशे स्यादैतिह्यमितिहाऽव्ययम् ।

(३१) उपज्ञा ज्ञानमाद्यं स्यात् (३२) ज्ञात्वारम्भ उपक्रमः ॥

(३३) यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्म्मखः क्रतुः ।

---

अभिषवः स्नानमात्रम्, इह तु प्रस्तावात् यागसम्बन्धि स्नानं यः कृतवान् स सुत्वा, ङ्वनिप् ॥२४

छात्रेति । त्रयं शिष्ये । छादयति गुरुदोषं त्रः । अन्ते समीपे वसति आवश्यके णिनिः । शिष्यते शिक्ष्यते इति वृन्दजुषीत्यादिना क्यप् ॥२५

शैक्षेति । द्वयं प्रथमवेदपाठकर्त्तरि । प्रथमकल्पमधीयानाः प्रथमवेदपाठकाः । शिक्षामधीतेऽण् । कल्पः शास्त्रे विधौ न्याये ब्रह्मणो दिवसेऽपि चे"ति रभसः ॥२६

एकस्मात् गुरोरेकमेव वेदमध्येतुमेकव्रतमाचरन्तः परस्परं सब्रह्मचारिणः । ब्रह्म वेदस्तदध्ययनार्थं यत् व्रतं तदपि ब्रह्म । समानं ब्रह्म चरन्तीति व्रताभीक्ष्ण्ययोश्चेति णिनिः ॥२७

सेति । एको गुरुर्येषां ते सतीर्थाः, समाने तीर्थे वसन्तीति यः । "निदानागमयोस्तीर्थमृषिजुष्टजले गुरौ" इत्यनेकार्थे वक्ष्यति ॥२८

गृही श्रौताग्निरग्निचित्, अग्निहोत्री । चेरग्नौ क्विप् ॥२९

ऐतीति । द्वयम् उपदेशपरम्परायाम् । अव्ययादितिह शाब्दात् स्वार्थे यत् ॥३०

विनोपदेशेन स्वयमेव प्रथमं ज्ञानमुपज्ञा । यथा वाल्मीकेर्म्मानिषादेत्यादि श्लोकनिर्म्माणज्ञानम् ॥३१

अयमस्योपायोऽनेन तत् सिध्यतीति ज्ञात्वा प्रथमारम्भ उपक्रमः ॥३२

(३४) पाठो होमश्चातिथीनां सपर्य्या तर्पणं बलिः ।
एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः ।
(३५) समज्या परिषद् गोष्ठी सभासमितिसंसदः ॥
आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ।
(३६) प्राग्वंशः प्राग्घविर्गेहात् (३७) सदस्या विधिदर्शिनः ॥
(३८) सभासदः सभास्तारा: सभ्याः सामाजिकाश्च ते ।

---

येति । सप्तकं यज्ञे । याचि विच्छीत्यादिना यजेर्नङ् । सत्रम् अभिषवेऽल् । ध्वृहूच्छने नञ् पूर्व्वादच् । यजेर्घञ् । सप्त तन्तवोऽस्य । मखेर्दण्डकादच् । क्रियते स्वर्गार्थिभिरिति तुन् अकारागमश्च ॥३३

एतैः । पाठादिभिः ब्रह्मयज्ञादिनामकैः पञ्च महायज्ञाः स्युः । "दैवयज्ञो भूतयज्ञः पितृयज्ञस्तथैव च । नृयज्ञो ब्रह्मयज्ञश्च पञ्च यज्ञाः प्रकीर्त्तिताः" इति नारदीये । "अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्" ॥३४

समेति । सदसन्तं नवकं सभासामान्ये । समजन्ति सङ्गच्छन्तेऽस्यां समजासनीत्यादिना क्यप् । परिषीदन्त्यस्यां क्विप् । सदेरप्रतेरिति षत्वम् । पर्षदपि । आस्थानं संसदास्थानी पर्षत्परिषदौ सभा"विति रभसः । गावो वाचस्तिष्ठन्त्यस्यां स्थास्नेत्यादिना कः, गोभूमीत्यादिना षत्वं, नदादित्वादीप्रत्ययः । सद्भिर्भाति सभा पृषोदरादिः । संयन्ति मिलन्त्यस्यामिनः क्तिः । संसीदन्त्यस्यां क्विप् । आगत्य तिष्ठन्त्यस्यां ल्युट् । सीदन्त्यस्यामसुन् ॥३५

यस्मिन् गृहे हरिद्रव्यादिकं नियमेन स्थाप्यते तस्मात् पूर्वं यजमानसदस्यादीनां स्थित्यर्थं यद् गृहं स प्राग्वंशः ॥३६

सदेति । द्वयं श्रुतिविहितस्य यागविधेर्द्रष्टरि सभापण्डिते । सदसि साधवो यत् ॥३७

(३९) अध्वर्य्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात् ॥
(४०) आग्नीध्राद्या धनैर्व्वार्य्या ऋत्विजो याजकाश्च ते ।
(४१) वेदिः परिष्कृता भूमिः (४२) समे स्थण्डिलचत्वरे ॥
(४३) चषालो यूपकटकः (४४) कुम्बा सुगहना वृतिः ।
(४५) यूपाग्रं तर्म्म (४६) निर्म्मन्थ्यदारुणि त्वरणिर्द्वयोः ॥

---

सभेति। चतुष्कं सामान्यतः समारम्भके। सभायां सीदन्ति। क्विप्। सभासान्स्तृणन्ति आच्छादयन्ति कर्म्मण्यण्। सभासु साधवो यत्। समाजं जनसंघातमागच्छन्ति इतीकण् ॥३८

अध्वेति। यजुर्व्वेदविदध्वर्युः। अध्वरमिच्छति युक्तमादित्वात्। सामवेदविदुद्गाता। उद्गायति सामानि तृच। ऋग्वेदविद्धोता ॥३९

आग्नीध्राद्याः षोड़श यज्ञस्वामिना धनैर्व्वरणीया ऋत्विगादिशब्द-वाच्याः, तद्यथा—"ब्रह्मोद्गाता तथा होता अध्वर्युर्ब्रह्मशंसिनौ। प्रस्तोतृमित्रावरुणौ प्रोतृप्रस्ततरौ तथा। उन्नेतारकोऽभिहर्त्ता च नेष्टाग्नीध्र-स्तथैव च। ब्रह्मण्यश्च प्रतिप्रस्थो नेता इत्येव षोड़श ॥" ऋतौ यजन्ते, ऋत्विक दधृतित्यादिना साधुः, यजेर्वुण् ॥४०

यागार्थं मन्त्रादिपरिष्कृता भूमिर्व्वेदिः। वेदी च ॥४१

स्थेति। द्वयं यागार्थं संस्कृतभूभागे। स्थानं स्थिरमस्मिन् पृषो-दरादि। चत्वरमुक्तं प्राक् ॥४२

चषेति। द्वयं यूपमस्तके डमरुकाकृतिकाष्ठे। चष भक्षणे मूर्द्ध-न्यान्तादालः ॥४३

यागभूमौ अतिगहनावरणं कुम्बा। कुबि च्छादने भीषिचिन्ती-त्यादिना अङ् ॥४४

यूपस्याग्रं तर्म्म तरतेर्म्मन् ॥४५

अग्न्युत्थापनार्थं यत् काष्ठं काष्ठान्तरेण घृष्यते सा अरणिः। अर्त्ते-रनिः। निर्म्मन्थ्यश्च तत् दारु चेति कर्म्मधारयः। अरणी च ॥४६

# प्रणव-पारिजातः

( संस्कृत-मासिकपत्रम् )

त्रयोदशवर्षम्, पञ्चसंख्या ] [ माघमासः १८६२ शकाब्दः]


## भारते वस भारती ।

अध्यापकः श्रीयादवेन्द्रनाथराय न्याय-तर्कतीर्थदेवशर्मा

मातर्भारति ! भारतादपसृते ! पाश्चात्त्यदेशाश्रिते !
तत्रैवावस पूज्यते यदवनौ पुण्यं महाभारतम् ।
व्यासस्यैव कृतिं स्मरन्त्यनुदिनं तज्जन्मभूमिं प्रति
स्यात् प्रीतिर्विमला शिवा, न जननी दोषान् सुते पश्यति ॥१

शस्ये धूलिकणान् वचःस्वणृततां द्रव्यान्तरं भेषजे
तैले स्निग्धरसं न मिश्रयति वा दुग्धे च तोयादिकम् ।
नोत्कोचः परिगृह्यते जनगणाद् राष्ट्रे च कार्य्यार्थिन-
स्तत्र त्वं वस भारति प्रतिदिनं सन्तुष्टचित्ता सती ॥२

मिथ्यासाम्यवचो न यत्र परिषद्वक्तिस्वदेशोत्तमः
श्रेष्ठत्वप्रतिपादनाय कुरुते दुष्कर्म नो ज्ञानतः ।
ऐशीशक्तिमयान् जनान् विगणयन् ससेवते यत्र भू-
स्तत्र त्वं वस भारति प्रणयतः स्निग्धात्मना शोभने ॥३

गायत्री समुपास्यते द्विजगणैराचारपूतैर्मुदा
शास्त्रं यत्र विचार्य्यते विमलया दृष्ट्या बुधैर्यत्नतः ।
आहारे व्यवहारशुद्धमतिभिः संत्यज्यतेऽभ्यक्षकं
तत्र त्वं वस भारतीन्दुवदने ! निष्कम्पबुद्ध्या चिरम् ॥४

अश्लीलं न च लोकरञ्जनधिया काव्येषु संयुज्यते
शास्त्राचारविगर्हितं श्रुतिसुखं नाट्यं न वास्वाद्यते ।
पूज्यन्ते गुरवश्च ते सुतनयैर्वृद्धाश्च सम्मानिता-
स्तत्र त्वं वस भारति त्रिभुवने स्वच्छन्दचित्ता स्वयम् ॥५

हंसस्ते पितपङ्कजं च रुचिरं शुद्धासनं कल्पितं
तद्देशेष्वतिदुर्ल्लभं भवति चेद्देशं स्मरे भारतम् ।
पश्यन्तस्तनयाः स्वमातरमहो नूनं वरिष्यन्ति ते
स्वान् दोषान् परिपश्यतां च विशदा जागर्ति चेच्छेमुषी ॥६

इत्येषा मृदु षट्पदी विलसताद् भक्ताननाम्भोरुहे
ग्लानिं नैतु च तत् समाविकचता पूर्णा सदा राजताम् ।
पादाब्जान्मधुभृङ्गवत् सुमधुरं पेपीयतां मे मनो
मोदन्तां प्रणताः स्वभावनिरताः शान्तिप्रियास्ते सुताः ॥७

—०—

---

( संस्कृतस्य सर्व्वथाभ्युन्नति-प्रचार-प्रसारेभ्यः संस्कृतसेविनां सार्व्विककल्याण-विधानाय च संघटितायाः संस्कृतसेविसमितेः प्रथमसाधारणाधिवेशनस्य सारांशः । सन्देशांशः पर्य्यन्ते द्रष्टव्यः । )

*निखिलवङ्गसंस्कृतसेविसमितेः सम्पादकीयविवृतेः सारांशः*

या देवी स्तूयते नित्यं विविधैर्वेदपारगैः ।
सा मे भवतु जिह्वाग्रे ब्रह्मरूपा सरस्वती ॥

अद्यतनेऽस्मिन् शुभानुष्ठाने समवेतसुधीभ्यः प्रथमत एव विज्ञाप्यते सान्तःकरणं श्रद्धाभिवादनम् ।

## समितेः प्रतिष्ठा

१३७६ वङ्गाब्दीय-सौरमाघस्य तृतीयदिवसे संस्कृत-साहित्यपरिषद्-भवने विशिष्टमनीषिणां तथा संस्कृतसेविनामाह्वानेन माननीयानां श्रीमतां रमाप्रसादमुखोपाध्यायमहोदयानां सभापतिरूपेण तथा परमश्रद्धा-भाजनानां श्रीमतां विष्णुपदभट्टाचार्य्यमहोदयानां प्रधानातिथिरूपेण समुपस्थित्या एकं सम्मेलनं समजनि। तत्र पश्चिमवङ्गीयसंस्कृतसेविनां संहतये तथा संस्कृतशिक्षायाः प्रचाराय प्रसाराय च सर्व्वसम्मत्या "निखिलवङ्गसंस्कृतसेविसमिति" संस्थापनप्रस्तावः परिगृहीतः। तत्-समितिपरिचालनाय एका कर्म्मपरिषदपि संघटिता।

## नियमावलीविरचनम्, सम्बद्धीकरणञ्च

समितेः प्रतिष्ठानन्तरमेव कर्म्मपरिषदा बहुविचार-विवेचनादिपूर्व्वकं समितेः उद्देश्यावलीं नियमावलिञ्च विरचय्य पश्चिमवङ्गसर्व्वकारस्य १९६१ खृष्टाब्दीय २६ नियमेन समितेः सम्बद्धीकरणं सम्पादितम्।

## संस्कृतपण्डितानां स्वार्थरक्षणाय प्रचेष्टा

(१) संस्कृतशिक्षायाः समस्यानां कथञ्चित् समाधानाय नव प्रति-निधयः माननीयपश्चिमवङ्गराज्यपालमहोदयेन सह साक्षात्कारमकुर्वन्। साक्षात्कारकाले तत्कालीनशिक्षोपदेष्टारः श्रीयुक्त करुणाकेतन सेनमहोदयाः, तथा शिक्षासचिवाः श्रीयुक्त जे, सि, सेनगुप्तमहोदयाः समुपस्थिता आसन्। प्रतिनिधिभिः एका स्मारकलिपिरपि राज्यपालमहोदयहस्ते समर्पिता तैश्च महाभागैः स्मारकलिपेः यौक्तिकतां स्वीकृत्य रूपायणे मौखिकप्रतिश्रुतौ दत्तायामपि अद्यावधि तद्विषये कापि कार्य्यकारिणी व्यवस्था नैव परिलक्ष्यते। अतएव अत्र सर्वेषां सम्मिलितः प्रयत्नः सर्व्वथा आवश्यकः।

(२) समितेः कर्म्मपरिषदा वत्सरद्वयं यावत् चतुष्पाठीनाम् अध्यापक-महोदयैः अप्राप्तायाः मूलमहार्घभृतेः प्राप्तये केचन प्रतिनिधयः शिक्षा-सचिवमहोदयानां सविधे प्रेषिताः। तत्रापि मौखिकप्रतिश्रुतिलाभेऽपि

न खलु काचन कार्य्यकारिणी व्यवस्था समुलभ्यते। अतएव अत्रापि संहता प्रचेष्टा यत्नेन करणीया।

(३) चिराचरितरीत्या शारदीयपूजायाः प्राक् चतुष्पाठीनां षाण्मासिकवृत्तेः तथा परीक्षकाणां पारिश्रमिकस्य शिक्षाधिकाराद् अनुमोदनलाभाभावात् समितिपक्षतः केचन प्रतिनिधयः प्राथमिकविद्यालयानां प्रधानपरिदर्शकमहोदयेन साक्षात्कारं कृत्वा तस्य प्रयोजनीयव्यवस्थां कृतवन्तः।

(४) वङ्गीयसंस्कृतशिक्षापरिषदि चतुष्पाठीनाम् परिचालकघटनविषये आपत्तिकरनियमावली प्रवर्त्तनाय उद्युक्तायां समितेः तीव्रप्रतिवादः कृतः। तेन च तत्र कथञ्चित् प्रतिकारोऽपि संघटितः।

## चतुष्पाठी-स्थापनम्

समित्या एका चतुष्पाठी संस्थापिता।

## साहाय्यप्रदानम्

वन्यादुर्गतानां साहाय्यार्थं समितिपक्षतः राज्यपालप्रधानोपदेशकश्रीयुक्तविनयभूषणघोष महोदयानां हस्ते १११·०० रूप्यकाणि प्रदत्तानि।

## संघटनम्

समितेः नियमावल्यनुसारेण यथा द्रुतं निर्वाचनं सम्पन्नं स्यात् तथा निर्व्वाचितकर्म्मपरिषत्समीपे दायित्वम् अर्पितं स्यात् तदर्थं कर्म्मपरिषदानया प्रयत्नविशेषः समवलम्बितः, किन्तु केषाञ्चन अञ्चलानां पण्डितमहोदयानां उपयुक्तसहयोगिताभावेन पुनः पुनः प्रयत्नेनापि सर्व्वेभ्यः अञ्चलेभ्यः सदस्यसंग्रहाभावात् समितेर्नियमेन सर्व्वेषु अञ्चलेषु समितेः संघटनस्य विस्तृतिर्न जाता। तथापि प्रायेषु अञ्चलेषु समितेः संघटनं साधितम्।

एतावता स्वल्पकालेन यत्सामान्यकर्म्मानुष्ठानं समभवत्, तस्य संक्षिप्ता विवरणी भवतां पुरत उपस्थाप्यते। समितेः उद्देश्यानां रूपायणे

सर्व्वेषु संस्कृतसेविनां संहतिः एकान्तप्रयोजनीया। नोचेत् कदाप्येषा परिपूर्णरूप-परिग्रहणे नैव समर्था स्यात्। अतएव श्रीमतां संस्कृतसेविनां सविधे निवेदनम्, भवन्तः सान्तःकरणसहयोगितया सङ्घबद्धाः सन्तः पश्चिमवङ्गस्य संस्कृतशिक्षां रक्षन्त्विति।

परिशेषे यथेयं शिशुसमितिः दीर्घायुर्लब्ध्वा लक्ष्यपथगमने समर्था स्यात्, तथास्यै शक्तिं सामर्थ्यञ्च प्रयच्छतु कल्याणकारी विश्वनियन्ता परमेश्वरः इति तदीयचरणारविन्दयुगले सभक्ति प्रार्थना। इति—

विनतयोः सम्पादकयोः

१३७७ वङ्गाब्दीय-सौर-पौषस्य चतुर्विंशदिवसीयम् — श्रीनलिकान्तमिश्र तर्क-स्मृतितीर्थ-श्रीनित्यानन्द स्मृतितीर्थयोः

निखिलवङ्ग-संस्कृतसेवि-समितेः प्राथमिक-प्रादेशिक-सम्मेलनस्य सभापतीनाम्

महाकवि-डः श्रीश्रीजीव न्यायतीर्थ एम्-ए, डि, लिट्, महोदयानाम्

## अभिभाषणम्

देवीं वाचमजनयन्त देवा-
स्तां विश्वरूपां पशवो वदन्ति।
सा नो मन्द्रेषमूर्जं दुहाना
धेनुर्वागस्मानुपसुष्टुतैतु॥

सितशतदलवासा या सहस्रारभासा-
मुपरि विशदहासा सन्ततध्वान्तनाशा।
शशिशकलविकाशादभ्रशुभ्रीकृताशा
परमरसविलासा भातु सा देवभाषा॥

सघनगगनमूर्त्तिः स्फूर्त्तिरुत्साहशक्ते-
र्वदनसदनदीव्यल्लोलजिह्वातड़िद्भाः।
जड़ितशशिकलाश्रीभालनेत्राभिरामा

स्फुरतु मम हृदन्तः शुम्भहा शम्भुकान्ता ॥
यस्य वश्येव वागदेवी सदा स्मेरानुवर्तिनी ।
रमते स्म नमस्तस्मै पित्रे ब्रह्मैकमूर्त्तये ॥

अयि भो गीर्वाणवाणीप्रणयिनो माननीया मनीषिणः ! देवीमूर्त्तयः स्नेहसौजन्यपूर्त्तयो महिलाः ! नयविनयधना विनेयाश्च !

अहो ! सुप्रातमद्य समासादितं यदस्मिन् पुण्यक्षेत्रे दक्षिणेश्वरे श्रीमदाद्यापीठेऽधिविशं निखिलवङ्ग-संस्कृतसेविसमितेः प्राथमिकं प्रादेशिकसम्मेलनं जगदम्बाकृपावलम्बनं वरीवर्धते। अचिन्तितपूर्वमभिनवमिदं संस्कृतसेविनां सङ्घटनम् ! विदुषां येषां मन्त्रणाकौशलेन प्रोत्साहबलेन प्रचेष्टातिशयेन च सम्भवदुत्पत्तिकमिदमद्य दृश्यते, स सर्वथा साधुवादभाजनानि सुधीसमाजस्य। ब्राह्मणानामसाहित्यं जगत्कल्याणकारणमिति जनापवादमन्यथा प्रतिपादयन्तस्ते नूनं धन्या वरेण्याश्च। प्राधान्येन व्यपदेशा भवन्तीति न्यायाद् ब्राह्मणपदेन स्त्रीपुरुषजातिनिर्विशेषं सुरभारतीरतिमन्तः सर्व एव मन्तव्याः। इयत्कालावधि ब्राह्मणभावानुगानां संस्कृतसेविनां छिन्नभिन्नपथगामिनां गिरिनदीस्रोतसामिव प्रक्षीयमाणरसानां सम्भूय प्रसरणं न चिन्तितं न वा परिकल्पितम्।

सागरायमाणमिदं सम्मेलनं यदि स्यात् कथं कथमपि शुष्यमाणजीवनसम्पूरकं तदर्थमियं सङ्घसम्पादनी समीहा। तृणानामपि गुणत्वमापन्नानां मत्तगजबन्धनसामर्थ्यवत् समवेतानां तत्रभवतां भवतामैक्यं भजतां भविष्यत्येव बलसञ्चयः। उपेक्षितस्य संस्कृतसेविसमाजस्य यद्यपि नास्ति विधिविरोधिकर्मकलापं प्रति श्रद्धालेशोऽपि, तथापि सामोपायेन संहतानां सुरभारतीसेविनां कार्यविषयस्य सबलोपन्यासः फलोपधायको भवेदित्यस्ति समाश्वासः। यतः

असंहता हता लोकाः सङ्घे शक्तिः कलौ युगे।
नैकेन शक्यते कर्त्तुं यत्तत् साध्यं समष्टिभिः ॥

प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तत इति प्रागुदेति जिज्ञासा— किंप्रयोजनेयं संस्कृतसेविसमितिः ? तत्रेदं स्वच्छमुत्तरमेतदेव यद्

भारतवर्षस्य जीवातुभूतं संस्कृतं, संस्कृताध्ययनाध्यापनमहिम्नैव भारतं विश्वजनवरणीयत्वमापन्नम्। अपितु, कालवशादद्यत्वे संस्कृतं प्रत्यनादरहेतोर्भारतीय-जनानां मतिगतिरतिविपर्ययो दृश्यते। अस्माकमेव सन्तानानाम् अशनवसनासनभाषण—रीतिविपर्य्यासः प्रत्यक्षमनुभूयते। संस्कृतप्रचारप्रसारानुशीलेन भारतीयभावादर्शपरिचयेन च पुनः स्वदेशप्रेमानुबन्धि प्राणस्पन्दनं सम्भाव्यते। भाषा हि तत्तद्देशवासिनामाशाकाङ्क्षा मनोविकाशाश्च।

न भूमिमात्रं किल देशरूपं
मनुष्यसाधारणमेव कल्प्यम्।
प्रज्ञासदाचारविचारधर्माः
समर्पिताः सन्ति सदा पुरस्ताः॥

भाषान्तरशिक्षितानां हेयत्वाकिञ्चित्करत्वधीविषयीभूतस्य संस्कृतस्य स्वरूपोद्घाटनम् अन्यत् प्रयोजनम्।—

ये तु नाधीत्य नालोच्य तुच्छीकुर्वन्ति संस्कृतम्।
तान् विलोक्य स्मराम्यद्य गुरोर्वचनमादरात्॥

तथाहि—

शैत्य-माधुर्य्य-वैधुर्य्यदोषश्चेदवधार्य्यते।
विनावगाह-पानाभ्यां तरङ्गिण्यास्तु तेन किम्?

किमस्ति संस्कृतभाषायां यस्य लोभाद्विनेयसम्प्रदाया रत्नराजिमन्विच्छन्तो धनार्थिन इव जलधिं संस्कृतशास्त्रम् उपासीरन् इति प्रतिपक्षाणामुपेक्षाव्यञ्जकः प्रश्नः। किं नास्ति संस्कृतभाषायामिति प्रतिप्रश्नः समुदेति संस्कृतसेविनां पक्षतः। उच्चैर्घोषपूर्वकमुच्यते दोषज्ञैर्नवीनैर्भाषान्तरप्रवीणैर्यद् विज्ञानं नास्तीति। विज्ञानमेव साम्प्रतिके काले देशोन्नतिविधायकं परमधनसाधनं परदेशप्रतिस्पर्द्धया वर्द्धमानसम्मानजनकञ्च। विज्ञानशब्दोऽपि न श्रूयते संस्कृतभाषाया नवाविस्कृतोऽयं शब्दो वैज्ञानिकैर्विज्ञानज्ञानवर्जितं जितं भारतं वैदेशिकैः। स्वसत्ता रक्षणाय, स्वदेशकल्याणाय, भारतगौरववर्द्धनाय, संस्कृत-

वर्जनमत्यावश्यकमिति प्रतिपक्षाणाम् आक्षेपः किं न वज्रलेपायते ?

अस्योत्तरम्—अज्ञातसंस्कृतविद्यानां मोहविजृम्भितेयमुक्तिः। वैदेशिका नामागमनात् पूर्वमेव कोषवाक्यगतं विज्ञानशब्दं संस्कृतज्ञाः किं न जानन्ति—'मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः'—विज्ञानं किल संस्कृतभाषायां द्वेधा व्यवह्रियते। आध्यात्मिकं शैल्पिकं चेति।

अध्यात्मिकं विज्ञानमधिकृत्य छान्दोग्योपनिषदि समुद्घोषितम्—'विज्ञानं वावध्यानाद् भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमः वेदानां वेदम्, पैत्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यां दिवं च पृथिवीञ्च वायुं चाकाशं चापश्च तेजश्च देवांश्च मनुष्यांश्च पशूंश्च वयांसि च तृणवनस्पतीं श्वापदान्याकीट-पतङ्गपिपीलकं धर्मं चाधर्मं च सत्यञ्चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं लोकममुञ्च विज्ञानेनैव विजानाति विज्ञान-मुपास्स्वेति विज्ञानस्य मूलमात्मैवेति श्रौतः सिद्धान्तः।

शैल्पिकं विज्ञानं च संस्कृतशास्त्रेषु नाल्पं नायं स्थाणोरपराधो यदेनमान्धो न पश्यतीति। सत्यपि शिल्पसम्बन्धिनि विज्ञाने गवेषणा-विमुखत्वाद् अनादरवशाच्च नाऽस्माकं तत्र दृष्टिरस्ति।

महाभारते सभापर्वणि अष्टमाध्याये पठ्यते यद् यम-सभासीत् कीदृशी ? 'अर्कप्रकाशा भ्राजिष्णुः सर्वतः कामरूपिणी। नातिशीता न चात्युष्णा मनसश्च प्रहर्षिणी।' (३) अद्यत्वे यथैव भवनेषु वायुसाम्यं (air conditioned) क्रियते, तथैवात्रापि वर्णितम्। यथा युधिष्ठिरस्य राजसूययज्ञार्थं निर्मितायां सभायां प्रवेशकामो दुर्योधनः क्वचित् स्फटिककुट्टिमे जलभ्रमात् वस्त्रसंकोचं करोति क्वचिद्वा स्फटिक-भ्रमात् जलमध्ये पतति, कदाचिद्वा स्फटिकमयद्वारं स्वच्छं निष्कपाटं मार्गं बुद्ध्वा शिरसाहतः पतति। तथा च श्लोकाः—

स कदाचित् सभामध्ये धार्त्तराष्ट्रो महीपतिः।
स्फाटिकं स्थलमासाद्य जलमित्यभिशङ्कया॥

  

स्ववस्त्रोत्कर्षणं राजा कृतवान् बुद्धिमोहितः ।
दुर्मना विमुखश्चैव परिचक्राम तां सभाम् ॥
ततःस्थले निपतितो दुर्मना व्रीड़ितो नृपः ।
ततः स्फटिकतोयां वै स्फटिकाम्बुजशोभिताम् ॥
वापीं मत्वा स्थलमिव सवासाः प्रापतज्जले ।
द्वारन्तु पिहिताकारं स्फटिकं प्रेक्ष्य भूमिपः ॥
प्रविशन्नाहतो मूर्ध्नि व्याघूर्णित इव स्थितः ।
तादृशञ्च परं द्वारं स्फटिकोरुकपाटकम् ॥
विघट्टयन् कराभ्यान्तु निष्क्रम्याग्रे पपात ह ।
द्वारन्तु विततकारं समापेदे पुनश्च सः ।
तद्वृत्तञ्चेति मन्वानो द्वारस्थानादुपारमत् ॥

(सभापर्वणि ४७ अध्याय ३-१३)

महाभारत एव शाल्वराजस्य सौभनगरनामक-विमानस्य जलस्थलान्तरीक्षगतिवार्त्तां विज्ञाय 'जेप्लीन' नामकेन शर्मण्यदेशीयेन शिल्पिना तादृशं किञ्चन विमानं निरमायि । पञ्चतन्त्रेऽपि कथाच्छलेन विमानवार्त्ता दृश्यते । विमानशब्द एव व्योमयानवाची विमानास्तित्वं प्रमाणयति । इदानीमपि कोणार्कमन्दिरं श्रीजगन्नाथदेवागार-मीनाक्षी-रामेश्वर-श्रीपतिप्रभृतिषु देवस्थानेषु—प्रासाद-तोरणादिनिर्माणकौशलं किं न भारतीयानां विज्ञानबोधं प्रमाणीकरोति ? संस्कृतभाषायामेव निबद्धं वास्तुविद्या-शिल्पशास्त्रादिकमद्यापि समुपलभ्यते ।

कुरुपाण्डवयुद्धेऽवसितेऽभिमन्युहन्तारमश्वत्थामानं कदाचिद् व्यासनारदसमीपवर्तिनं दृष्ट्वा वृकोदरो गदाहस्तस्तं प्रहर्तुकामः यदा प्रसरति स्म, पश्चाच्च श्रीकृष्णचालितं रथमारूढं धनञ्जयमागच्छन्तं विलोक्य द्रौणिः स्वप्राणरक्षार्थम् पाण्डवनिधननिदानम् इषीकास्त्रं निचिक्षेप । श्रीकृष्णनिर्देशेन धनञ्जयोऽपि स्वात्मरक्षार्थं यदा पाशुपतास्त्रत्यागाय सन्नद्धः, तदानीं व्यासनारदौ समुत्थाय द्रौणिमर्जुनञ्च प्रयुक्तास्त्रप्रतिसंहाराय सानुरोधं विज्ञापयामासतुः । महाभारते तद्वर्णनपाठेनैव साम्प्रतिक

वर्जनमत्यावश्यकमिति प्रतिपक्षाणाम् आक्षेपः किं न वज्रलेपायते ?

अस्योत्तरम्—अज्ञातसंस्कृतविद्यानां मोहविजृम्भितेयमुक्तिः। वैदेशिका नामागमनात् पूर्वमेव कोषवाक्यगतं विज्ञानशब्दं संस्कृतज्ञाः किं न जानन्ति—'मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः'—विज्ञानं किल संस्कृतभाषायां द्वेधा व्यवह्रियते। आध्यात्मिकं शैल्पिकं चेति।

अध्यात्मिकं विज्ञानमधिकृत्य च्छान्दोग्योपनिषदि समुद्घोषितम्—'विज्ञानं वावध्यानाद् भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमः वेदानां वेदम्, पैत्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यां दिवं च पृथिवीञ्च वायुं चाकाशं चापश्च तेजश्च देवांश्च मनुष्यांश्च पशूंश्च वयांसि च तृणवनस्पतीं च्छ्वापदान्याकीट-पतङ्गपिपीलकं धर्मं चाधर्मं च सत्यञ्चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं लोकममुञ्च विज्ञानेनैव विजानाति विज्ञान-मुपास्स्वेति विज्ञानस्य मूलमात्मैवेति श्रौतः सिद्धान्तः।

शैल्पिकं विज्ञानं च संस्कृतशास्त्रेषु नाल्पं नायं स्थाणोरपराधो यदेनमान्धो न पश्यतीति। सत्यपि शिल्पसम्बन्धिनि विज्ञाने गवेषणा-विमुखत्वाद् अनादरवशाच्च नास्माकं तत्र दृष्टिरस्ति।

महाभारते सभापर्वणि अष्टमाध्याये पठ्यते यद् यम-सभासीत् कीदृशी ? 'अर्कप्रकाशा भ्राजिष्णुः सर्वतः कामरूपिणी। नातिशीता न चात्युष्णा मनसश्च प्रहर्षिणी।' (३) अद्यत्वे यथैव भवनेषु वायुसाम्यं (air conditioned) क्रियते, तथैवात्रापि वर्णितम्। यथा युधिष्ठिरस्य राजसूययज्ञार्थं निर्मितायां सभायां प्रवेशकामो दुर्योधनः क्वचित् स्फटिककुट्टिमे जलभ्रमात् वस्त्रसंकोचं करोति क्वचिद्वा स्फटिक-भ्रमात् जलमध्ये पतति, कदाचिद्वा स्फटिकमयद्वारं स्वच्छं निष्कपाटं मार्गं बुद्ध्वा शिरसाहतः पतति। तथा च श्लोकाः—

स कदाचित् सभामध्ये धार्त्तराष्ट्रो महीपतिः।
स्फाटिकं स्थलमासाद्य जलमित्यभिशङ्कया॥

स्ववस्त्रोत्कर्षणं राजा कृतवान् बुद्धिमोहितः।
दुर्मना विमुखश्चैव परिचक्राम तां सभाम्॥
ततःस्थले निपतितो दुर्मना व्रीड़ितो नृपः।
ततः स्फटिकतोयां वै स्फटिकाम्बुजशोभिताम्॥
वापीं मत्वा स्थलमिव सवासाः प्रापतज्जले।
द्वारन्तु पिहिताकारं स्फटिकं प्रेक्ष्य भूमिपः॥
प्रविशन्नाहतो मूर्ध्नि व्याघूर्णित इव स्थितः।
तादृशञ्च परं द्वारं स्फटिकोरुकपाटकम्॥
विघट्टयन् कराभ्यान्तु निष्क्रम्याग्रे पपात ह।
द्वारन्तु विततकारं समापेदे पुनश्च सः।
तद्वृत्तञ्चेति मन्वानो द्वारस्थानादुपारमत्॥

( सभापर्वणि ४७ अध्याय ३-१३ )

महाभारत एव शाल्वराजस्य सौभनगरनामक-विमानस्य जलस्थलान्तरीक्षगतिवार्त्तां विज्ञाय 'जेप्लीन' नामकेन शर्मण्यदेशीयेन शिल्पिना तादृशं किञ्चन विमानं निरमायि। पञ्चतन्त्रेऽपि कथाच्छलेन विमानवार्त्ता दृश्यते। विमानशब्द एव व्योमयानवाची विमानास्तित्वं प्रमाणयति। इदानीमपि कोणार्कमन्दिरं श्रीजगन्नाथदेवागार-मीनाक्षी-रामेश्वर-श्रीपतिप्रभृतिषु देवस्थानेषु—प्रासाद-तोरणादिनिर्माणकौशलं किं न भारतीयानां विज्ञानबोधं प्रमाणीकरोति? संस्कृतभाषायामेव निबद्धं वास्तुविद्या-शिल्पशास्त्रादिकमद्यापि समुपलभ्यते।

कुरुपाण्डवयुद्धेऽवसितेऽभिमन्युहन्तारमश्वत्थामानं कदाचिद् व्यासनारदसमीपवर्तिनं दृष्ट्वा वृकोदरो गदाहस्तस्तं प्रहर्तुकामः यदा प्रसरति स्म, पश्चाच्च श्रीकृष्णचालितं रथमारूढं धनञ्जयमागच्छन्तं विलोक्य द्रौणिः स्वप्राणरक्षार्थम् पाण्डवनिधननिदानम् इषीकास्त्रं निचिक्षेप। श्रीकृष्णनिर्देशेन धनञ्जयोऽपि स्वात्मरक्षार्थं यदा पाशुपतास्त्रत्यागाय सन्नद्धः, तदानीं व्यासनारदौ समुत्थाय द्रौणिमर्जुनञ्च प्रयुक्तास्त्रप्रतिसंहाराय सानुरोधं विज्ञापयामासतुः। महाभारते तद्वर्णनपाठेनैव साम्प्रतिक

माणविकास्त्रप्रयोगफलं स्मृतिपथमारोहति। महाभारते सौप्तिकपर्वणि चतुर्दश पञ्चदशाध्यायौ।

ततस्तदस्त्रं सहसा सृष्टं गाण्डीवधन्वना।
प्रजज्वाल महार्चिष्मद् युगान्तानलसन्निभम्॥
तथैव द्रोणपुत्रस्य तदस्त्रं तिग्मतेजसः।
प्रजज्वाल महाज्वालं तेजोमण्डलसंवृतम्॥
निर्घाता बहवश्चासन् पेतुरुल्काः सहस्रशः।
महद्भयश्च भूतानां सर्वेषां समजायत॥
सशब्दमभवद् व्योम ज्वालामालाकुलं भृशम्।
चचाल च मही कृत्स्ना सपर्वत-वन-द्रुमाः॥

* * *

अस्त्रं ब्रह्मशिरो यत्र परमास्त्रेण वध्यते।
समा द्वादश पर्जन्यस्तद्राष्ट्रं नाभिवर्षति॥

इति ऋषिद्वयवचसा धनञ्जयः पाशुपतास्त्रं प्रयुक्तमपि प्रतिसञ्जहार। अश्वत्थामा तु इषीकास्त्रप्रयोगमेव जानन् न प्रतिसंहर्तुमशकत्। ऋषिवाक्याद् अभिमन्युजायाया गर्भे स्थितं पाण्डवकुलाङ्कुरं परीक्षितं प्रति तदस्त्रं प्रेरयन् स्वसङ्कल्पबलादेकं पाण्डुवंशजं जघान। भगवच्छ्रीकृष्णकृपया च परीक्षित् क्षणं मृतोऽपि पुनर्जीवनमाप॥

जापभूमौ कतिपयवर्षेभ्यः पूर्वम् आणविकास्त्रप्रयोगाद् यथा दुर्दशा जाता, तद्रूपैव महाभारतस्य वर्णना दृश्यते। तदानीमपि विज्ञानपरिचयज्ञापकं मारणास्त्रमासीदिति निश्चेतुं शक्यते।

कियत् कालात् पूर्वं वृत्तपत्रादवगतं यत् महीशूरस्थिताद् एकस्माद् ग्रन्थागाराद् विमाननिर्माणपद्धतिपुस्तकं प्राप्तम्। वात्स्यायनकामसूत्राद् ज्ञायते यद् भारते चतुःसप्ततिसहस्रविधा गन्धयुक्तयः सम्भूताः। सङ्गीतशास्त्राङ्गरागवस्त्ररञ्जनमाल्यरचनादिललितकलानां धनुर्वेद-शार्ङ्गधरपद्धति-समराङ्गणसूत्रादिषु युद्धोपकरणविचारः परिचीयते।

आयुर्वेदो महासागर इव रसायनशास्त्रमिदानीमपि वरीवर्त्ति भारते

राष्ट्रे। आयुर्वेदस्यातुलनीयो महिमा नाद्यापि म्लानिमापद्यते। तादृश-महासिन्धौ निभृतानि रत्नान्ययत्नातिशयेनोपेक्षितान्यपि भारतवर्ष-मालोकदीप्तं कुर्वते।

गणितशास्त्रं ज्योतिषविद्या किं नाद्यापि भारत-गौरवमुद्दीपयति ? ज्योतिष-विद्यया सार्द्धं स्थापत्यशिल्पस्यापि सामञ्जस्यमद्भुततरं प्रतिभाति। शृङ्गपुरीयभगवच्छङ्कराचार्य्यमठस्य पुरोभागे द्वादशस्तम्भसमन्वितं नाटमन्दिरं यद् वर्त्तते, तत्र मेषादिद्वादशराशि सूचकास्ते स्तम्भाः, पूर्वाह्णे मठदेवतापूजकाः स्तम्भदर्शनेनैव बोद्धुं प्रभवन्ति कतमस्मिन् राशौ सूर्य्यो वर्त्तत इति। वैशाखामासे मेषस्तम्भे प्रथमालोकपातः पूर्वाह्णव्यापी दृश्यते एवमेवापरेषु मासेष्वपि।

कोणार्कमन्दिरस्योपरिभागे अयस्कान्तमणीनां तथा सन्निवेश आसीद् यथा मन्दिरमभि गभीरसमुद्रपथेनार्णवपोते समागते सति सर्वे तत्रत्य-लोहकीलकाः स्खलिताः सन्तः पोतं तं जलमग्नम् कुर्वन्ति स्मेति बहुजन-स्वकृता किंवदन्तो प्रचलति। पश्चाद् भारताधिकारमाप्ता आङ्गलाः शासका एवायस्कान्तमणीनां भ्रंशनं कृतवन्तः। अपूर्वोऽयं भास्कर्य्य-शिल्पप्रकारः, एवञ्च संस्कृतभाषायां राजनीतिग्रन्थाः अद्यापि सर्वजन-शिक्षणीया माननीयाश्च विराजन्ते। किं बहुना—साहित्यालङ्कारपुराणे-तिहासेभ्य आरभ्य षड़ङ्गसङ्गत-वेद-वेदान्त-सांख्यन्-याय-मीमांशा-योग-बौद्ध-जैन-चार्वाकादिदर्शनानि, आयुर्वेद-धनुर्वेद-नाट्यवेद-गान्धर्वशास्त्रार्थ-शास्त्र-शिल्पविज्ञानवार्त्ताकृषिशास्त्रवास्तुविद्यासमराङ्गणसूत्रान्ता संस्कृत-भाषा विश्वविस्मयकरीं समृद्धिमादधाना चिरं वरीवर्त्ति।

उन्मीलितनयना यदि वयं पश्येम, विवृतश्रोत्रद्वारा यदि वयं शृणुयाम, श्रद्धासन्नत-शिरसा यदि वयं प्रणमेम, तदा संस्कृतभाषा स्वरूपमव-गच्छेम, भारतस्य गर्वगौरवस्वरूपमनुभवेम, परानुकरणपरां दासमनो-वृत्तिं परित्यजेम। अहो स्मरामि भूतपूर्व-राज्यपाल हरेन्द्रनाथमुखो-पाध्यायमहोदयवचनम्—भो गभीरार्थद्योतकसंस्कृतभाषाविदो मनीषिणः भवन्त एव बहुविधदुर्दिनदुर्दशाराष्ट्रविपर्य्ययानविगणय्य संस्कृतभाषाया

दिव्यज्योति-श्चिरप्रोज्ज्वलं परिपालयन्तः स्थिताः, अतएव भवन्तः सर्वेषां नमस्याः। बहुविधभाषाणां बहुविध-कृष्टीनां समवायेन घटितस्यापि भारतवर्षस्य मेलनसूत्रं निहितमस्ति देवभाषाया अभ्यन्तरे देशे। मृतभाषेति कैश्चिद् जनगणैराख्यातापि वस्तुतः संस्कृतभाषैव चिरं जाग्रती परमतमं जीवन्ती चिरपुरातनी भवन्त्यपि चिरनवीना भाषा यस्या भाषाया अमृतमयादुत्साल्लब्धजन्मानः प्रायशः सर्वाः प्रदेशिक्यो भाषाः। अस्या भाषायाः प्रसादात् संघटिता निखिलभारतीया समग्रविश्वव्यापिनी सर्वजनीना काचनसंस्कृतिः। यद्यपि नेयं राष्ट्रभाषात्वेन परिगृहीता, तथापि सा हिन्दीवङ्गीयासमीयगुर्जरीयादीनां श्रेष्ठभाषाणां जननी इयं भारतस्य शाश्वती भाषा अन्तर्निहिता प्राणशक्तिरूपिणी स्थास्यति।

हे विद्वन्मण्डलि! भारतीयदर्शनस्य भारतीयधर्मस्य भारतीय-नीतेर्नास्ति तुलना। तेषामेव दीप्तदृष्टान्तरूपेण भवन्तो विराजन्तु। भारतवर्षस्य विश्वमैत्री-विश्वप्रीतिरूपिणीं दीपशिखां वहन्तो भवन्त एव दिग्दिगन्तेषु देशदेशान्तरेषु च पूर्णज्योतिर्विकिरन्तु इति। अहमपि कथयामि।

युगयुगसञ्चारिदीप्तिरादिजननी किल दिव्यभावानाम्।
जयति सदा चिरतरुणी या सुरवनितेव सुरवाणी॥

न हि जड़विज्ञानं संस्कृतज्ञानराज्याद् बहिर्भूतम्। यदिदं तथ्य-मुद्घाटितम् उद्भिच्चेतनामधिकृत्य विशिष्टविज्ञानविदा जगदीशचन्द्र-वसुमहोदयेन, तत्तादृशमेव दृश्यते मनुसंहितायाम्—

तमसा बहुरूपेण वेष्टिता कर्महेतुना।
अन्तःसंज्ञा भवन्त्येते सुख-दुःखसमन्विताः॥

उद्भिदामन्तश्चैतन्यं सुखदुःखवेदितञ्च शास्त्रे विज्ञाने च तुल्य-रूपेण प्रतिपादितम्। न्यायशास्त्रेऽपि युक्तिबलेन भग्नक्षतसंरोपण-हेतुना वृक्षाणां प्राणवत्त्वं निरूपितम्। ततो वीचितरङ्गन्यायेन कदम्बगोमकन्यायेन च शब्दानां गगने वायुमण्डले च प्रसारो न्याय-वैशेषिकमते वैज्ञानिकमतेऽपि स्वीकृतः। ... पातञ्जलयोगमते

सिद्धः शब्दनित्यत्ववादोऽपि शनैः शनैरङ्गीक्रियते वैज्ञानिकैः। इदानीं चन्द्रमण्डलाभियानद्वारा यथा वायुस्तरभेदा दूरगगनमण्डले माध्याकर्षण-शक्तिशून्यत्वं च प्रत्यक्षीक्रियते वैज्ञानिकैः, तथैवावहप्रवहादिवायुस्तरभेद-वार्त्ता आकृष्टिशक्तिविरामवादोऽपि संस्कृतशास्त्रे वर्णितौ वर्त्तेते। अयमस्ति भेदः शास्त्रेऽधिकारिविचारपूर्वकमध्ययनादिव्यवस्था सर्वत्र स्वीकृता। आधुनिकी विद्याशिक्षा तु अधिकार चिन्तामपेक्षते। अनधिकारगता विज्ञानविद्या तु प्रायेणानिष्टफलदा भवतीति सर्वैः प्रत्यक्षीक्रियते।

एतदवाञ्छित फलचिन्तयैव जड़विज्ञानस्यातिमात्रयानुशीलनं न प्रोत्साहितं शास्त्रकृद्भिः। यतः

अधिकारा विवेकेन मृत्पिण्डमर्दको नरः।
विनायकं विकुर्वाणो रचयामास वानरम्॥

अद्यत्वे जड़विज्ञानानुशीलनातिरेकाद् भूरिसंख्यक-महायन्त्रप्रवर्त्तनया फलं परिणमति विश्वव्यापिधनवैषम्यं, येन च धनिदरिद्रविरोधो। जलोच्छ्वास इव संक्रामकव्याधिरिव सर्वं विकुरुते देशम्। अतएव वोक्तं 'सर्वाकरेष्वधीकारो महायन्त्रप्रवर्त्तनम्' इति मनुना पातकमध्ये महायन्त्र-प्रवर्त्तनं गणितञ्च।

इदानीं संस्कृतभाषाया अधिक्षेपः समालोच्यताम्। केचन विद्वांसोऽपि मन्यन्ते यत् संस्कृतभाषा कदापि नासीत् कथ्यभाषा, नापि सर्वजनव्यवहारयोग्येति। पण्डितगोष्ठीमात्रनिरुद्धा व्याकरणादि-निगड़निबद्धा कृत्रिमा भाषा। अहो महानज्ञानविजृम्भितोऽयमध्यासः! तथाच स्मर्य्यते मनुवचनम्।

मुखबाहूरुपज्जानां या लोके जातयो बहिः।
म्लेच्छवाचश्चार्य्यवाचः सर्वे ते दस्यवः स्मृताः॥ इति।

वर्णबहिर्भूतां जातिमाश्रयन्तो ये नरा अपभ्रंशभाषाभाषिणो वा शुद्धसंस्कृतभाषिणो वा तेषां दस्युसंज्ञयाभिधानमिति। इदं भरतीय-पण्डितगोष्ठीबहिःस्थानां जनानां कथ्यभाषायाः प्रमाणम्।

अपि च रामायणे यदा लङ्कानगरेऽशोकवनवासिन्या सीतया सह

हनुमान् ननु कतमया भाषयालापं करिष्यतीति चिन्तितवांस्तदा—

यदि वाचं वदिष्यामि द्विजातिरिव संस्कृताम् ।
रावणं मन्यमाना मां सीता भीता भविष्यतीति चेत् ॥

संस्कृतवाचो व्यवहारो नासीत् तदा तादृशचिन्तावतार एव नाभविष्यत् । द्विजातिपदेन ब्राह्मण-क्षत्रिय-विशां साधरणीयं भाषेत्य-वगम्यते । अपि च प्राचीनानां शिलालिपीनां सहस्राणि भारतवर्षस्य दिग्दिगन्ते प्रकीर्णानि दृश्यन्ते । यदि जनानामबोध्येयं भाषा स्यात् तदा शिलालिपिषु तद् भाषापरिग्रहो वृथैवाभविष्यत् । जनगणबोधनायैव शिलालिपीनां विन्यास इत्यारोहितमेतद् विदुषाम् । वङ्गीयकथा सम्राड् वङ्किमचन्द्रेणापि मृणालिनीनामक-कथाग्रन्थे साहम्मदीयशासनकालेऽ-भारतीयभाषाभाषिभिः सार्द्धं वार्त्तालापयोग्या भाषा संस्कृतभाषैवासी-दिति लिखितम् । आन्तर्जातीय-भाषारूपतापि संस्कृतस्य ज्ञेयेत्यपि ध्येय-मस्माभिः, अतोऽस्या भाषायाः सार्वभौमत्वेन समग्रभारतीयजनानाम् ऐक्यविधानसूत्रम् मानवमनसुसाम्यबोधजननत्वं नीतिरीतिज्ञानोद्दी-पकतया शान्ति-सन्तोष-बलप्रदत्वञ्च । यदुक्तं पूर्वम् 'उइलसन' मोदयेना-प्रस्तुतप्रशंसारूपेण ।

निष्पिष्टापि परं पदाहतिशतैः शश्वद् बहु प्राणिनां
सन्तप्तापि करैः सहस्रकिरणेनाग्निस्फुलिङ्गोपमैः ।
छागाद्यैश्च विचर्वितापि सततं मृष्टापि कुद्दालकैः
दूर्वा न म्रियते कृशापि नितरां धातुर्दया दुर्बले ।

अस्या दुर्बल-त्वाभिधानेन व्याजस्तुतिरियं नाप्रस्तुतप्रशंसा । मयेदं निवद्यते—

दूर्वावन्नहि दुर्बला न पशुभिः स्याच्चर्व्यमाणा क्वचित् ।
नो पादाहतिगम्यतां विपहते नार्कत्विषा म्लायति ।
नो कुद्दालनिपातमद्य महिमा दिव्यां तनुं बिभ्रती
दैवी वाक् स्वबलेन जीवति विधेः शक्तिस्वरूपा हि सा ॥

अन्ते सविनयं निवेदयामि यत् समवेतानां विदुषां धैर्यहानिकरं कर्णज्वरदं मद्भाषणमिदं श्रवणः ... सर्वथा कृतज्ञतां

प्रकटीकरोमि। सम्मेलनस्यास्य सभापतिपदमयोग्यमपि मां समारोपयन्तो भवन्तः स्वयमाहृत्यानुशोचनादुःखं प्राप्नुवन्ति—स्वकर्मफलभाक् पुमानिति नीतिवाचं च स्मारयामि।

उपसंहृतौ सप्रश्रयं सकृतज्ञतासंवेदनं कथयामि यदेतत् सम्मेलनम् आद्यापीठस्थ श्रीरामकृष्णसंङ्घकर्तृपक्षाणाम् आर्थिकस्थानदानादिरूपसर्वविधसाहाय्यबलेनैव सम्पद्यमानं दृश्यते। तेभ्यो विद्वद्गणपक्षतो मदीयहृदयतश्च हार्दिकीं कृतवेदितां विनिवेदयामि।

एतत्सम्मेलनसम्बन्धि सर्वं पत्रपुस्तकादिमुद्रापणं श्रीमत्कार्त्तिकचन्द्र पण्डामहोदयेन प्रायेण विना पारिश्रमिकं निष्पादितमिति शतशो धन्यवादान् सपरिकराय तस्मै समर्पयामि। अन्येऽपि ये सहायकाः, सम्मेलननिर्वाहकाः विशेषतो सच्छात्री श्रीमती ब्रह्मचारिणी वेलातर्कवेदान्ततीर्था तेभ्य आशीरांशिं वितीर्य्य विरमामि। प्रार्थयेच,—

आद्ये देवि निवेदयामि यदिदं दीव्यद्दयासिश्रितौ—
जस्विश्रीसहिते! सुरेन्द्रमहिते! कारुण्यतः श्रूयताम्।
एषा संस्कृतसेविसङ्घसमितिर्वङ्गप्रदेशोद्भवा
न्यस्ता त्वत्पदपङ्कजेऽद्यकुसुमस्तोमाञ्जलिर्गृह्यताम्॥
दिनेयं समितिर्भवत्करुणया पीनेव भातु श्रिया
विद्याज्योतिरुदेतु भारतधरां व्याप्नोतु कृत्स्नामहो!
एकीभूतहृदः समस्तविबुधाः सम्भूय भूयः सुधा-
रूपां सिद्धिसमृद्धिमाशु विपुलामायान्तु मायोज्झिताः॥
त्वं विद्या प्रथमाथ वर्णविशदां गीर्वाणवाणीश्रियं
प्राप्ता सप्तभुवः पुनासि सततं श्रीमातृकारूपिणी।
सर्वज्ञाननिदानदानपिशुनां मुद्रां दधाना करे
माभैष्टेति सुतेष्टसाधनपरा भ्राजस्व चित्तेषु नः॥

—०—

महामहोपाध्याय-महाकवि-श्रीमत्-कालीपदतर्काचार्य्य
डि-लिट, महोदयस्य

# निखिलवङ्गसंस्कृतसेविसमितौ प्रधानातिथेरभिभाषणम् ।

ॐ 'आद्यां विद्यां सम्पदे सम्प्रपद्ये' ।

अयि भो भव्या विदितवेदितव्याः समभ्यागताः सभ्याः ! स्वागतं सुस्वागतं भवताम् । व्यक्तमप्राधान्ये सत्यपि समासन्ने कारुण्यवतां भवतां संस्कृतसेविसुहृत्प्रवराणां निष्कम्पयानुकम्पासम्पदा स्वल्पमात्रकाय कालाय प्रधानातिथिपदमध्यारोपितोऽस्मि ततस्तावत् प्राप्तकालामान्तरिकीं कृतज्ञतासन्ततिमिव यथाज्ञानसञ्चयमप्रपञ्चं किञ्चिद् विज्ञापयामि । तत्र प्रथममेव प्रस्तूयते समस्तसुरसम्भाविताया गीर्वाणवाण्याः पूर्वसमयोचिता विजयवाणी, यथा,—

जयति संस्कृतं देवभाषितं, भवति भारतं येन पूजितम् ।
प्रववृते श्रुतिर्येन च स्मृतिर्विविधदर्शनं मङ्गलायति ।
शमगुणोदयो येन मानसे पतति नैव तद् येन तामसे ।
वहति पावनी पावनी गतिः, सुकृतसाधनी साधुपद्धतिः ।
अजनि पूर्वतस्तद्धि संस्कृतं प्रतिगृहं जनैः शश्वदादृतम् ।
समभवत्ततस्तज्जयास्तृतं द्रविणमानयोः प्राप्तये वृतम् ।

ततः कारणादेव तदा सूक्ष्मसमीक्षणदक्षा अपि प्रेक्षावन्तः संस्कृतशिक्षायाः क्षेममयीमायतिं समीक्षमाणाः प्राणैः पणैः संस्कृतविद्यामात्मगतां कर्त्तुमत्यन्तं परिश्राम्यन्ति स्म । प्राचीनशास्त्ररहस्यानि चातिगभीराणि परिपश्यन्तो विविधानि शास्त्रव्याख्यानोपव्याख्यानादीनि, स्वतन्त्राणि वा निबन्धरत्नानि निबध्नन्तः संस्कृतविद्यायाः क्रमेण विश्वजनविस्मयजननीं समृद्धिं प्रद्योतयाञ्चक्रुः । किन्तु हन्त सुचिरात् पूर्वत एव महता दुर्दैवसम्पातेन गच्छतो रथस्य चक्रपरिवृत्तिरिव क्रमेण प्रवृत्ता गतिपरिवृत्तिः संस्कृतविद्यायाः । सम्प्रति सैषा क्रमप्रवृत्ता गतिपरिवृत्तिरत्यारूढिमुपगता । अद्यत्वे विद्यान्तरप्रियमार्गैरेवहता सैषा विद्या क्रमेण क्षीणक्षीणा प्रेक्षावतां

तत्पक्षपतितानां महते दुःखाय परिकल्पते। ततोऽपि महत्तरमिदं दुःखं, यदेतावत्कालं यावद् वयं महासुप्तिमग्ना इव संस्कृतविद्यायास्तत्सेवकानाञ्च क्रमोपनतां तां महादुर्गतिमुपेक्षमाणा एव स्थिताः। किन्तु परमिदं महासान्त्वनास्थानम्, यत् निखिलवङ्गदेशवास्तव्याः संस्कृतसेविनः संस्तूय संस्कृतविद्यायास्तथा तत्सेवकानां, सर्वविधयोगक्षेमपरिरक्षणाय निखिलवङ्गसंकृतसेविसमितिरिति नाम्ना काञ्चित् तथा परिषदं संघटयामासुः, या किल परिषत् सावधाना संस्कृतविद्यायास्तत्सेवकानाञ्च सकलयोगक्षेमपर्यवेक्षणपरा तदीयप्राचीनदशाविपर्यासेन समं परं सम्परायं विदधाना प्रेक्षावतां समाजेन समुत्प्रेक्षितं स्वकीयं साफल्यं सम्यक् सम्पादयिष्यति। अद्यतने काले सङ्घशक्तिरवश्यं फलोपधायिका भविष्यतीत्यत्राहित तावदस्माकं सुदृढो विश्वासः।

अथ संस्कृतसेविसमितेः कर्त्तव्यार्थेषु दिङ्मात्रमुदाहरामः यद्, वयं नैव परिहार्य्यं मन्यामहे।—तथाहि,—प्रथमतस्तावत् येन येन कारणेन संस्कृतविद्यायास्तत्सेविनाञ्च साम्प्रतिकी महादुर्गतिरापतिता, तत्तत्कारणकलापं सम्यगवधार्य्य तत्परिहाराय गतिश्चिन्तनीया। तत्र च कारणकलापे सर्वतः प्राधान्यमध्यास्ते संस्कृतविद्याया मानद्रविणाद्युपयोगराहित्यमेव। तद् यथा कथञ्चन प्रयत्नशतेन संस्कृतविद्यायां मानद्रविणाद्युपयोगिता सम्पादनीया। यद्येतदशक्यं, तर्हि सर्व एव प्रबन्धो विफलः स्यात्। संस्कृतविद्याया मानद्रविणलाभे कर्त्तव्ये संस्कृतसेविनासाङ्गलविद्यालयादौ परिग्रहाय संकृतविद्यायां विद्यान्तरसाङ्कर्य्ये यत्नः कार्य्यः। समित्या काले काले स्थानभेदेषु सभाधिवेशनं संघटय्य धर्मोपदेशादिभिः वैधकृत्येषु समाजस्य प्रवृत्तिर्जननीया। ततश्च याजनप्रतिग्रहादिमूलो मानद्रविणादिलाभः। प्रयत्नेन तथा स्थितिः समित्या प्रवर्त्तयितव्या, यथा राष्ट्राधिकारेण सुयोग्याः संस्कृविद्यासेविनः प्रभूतमानद्रविणाभ्यां सुसम्मानिता भवेयुः। नवीनग्रन्थादिकर्त्तारः शास्त्रतत्त्वविचारचतुराश्च विशेषतो मानं लम्भिताः स्युः। अन्तरान्तरा निबन्धपाठ-तत्समालोचन-स्पर्धामूलकनिबन्धनिवन्धन - संस्कृतवक्तृतादि-

प्रबन्धेन संस्कृतविद्यायाः सम्यक् समृद्धिः स्यात्। धर्मोपदेशेन नीत्युपदेशेन तथा अहिंसादिसार्वभौमधर्माद्युपदेशेन यदि जनसमाजस्य बुद्धिः सुनीतिसरण्यां प्रवर्त्तयितुं शक्येत, तदैवाद्यतने हिंसादिनानादोषकलुषिते जागतिकमहाविप्लवमये काले समितेरस्याः सुतरामितरविलक्षणं साफल्यं सम्पद्येत। दिङ्मात्रमिदं, अन्यत् स्वयमूहनीयं, तत् पर्य्यन्ते श्रीश्रीभगवच्चरणप्रान्ते सान्तरं निरन्तरं समभ्यर्थये—यथा—

पदे पदे समितिरसौ प्रवर्द्धतां
विदां स्थितिश्चिरमनया विचार्य्यताम्।
शिवां मतिं निदधतु राष्ट्रनायकाः।
इहानिशं दधतु हितञ्च सेवकाः।
समितिः कृतकृत्यास्तु कल्याणैर्बहुकर्मभिः।
समं राष्ट्राधिकारेण जनैश्चासौ विवर्ध्यताम्॥

इति—

संस्कृतसेविनामन्यतमस्य
श्रीकालीपदतर्काचार्यस्य

## अभ्यर्थनासमिति-सभापतेः

डक्टर श्रीमद् गोपीनाथशास्त्रिमहोदयस्य एम्-ए, डिलिट्,
पि-आर-एस्, प्रमुखनानाविधोपाधिभाजो
वाराणसेयसंस्कृतविश्वविद्यालयकुलपतिचरस्य

### स्वागतभाषणम्

अयि भोः सुरभारतीप्रेयांसो विपश्चिन्मूर्द्धन्याः! प्रथमत एव विनिवेदयामि मदीयम् आन्तरं स्वागतवचनम् अभ्यागतेषु देश-देशान्तरतो नानामण्डलोपमण्डलतश्च। समशेषक्लेशपेषिता अपि सुरवाणी-शिक्षणाभ्युन्नतये समर्पितप्राणा भवन्तो यात्रापथप्रयासम् आयासबहुलमप्यगणयित्वा यदस्मिन् पावने

सुरधनीप्लावितपदे दक्षिणेश्वरान्तःपातिनि साक्षादाद्याशक्तिपीठे समवेता मणिकाञ्चनसंयोगसौभाग्यं स्मारयन्तोऽस्मान् कृतार्थीकृत्य विराजन्ते ।

को वास्त्यत्र विस्मयावकाशो यतो हि प्रतिकूलभावधारापर्याकुलेऽपि भारतवर्षे विशेषतः पश्चिमवङ्गप्रान्ते यैषा क्षीणधारा संस्कृतशिक्षायाः परिलक्ष्यते तत्र हि तत्रभवतां दधीचिसदृश आत्मत्याग एव कारणम् संस्कृतसेवाव्रतिनां श्रीमताम् ऐकान्तिकस्वार्थविसर्जनबलादेव राष्ट्राधिकारैर्वञ्चितापि सामाजिकैरुपेक्षितापि भारतजीवातुभूतैषा दैवी भारती कथमपि जीवन्ती लक्ष्यते ।

अतएव धन्यवादप्रदानप्रमुखरोचक्रवाङ्मात्रीव भवदीयमहत्त्वस्य योग्या स्वीकृतिर्न स्यादेवेतिकृत्य न मया क्रियते किमपि, केवलञ्च सम्मेलनपक्षतः साधुवादः शतशः कृतज्ञता चास्मदीया विनिवेद्यते स्वान्तत एव ।

महदेतदानन्दनिदानं तत् सत्यं संस्कृतसेविनो भवादृशा अपि सन्नद्धाः स्वाधिकार-रक्षणाय निखिलवङ्ग-संस्कृतसेविसमितिशीर्षके संस्थाने वर्त्तमानाः प्रयत्नसाफल्यार्थं यतन्ते, यतो हि साम्प्रतिके समये सर्व एव स्व-स्वाधिकारायैव यतमाना अपरस्य मर्यादाधिकारादिकमुपेक्षन्ते । यदि स्वामर्यादाधिकारौ रक्षणीयौ, तर्हि स्व-प्रयत्नबलादेव तावाधातुं यतनीयौ स्वेषामेव तत्र चेष्टा विधेयतया अपेक्ष्यमाणा वर्त्तते नेतरेषामित्येतादृशी प्रचेष्टा भवतां सुतरामेव प्रशंसामर्हति ।

महच्चेदं दुःखकरं यत् स्वतन्त्रेऽपि भारते विशेषतः पश्चिमवङ्गेऽस्मिन् नाद्यापि लभते समुचितस्थानं भारतीयसर्वभाषाप्रसूतिरपि विश्वजनविस्मयजनन्यपि सर्वज्ञानविज्ञानप्रसविन्यपि संस्कृतभारती । यद्यपि संस्कृतविश्वविद्यालयादिस्थापनया संस्कृतविदां मर्यादास्वीकृत्या च राज्यान्तरेषु राष्ट्राधिकृद्भिस्तत्तद् राज्ये संस्कृतस्य स्थानम् उररीकुर्वाणैः संस्कृतशिक्षायाः समुन्नतये किंचिदपि प्रयत्यते, केवलमद्यत्वेऽवि पश्चिमवङ्गे पश्चिमवङ्गीय-राज्याधिकारैः संस्कृतशिक्षायाः कृते तथा काचनापि व्यवस्था न विहितेति ।

एतत्तु शक्यते प्रतिपादयितुं दृढ़तयैव यत् कतिपयवृत्तिव्यवस्थापनमात्रेण मधुरवचनव्यवहृतेन वा संस्कृतं साम्प्रतिकक्षयदशोपमुक्तं स्यात्, यथोपयुक्तभेषजमन्त्रात्यावश्यकं परिपोषणव्यवस्थया समं तत्प्रयोगः करणीयः राष्ट्रियव्यवस्थायां

योग्यस्थानमस्य कृते विधातव्यम् संस्कृतविदुषां संरक्षणेन सार्द्धं संस्कृतविद्यार्थिनां भविष्यज्जीविकासंस्थापनमत्यावश्यकम् ।

अत्र तावदस्मन्मते प्राथमिक-माध्यमिकविद्यालयेषु तथैव महाविद्यालय-विश्वविद्यालयेषु च संकृतविदां कर्माधिकारो नियमेन संरक्षणीयः सर्वत्र चावश्य-पाठ्यत्वेन संस्कृतस्य व्यवस्थापनं विधेयम् । संस्कृतशिक्षायाः परिचालनार्थं कस्यचित् संस्कृत-विश्वविद्यालयस्य स्थापनमचिरादेवापेद्यते । राष्ट्राधिकारे च संस्कृतशिक्षायाः कृते विशेषशिक्षाधिकारव्यवस्था तत्र कल्याणकरी भविष्यति । एतत्कृते वर्त्तमानपाठ्यसूच्या अपि परिवर्त्तनं प्रयोजनीयसंस्कारो वा कर्तव्य एव ।

बहुतरसमस्यापरिपीड़ितस्य पश्चिमबङ्गस्य यथार्थकल्याणं यदि काम्यं स्यात्तर्हि भारतीयादर्शकृष्टिसंस्काराधिष्ठानभूतायास्तथा कल्याणवाणीपरिवाहि-काया लोकमङ्गलविधायिन्या गीर्वाणवाण्याः पदसरोजमेवाश्रयणीयम् । न केवलं कतिपय-जनानां जीविकार्थमेव संकृतस्य परिपोषणमावश्यकम् अपि तु विषमभावविप्लुतानामपि जनानां समेषामेव मानवानां विशेषतो भारतीयानां सर्वथा श्रेयसे सस्कृतोज्जीवनपरिपोषणे प्रयोजनीये ।

केवलवचसा नैतस्य समाधानं सम्भाव्यते यथार्थकार्यद्वारैवैतस्य समाधानं स्यात्, तस्मात् तत्कृतसंकल्पैर्भवद्भिस्तत्साधनाय निरन्तरम् अनलसप्रचेष्टा विधेयैवेति । पन्थास्तु भवतां न खलु सुगमः परञ्च कण्टकाकीर्ण एव । अथापि यदि दृढ़प्रयत्नैर्भवद्भिश्चेष्ट्येत कालेन तत्फलमवश्यमेव लभ्यं स्यात् । 'सङ्घ-शक्तिः कलौ युगे' इत्याभाणकं नानृतम् । यदि भवन्तः सत्यमेव सन्नद्धाः स्यु-स्तर्हि भवतामतिक्रमे कस्यचिदपि कापि शक्तिर्नैव स्यात् । विरुद्धवातावरण एव समुद्यमः सपरिकरः फलमाप्नोति भवतां सम्मिलितप्रयासेनैव विरोधी विश्रान्तिमुपेयात्, गीर्वाणवाणीं प्रति सर्वेषामेव चित्तं समाकृष्टं भूयात् ।

अयि भो वैजात्यगगनविच्छुरितालोकविभ्रान्तदृष्टयो भारतीयाः ! पश्यन्तु भवन्तो भवतां स्वदेशशिक्षाकृष्टिसंस्कृतीः, भवताम् अभिलषितेषु किं न वर्त्तत एतासु ? यदि स्वकीयकाम्यं स्वगृहे नैव पूर्णं स्यात्तदा गृहान्तरे गमनं समीचीनतया प्रतिभातं स्यात् ; किन्तु स्वगेहे अस्ति वा नास्ति वेति अपश्यन्नेव

नेत्रे निमील्य गेहान्तरं कश्चिद् गच्छेत्, तत् किं समीचीनं भवेत्? स्वजननीं क्रन्दयतः परजननीसेवया किं मातृभक्तिः प्रकटिता स्यात्? अतएव आगच्छन्तु भवन्तः समवलोकयन्तु भवतां जनन्याः कीदृशी सम्पद् वर्त्तते। यदि जनन्याः सम्पद्विहीनतां दैन्यं वा पश्येयुस्तदा सम्पद्विशेषलाभाय अपरस्याः सेवां करिष्यन्ति।

अलं बहुना आशास्यते न चिरं स्थास्यति नभसि अमान्धकारः, पुनरुदेष्यत्येव तमोराशिं विनाशयन् सकललोकचित्ताह्लादकरो शुभपूर्णालोकराशिरिति शुभमस्तु भवतां तथा विश्ववासिनां सर्वेषामेव इति सम्प्रार्थ्यते परमेशपादाब्जयुगले।

—:०:—

## निखिलवङ्गसंस्कृतसेविसमितेः प्रथमप्रादेशिकसम्मेलनम्।

द्विनवत्यधिकाष्टादशशततमे शाकाब्दे सौरपौषमासस्य चतुर्विंशतितमे पञ्चविंशतितमे च दिवसे दक्षिणेश्वरे पुण्यक्षेत्रे आद्यापीठे महता समारोहेण निखिलवङ्गसंस्कृतसेविसमितेः प्रथमं प्रादेशिकसम्मेलनं सम्पन्नम्। तत्र प्रथमदिवसे वेदगान-प्रारम्भिकसङ्गीतानन्तरम् अभ्यर्थनासमितेः सभापतयो विश्रुतकीर्तयः सम्माननीया डक्टर श्रीयुक्त-गौरीनाथशास्त्रीमहोदयाः समागतानतिथीन् स्वागतेनाभिनन्द्य साम्प्रतिके काले प्राचीनधारया सुरभारतीसेवकानां दुर्दशामुपवर्ण्य समुपदर्श्य चाधुनिके वैज्ञानिकेऽपि युगे मानवजीवने शान्तिप्रतिष्ठार्थं जड़विज्ञानादिसमुन्नतावपि च संस्कृतभाषया विलिखितानां शास्त्राणां सम्यगुपयोगित्वं, तत्र तत्र सर्वकाराणामानुकूल्यं च स्वार्थसिद्ध्यर्थमेव संस्कृतसेविनः प्रति सर्वेषां दृष्टिं समाकर्षयन्। ततश्च महामान्या उद्बोधकाः पश्चिमवङ्गमुख्यसचिवाः श्रीयुक्त निर्मलचन्द्र सेनगुप्त आइ, सि, एस, महोदयाः संस्कृतभाषायाः सरलीकरणे पुण्यश्लोकानां विद्यासागरमहोदयानामवदानं संस्मृत्य वास्तव-

सामाजिकजीवनेन सह तस्या भाषायाः सामञ्जस्यविधानाय लौकिक-वैदिकादिभेदभिन्नायाः संस्कृतविद्यायास्तथा संस्कृतसाहित्यदर्शनादिगवेषणायाः फलमुपवर्ण्य समाजोपकृतौ पण्डितान् सयाहूय सर्वाकारानुकूल्यं स्वीकृतवन्तः । परस्परं विभिन्नमतवादिनां ये केचन वा राष्ट्राधिकारिणः स्युस्तेऽवश्यमेव भारतवर्षस्यैक्यसंसाधिनीं संस्कृतभाषामिमां रक्षितुं कृतप्रयत्ना भवन्त्येवेति हार्दिकीं संस्कृतप्रीतिं न्यवेदयन् । अनन्तरं मूलसभापतयः पण्डितप्रकाण्डा महाकवयो डः श्रीयुक्त श्रीजीवन्यायतीर्थ एम, ए, डि-लिट् महोदयाः समयोपयोगिना तेषां सुदीर्घभाषणेन सर्वेषां मनांसि समाकर्षन् । तत्र विशेषतः संस्कृतशास्त्रेभ्यः समुद्धृत्य वैज्ञानिकी समुन्नतिः प्राचां प्रदर्शिता । ( तेषां स्वतन्त्रं भाषणं पठनीयम् । ) अवसिते मूलसभापतिभाषणे प्रधानातिथिपथमलङ्कुर्वाणाः पूजनीयचरणा महामहोपाध्याया महाकवयः डः श्रीयुक्त कालीपदतर्काचार्य्यमहोदया वार्धक्यवशादसमर्था अपि संक्षिप्तेन सारगर्भभाषणेन संस्कृतभाषायाः समुन्नतये सर्वान् विपश्चितः सम्भूय कार्य्यसम्पादनाय समनुरुध्य चेमां समितिं शुभाशिषा समवर्धयन् । ततः परमधार्मिकाः पश्चिमवङ्गभूमिराजस्वसचिवाः श्रीयुक्त जितेन्द्र नाथ मुखोपाध्याय आइ, ए एस्, महोदया ओजस्विन्या भाषया संस्कृतभाषायाः साहित्यस्य शास्त्रस्य च विजयं घोषयन्तः श्रीमद्भागवताद् 'यावद् भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम् । अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हती'ति भारतीय-साम्यवादस्य स्वरूपं प्रदर्श्य संस्कृतभाषायाश्च भारतीयराष्ट्रभाषात्वेन ग्रहणाय ते प्रत्यहमेव प्रार्थयन्तीति विज्ञाप्य ते च भाषामिमां सर्वोपयोगिनीं कर्तुं न्यवेदयन् । विविधविशृङ्खलाविजृम्भितेऽपि कलिकातोपकण्ठे कालोऽयं नितरामानन्ददायक एवासीत् ।

समवसिते प्रथमाधिवेशने समारब्धे च सांस्कृतिकानुष्ठाने पश्चिमवङ्गीयोपशिक्षासचिवाः श्रीयुक्त निखिलेन्द्रनाथ आखड़ाधारी एम, ए महोदयाः संस्कृतभाषाया वर्तमानकालिकं समुपयोगित्वं वर्णयन्तो नाट्यादिकलायामपि भाषाया अस्या माधुर्य्यं समदर्शयन् । ततश्चाद्यापीठ-बालिकाश्रमसंस्कृतमहाविद्यालयछात्रीवृन्दैर्ब्रह्मचारिणी श्रीवेलादेवी एम, ए, तर्कवेदान्तव्याकरणतीर्थाविरचितं महीयसी गार्गीति नामधेयं रूपकमभिनीतं परिवेषितं च सङ्गीतादिकम् ।

द्वितीये दिवसे संस्कृतभाषया वितर्कभाषणादिमूलिका विविधाः-प्रतियोगिताः समनुष्ठिताः। वितीर्णाश्च पुरस्कारा विजयिभ्यः प्रतियोगिभ्यः। समनुष्ठितायां धर्मसभायां डः श्रीयुक्ता वासन्ती देवी एम, ए, डि-लिट् महोदया भगवतीं कथां परिवेश्य सामाजिकानां चेतांसि समतोषयन्। अन्तिमाधिवेशने विशिष्टसांवादिकाः श्रीयुक्त-नन्दलाल-सेनगुप्त-महोदयाः साम्प्रतिके कालेऽपि संस्कृतशिक्षायाः प्रयोजनीयतां स्वीकृत्य सारगर्भं भाषणं दत्तवन्तः नचिकेता इति नामकं रूपकं सुष्ठु परिवेशितं महीयसी गार्गीतिरूप-काभि-नेत्रीभिः।

दिवसद्वये मान्यमान्यानां डक्टर श्रीयुक्त गौरीनाथशास्त्रिमहोदयानां सभापरिचालनशैली सर्वथा प्रशंसनीया। एतेषां हार्दिकप्रयत्नेन सुदूरग्रामेभ्यः समागता ब्राह्मणपण्डिताः सुतरां सन्तुष्टाः। संस्कृतभाषाया भूत्यै प्राचीनानां संस्कृतसेविनामवदानं स्मारयित्वा भारतगौरवरक्षणाय चैकमत्येन सम्भूय नवीन-ग्रन्थप्रणयेन गवेषणया च प्राणप्रियान् पण्डितानाहूय तेषां शास्त्रिमहोदयानां सम्भाषणं नितरां मनोहरं जातम्। एतेषां सङ्गेन दिवसद्वयं पण्डिताः स्वर्गराज्ये स्थिथा इत्यन्वभवन्। ब्रह्मचारिण्याः श्रीवेलादेवी तर्कवेदान्ततीर्थाया अतिथिसेवा नितरां प्रशंसनीया। विदुषीयं सर्वदा सर्वथा समागतेभ्यो विशेषतो विदेशागतेभ्यो ब्राह्मणपण्डितेभ्यः सम्मानयन्ती मातृवत् तथा तथा समाचरत् येन ते ते ब्राह्मणपण्डिता मातृक्रोड़स्थिता इवामन्यन्त। तत्रत्य कर्तृपक्षा अपि सर्वे साधुवादार्हास्तेषां विनय-सौजन्यपूर्णव्यवहारेण। सम्पादक-मण्डली च सविशेषं प्रयत्नं कृतवती। नवीनख्याप्यस्य प्रतिष्ठानस्य प्रतिष्ठा-सौकर्याय सम्पादकानां चेष्टा सर्वथा प्रशंसार्हा। कार्यान्तरव्यापृता अप्येते महान्तो महान्तं प्रयत्नं कृत्वा स्वल्पदिवसेनैव प्रतिष्ठानमिदं यथा प्रतिष्ठितवन्त-स्तथा हार्दिकीं प्रीतिं विना ते तथा कर्तुं न शक्नुयुः। वर्षीयसां सभापतीनां परिश्रमः सुतरामनुकरणयोग्यः। सर्वे तेऽर्हन्ति साधुवादान् येऽत्र समागताः अन्ततस्तृप्तिलब्धवन्तः। समेषां शान्तिर्भूयादिति।

—:o:—

# श्रीमद्भगवद्गीतायां भक्ति-कर्म्मवादौ

( निबन्धकः—अध्यापकः श्रीरवीन्द्रकुमारसिद्धान्तशास्त्री )

( पूर्वतोऽनुवृत्तम् )

"यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः
स यत् प्रामाणं कुरुते लोकस्तदनुवर्त्तते ॥ इति ।"

'महाजना येन गताः, स पन्थाः' इति महाजनवाक्यं संस्मृत्य प्रायश एव मानवाः कर्म्मणि प्रवर्त्तन्ते। तेनैवाहमपि जनकादीन् महाजनानुदाहरणत्वेन तुभ्यं विज्ञापितवान्। त्वमपि महाजन एव। अतस्त्वया यथाचरिष्यते प्राकृतैर्ज्जनैस्तदेवादर्शत्वेन ग्रहीष्यते। तेन च लोकशिक्षार्थमपि विद्यते ते कर्म्म सम्पादनप्रयोजनम्। अत्र ममोपदेशमिमम्।

"परोपदेशे पाण्डित्यं सर्व्वेषां सुकरं नृणाम्।
धर्म्मे स्वीयमधिष्ठानं कस्यचित्तु महात्मनः ॥"

इति स्मरणान्न केवलं परोपदेशपाण्डित्यरूपेनापि जानीहि; यतो मया स्वयमप्येवमाचर्य्यते ; इत्युक्तम्—

"न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन।
नानवाप्तमवाप्तव्यं वर्त्त एव च कर्म्मणि ॥" इति।

का कथा मर्त्त्यभोगानां, स्वर्गीयभोग्यपदार्थान् प्रत्यपि नास्ति मे स्पृहा। तथा 'स्वर्गादप्यतिरमणीयानि पातालानी'त्यङ्गीकारे यद्यपि पातालीयभोगानां स्वर्गीयेभ्योऽपि लोभनीयता सम्भवति, तथापि तत्रापि नास्ति मे स्पृहालेशः। तेन स्पृहाभावात् त्रिलोके किमपि मे कार्य्यं तव मतेन न भवेत्। अपि च लोकत्रये सर्व्वमेव पदार्थजातं मया लब्धमिच्छामात्रेण लब्धव्यञ्च। तथाप्यहं कर्म्मण्येव प्रवर्त्ते। कथं त्वमेवं प्रवर्त्तसे, इत्याह—

"यदि ह्यहं न वर्त्तेयं जातु कर्म्मण्यतन्द्रितः।
मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ ! सर्व्वशः ॥" इति।

अहञ्चेन्निरलसभावेन कर्म्मणि न प्रवर्त्ते, तदा महाजना येन गताः स

  

पन्थाः' इति नयेन सर्व्वं एव मानवा मामनुसृत्य भविष्यन्ति कर्म्मविरताः।

ननु भवन्तु नाम ते कर्म्मविरतास्तेनास्माकं का हानिरित्याह—

"उत्सीदेयुरिमे लोका न कुर्य्यां कर्म्म चेदहम्।
सङ्करस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः॥" इति

अहञ्चेत् कर्म्म न करामि तदा कोऽपि तन्न करीष्यतीति प्रागुक्तम्। तेन चेत् सर्व्वे प्राणिनः कर्म्म परित्यजन्ति, तदा प्राणिजगदिदं ध्वंसं यास्यति। तत्रायं ध्वंसप्रकारः—ब्राह्मणा भविष्यन्ति तपोविरताः तेन च ज्ञानचर्च्चाया अभावादज्ञानमेव ग्रसिष्यति मानवान्। क्षत्रियाश्च भविष्यन्ति रणविमुखास्तेन च राक्षसैर्दानवैश्च साधयिष्यते सर्व्वनाशः मनुष्याणाम्। वैश्यानां वाणिज्यवृत्तिविरतेर्लोकानामन्नवस्त्रादेरभावो भविष्यत्यपरिहार्य्य एव। शूद्रैश्च परित्यक्ष्यते सेवावृत्तिः। तेन शुश्रूषणस्याभावात् सर्व्वं एव वर्णा विपन्ना भविष्यन्ति। यज्ञादिकर्म्मणां विरतौ भविष्यति वृष्ट्यादेरभावस्तेन स्यादन्नाभावस्तेन चापि जगतो ध्वंसो दुर्निवार एव भवेत्। अनेनैव प्रकारेण केवलं भगवतः कर्म्मपरित्यागमालम्ब्य सर्व्वे प्राणिनो ध्वंसं यास्यन्ति। न केवलमेतावदेव। दुष्टदमनरूपकर्म्मणोऽभावाद् दुर्व्वृत्ता दुष्कर्म्माण्याचरितुमणुमात्रमपीतस्ततो न करिष्यन्ति। तेन हि वैधकर्म्मणो निवृत्तौ दुष्कर्म्मभिर्ज्जगत् परिपूरितम्भवेत्। तेन च वर्णसङ्करादीनामपि सम्भवोऽपरिहार्य्यः स्यात्। वर्णसङ्करैर्यथा कुलधर्म्मा जातिधर्म्माश्च नश्यन्ते, तेन च प्रजानां विनाशो भवेत्तत् प्रागेव वर्णितम्।

दृश्यते हि लोकेऽस्मिन् मूढ़ाः मानवाः नितरामासक्तिमापन्नाः कर्म्माणि सम्पादयन्तीति। तेषां तादृशानि कर्म्माण्युदाहरणरूपेण गृहीत्वा ज्ञानिनोऽपि जनाः नितरामनासक्ताः सन्तः तद्वदेव कर्म्माणि सम्पादयन्तु। मूढ़ानां कर्म्माणि ज्ञानिभिरप्यादर्शतया ग्राह्याणि, परित्याज्या तु केवलमासक्तिरेव! अत्रोक्तम्—

"सक्ताः कर्म्मण्यविद्वांसो यथा कुर्व्वन्ति भारत !
कुर्य्याद् विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥" इति ।

प्राकृता जनाः 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिश्रुतिमालोक्य श्रुत्वा वा वैधव्यादीनां निवारणाय सावित्रीव्रतादेश्च विधानं विज्ञाय केवलं यथोक्तफललाभायैव तत्तत् कर्म्माचरन्ति। श्रीकृष्णस्य मतेन तादृशानि फलवासनासमन्वितानि कर्म्माणि नितरामज्ञजनोचितान्येव। तथापि स कृपापरायणो भगवानज्ञानामपि तेषां बुद्धिभेदनं नानुमोदयति। ये तु मनसा कर्म्मफलं त्यक्तुमसमर्थास्तेषां बाह्यिकत्यागमात्रं वृथैवेति तदभिप्रायः। एतस्मादेव कारणात्तेन प्राक् 'कर्म्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्' इत्यादि निगदितं, साम्प्रतमपि च—

"न बुद्धिभेदं जनयेदज्ञानां कर्म्मसङ्गिनाम् ।
जोषयेत् सर्व्वकर्म्माणि विद्वान् युक्तः समाचरन् ॥"

इति कथितम्। श्लोकस्यास्य द्वितीयार्द्धेन विज्ञापितं ज्ञानिना संयतेनापि जनेन कर्मान्येव साधनीयानीति।

प्रकृतियेव गुणैः कर्म्माणि सम्पादयति। न तु कस्यापि प्राणिनः स्वयं कर्म्म कर्त्तुं विद्यते सामर्थ्यम्। यस्तु प्रकृतेर्गुणैः क्रियमाणानि कर्म्माणि स्वयं कृतानि मन्यते, मूर्ख एव सः। अस्यायमभिप्रायः— मानवः प्रकृतेर्नियमेनैव यत् किञ्चन कार्य्यं कर्त्तुं शक्नोति, न तु केवलया स्वेच्छया। तथा हि, दारुणाया रुजा भृशमाक्रान्तः कश्चिज्जनः पुनः पुनश्चेष्टमानोऽपि स्वस्थजनोचितं किमपि कर्म्म सम्पादयितुं न शक्नोति न च दृश्यते सामर्थ्यमन्धस्य दर्शने पङ्गोश्च गमने। न च कश्चिन्मनुष्यो व्योमयानमनाश्रित्य गगनमार्गे उड्डीनो भवितुं शक्नोति। स्वयञ्चेन्मानवः कर्म्मणां कर्त्ताभविष्यत्तदा तादृशमपि यत् किमपि कर्म्म स एव सम्पादयितुमशक्ष्यत्। अतो ये कर्म्मसम्पादने स्वकीयं सामर्थ्यं विघोषयन्ति मूढा एव ते, इत्यवगन्तव्यम्। अत्रोक्तम्—

"प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः ।
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ॥" इति ।

अतो यो यथार्थज्ञानविमण्डितः, स तादृशान्यापातदृष्ट्या स्वयं कृतवल्लक्षितानि कर्म्माणि परमार्थतः प्रकृतिगुणैरेव कृतानीति विज्ञाय तेष्वासक्तो न भवेत्। अतस्त्वयाप्येवमनासक्तेन कर्म्माणि सम्पादनीयानीति लक्षितोऽत्र भगवदुपदेशः। अत्रायं श्लोकः—

"तत्त्ववित्तु महाबाहो ! गुणकर्म्मविभागयोः।
गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते ॥" इति।

मोहग्रस्ता ये मानवाः प्रकृतेर्गुणैः कृतान्यपि कर्म्माणि स्वयं कृतानि मन्यन्ते, तेषां ज्ञानमसम्पूर्णम्। ते तु प्रकृतेर्गुणैरेव तथा मुह्यन्ते। अतस्तेषां तादृशान् मूढानपि मोहाद् मोचयितुं न यतितव्यम्; न हि कदाप्युपदेशो मूर्खाणामुपकाराय भवतीति ज्ञानवद्भिरुद्घोषितम्। यथा —"उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये" इति। यदा तु मूर्खस्यापि जिज्ञासावर्त्तते, तदा तस्मा उपदेशः प्रदातव्य इत्येव सुधियां केवल-मनुपयुक्तायैवोपदेशदानं निषिद्धम्। उक्तञ्च भगवता—

इदन्ते नातपस्काय नाभक्ताय कदाचन।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥" इति

तत्र भवता सदानन्देन वेदान्तसारनामग्रन्थे ज्ञानाधिकारिणो लक्षणं निरूपयितुकामेन निगदितं "विधिवदधीत वेदवेदाङ्गत्वेनापाततोऽखिलवेदार्थोऽस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्ज्जनपुरःसरं नित्यनैमित्तिक-प्रायश्चित्तोपासनानुष्ठानेन विगतनिखिलकल्मषतया नितान्त निर्म्मलः स्वान्तःसाधनचतुष्टयसम्पन्नः प्रमाता" इति। तेनैव। सङ्गच्छते भगवतोऽधोलिखितोक्तिर्यथा—

"प्रकृतेर्गुणसंमूढ़ाः सज्जन्ते गुणकर्म्मसु।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥" इति !

—क्रमशः

# श्रीश्रीसरस्वतीस्तोत्रम्

निबन्धकः— श्रीरवीन्द्रकुमारसिद्धान्तशास्त्री

या ब्राह्मी श्रुतिसूक्तपूजितगुणा गान्धर्व्ववेदप्रसू—
नित्यं चेतसि राजते सुविदुषां तत्त्वार्थचिन्तामयी ।
नीत्वा ध्वंसमसह्यदुःखनिवहं सत्काव्यलीलामृतै—
र्नित्यानन्दममोघमाशु कुरुते सा मेऽस्तु चित्ते स्थिरा ॥१

यस्या वाहनहंसरूपमगमच्चित्तं सतां चिन्तनै—
र्हृत्पिण्डश्च सरोवरत्वममलं हंसस्य तस्यासनम् ।
यस्याः काव्यशरीरमीप्सितमदः सच्चिन्तनैर्व्वर्णकै—
र्नित्यं संश्रयते ततश्च रसिकैः श्वेता हि सा कथ्यते ॥२

काव्यालापरसैरतीव मधुरैर्वेदार्थभाष्यात्मकै—
र्ज्ञानं नित्यमतीवगुह्यममितं चित्ते सतां भासते ।
तच्चन्द्रस्य कलात्मकं सुकविभिः प्राह्लादकं कल्पितं
द्वन्द्वञ्च स्तनयोः सुधारसमयं स्वर्गीय-काव्यात्मकम् ॥३

यामाराध्य तपोभिरादिकवयः कीर्त्तिं परां लेभिरे
त्यक्त्वैश्वर्य्यमपारमात्मरतयो वन्याञ्च वृत्तिं पराम् ।
व्यास-च्यावन-कालिदासकवयो यस्याः कृपामाश्रिताः
सा देवी भुवि दुर्लभा सुनियतं चित्ते सतां राजताम् ॥४

पद्मासने सिततमे कविचित्तरूपे
नित्यं स्थिता श्रुतिमती कवितामयी या ।
चैतन्यरूपममलं सततं श्रितास्ते
सा भारती विजयतां मुनिमात्रदृश्या ॥५

या पुस्तकं मतिमतां हितसिद्धिहेतुं
ज्ञानाकरं सुविमलं श्रुतिशास्त्ररूपम् ।
धृत्वा करे द्रुहिणजा सितलेखनीञ्च
संराजते शुभमयी भवताद् बुधे सा ॥६

रत्नाकरश्च्यवनजः कलुषोऽपि दस्युः
संपूज्य यां हतमतिः सुकवित्वमाप्नोत् ।
सा कालिदास-कविराजकवित्वहेतु—
र्भूयात् सदा शुभमतिर्जगतां हिताय ॥७

यस्याः कृपां समुपलभ्य मनुष्यवर्य्याः
क्षौणीतलेऽपि सुरतां सुतरां प्रयान्ति ।
सा ब्रह्म-विष्णु-नमिता श्रुतिगीतिपूता
स्याच्छ्रेयसे सुविदुषां सुरवाक्स्वरूपा ॥८

ललित-सरसकाव्यं लोककल्याणहेतु
विरचितमिह कृत्वा ब्रह्मतां याति मर्त्यः ।
सुमधुरकविता सा कथ्यते तस्य पुत्री
निजजनकविधात्रा स्वाद्यते सैव हर्षात् ॥६

निखिलभुवनपूज्या ज्ञानविज्ञानदात्री
कलुषनिवहहन्त्री सर्वहर्षप्रदात्री ।
सकलहृदयसंस्थामज्ञतां द्रावयित्वा
चिरमिह नरलोके राजतां ब्रह्मपुत्री ॥१०

यस्याः स्मरणमात्रेण मूर्खता प्रपलायते ।
नित्यविज्ञानरूपा सा चित्ते तिष्ठतु मे स्थिरा ॥११

दौर्म्मनस्यहताशं या ज्ञानदीपेन भास्वता ।
सञ्जीवयति नित्यं सा राजतां हृदि मे स्थिरा ॥१२

॥ —:०:— ॥

# समालोचनम्

## मुग्धबोध-व्याकरणस्य तर्कसंग्रहस्य च नवीनं संस्करणम् ।

काँथिराष्ट्रियसंस्कृतमहाविद्यालयस्य न्यायाध्यापकैः श्रीनिरञ्जनस्वरूप-ब्रह्मचारिनवतीर्थन्यायवेदान्ताचार्य्यमहोदयैः कारकसमासयोः दुर्गादासकृतटीका-सहितं प्रथमद्वितीयपरीक्षयोः पाठ्योपयोगि मूलानुवादसमलङ्कृतम् नवीनं संस्करणं सम्पादितम् । तदेतत् सर्व्वेषां व्याकराणाध्येतॄणां विद्यार्थिनां परमो-पकारजनकतया अतीव रुचिकरं जातम् । तर्कसंग्रहश्च दीपिकासहितः मूल-दीपिकयोरनुवादभाष्यटिप्पनीभ्यां समलङ्कतश्च प्रकाशितः । पञ्चषाणां वर्षाणां प्रश्नोत्तरैश्च अयं ग्रन्थः समुपबृंहितश्च । स एषोऽपि ग्रन्थः सर्व्वेषां महाविद्यालयाध्येतॄणाम् अध्यापकानां च परमोपकारजनकतया परमसमादर-विषयो जातः । अनयोः प्राप्तिस्थानं—संस्कृतपुस्तक भाण्डार, ३८, विधान-सरणी । कलिकाता—६

मूल्यम्—मुग्धबोधव्याकरणस्य—मुद्राष्टकम्
तर्कसंग्रहस्य—मुद्राष्टकञ्च ।

॥ —:०:— ॥

# हरिनामामृतम्

नाम नाटकम् ( प्रथमो भागः ) ।

अध्यापक-स्वर्गत-अमियनाथ चक्रवर्त्ति एम्-ए, काव्यतीर्थेन विरचितम्

( पूर्वतोऽनुवृत्तम् )

॥ प्रथमोऽङ्कः ॥

। चतुर्थं दृश्यम् ।

[ जगन्नाथमिश्रस्य कुटिरम् । उच्चासने उपविश्य विश्वम्भरो विष्णुप्रियया सेव्यमानौ निजचरणौ प्रति बद्धदृष्टिः । तत्करतले आसनोपरि अर्पिते आस्तरणे । विष्णुप्रिया प्रातःस्नाता पट्टवस्त्रपरिधाना

गृहीतपुष्पादि-पूजोपकरणा आदौ पतिचरणौ धौतौ कृत्वा स्वीयवस्त्राञ्चलेन परिमार्ज्य पूजयति गायति च। ततः गलवस्त्रा सती पादयोः पतित्वा प्रणमति। पतिस्तु सहसा अश्रुपूर्णलोचनकपोलः ऊर्द्ध्वम् अवलोकते अनुपस्थितहृदयेन। ]

विष्णुप्रिया। प्रभो, गयातः प्रत्यावर्तनमारभ्य केवलमश्रु विसृजसि त्वम्, न किमपि भाषया कथयसि। अज्ञानाहं तव प्रीतिमन्तरेण कथं जीवामि? कथं रोदिषि? केनापराधेन अपराद्धा ते दासी?

गौराङ्गः। प्रिये विष्णुप्रिये, न ते कोऽपि अपराधः; किन्तु किं मे भवति नाहं जानामि। यस्मिन्नेव क्षणेऽहं त्वामवलोकयामि, तदैव कामपि ज्योतिष्मतीमपूर्वां मूर्तिं प्रत्यक्षीकरोमि—तदैवाहं स्वात्मानमपि विस्मरामि। अवशस्तदा तां मूर्तिमभिलक्ष्य उन्मत्तवद् रोदनं करोमि।

विष्णुप्रिया। स्वामिन्! तर्हि केनोपायेन तव तृप्तिं विधातुं शक्नोमि? त्वमेव मे शरणम्।

गौराङ्गः। (किमपि न श्रृणोति, सहसा उच्चैः क्रन्दति च) हा कृष्ण! हा कृष्ण! कृष्ण! कृष्ण!

[ मूर्च्छामभिनयति ]

विष्णुप्रिया। (विचलितभावेन) प्रभो! प्रभो!! किं करोमि? (तूर्णं द्वारसमीपं गत्वा भयेन) मातः! मातः!!

[ प्रविशति शचीदेवी ]

शची। (व्याकुलम्) वधूः किं विश्वम्भरस्य?

[ सहसा गौराङ्गं मूर्च्छितं दृष्ट्वा उपागम्य भयकम्पितभावेन ]

किं मूर्च्छितोऽयम्! हरे कृष्ण, हरे कृष्ण! कृष्ण कृष्ण हरे हरे!!

[ मस्तके देहे च हस्तादरं करोति शुश्रूषते

च ; विष्णुप्रिया व्यजनं करोति ]

गौराङ्गः । ( क्रमेण मूर्च्छामुक्तः सन् नीरवमश्रुवर्षणं कुर्वन् ) कृष्ण ! कृष्ण ! कृष्ण !!

शची । कथं क्रन्दसि वत्स ! ज्ञानी त्वं, नास्ति नवद्वीपे त्वत्समः कोऽपि पण्डितः । तव शिष्या बान्धवा अन्ये च बहवो देशवासिनस्त्वां प्रत्यनुरक्ताः सन्तस्तव हितमिच्छन्ति । कस्तेऽभावः ? कथं त्वमत्र एतावदधीरो भवसि ? अपरं धैर्यहीनं जनं त्वं शान्तं करोषि ; कः खलु त्वां शान्तं करिष्यति ? तात ! अतिगम्भीरस्त्वम्, केनकारणेन एतादृशो व्याकुलो भवसि ?

[ तथापि गौराङ्गो नीरवमश्रु त्यजति ]

शची । यदा प्रभृति त्वं गयायाः प्रत्यावृत्तः, तदारभ्य एव तवेयमवस्था सञ्जाता । वत्स ! पश्य मां तव मातरम् ।

गौराङ्गः । ( कथञ्चित् शान्तो भूत्वा प्रणम्य )

मातः ! मा दुःखमभिगच्छ । गयायां श्रीपादपद्मं दृष्ट्वा अवशोऽहं जातः । किमिव भवति मातः, येनाहं सततं सम्मुखे अत्यधिकरूपसम्पन्नं श्यामं वनमालिनं कमप्यपूर्वं पुरुषं नृत्यन्तं पश्यामि, आनन्दाप्लुतो भवामि, अधैर्येण अवशः सन्नश्रूणि विसृजामि च । स खलु पुरुषो मम हृदयमुज्ज्वलीकृत्य तत्रैव तिष्ठति ।

शची । वत्स, तथाप्यहं ते माता । न कदापि मां तव मातरं तथा पतिव्रतां तव पत्नीञ्च विस्मर । स्थिरो भव । अधुना तेऽध्यापनाकाल उपस्थितः, शिष्याश्चागता एव । शान्तो भव । वधू ! चल गोपालमन्दिरं गत्वा वत्सस्य शुभमानमानि प्रार्थयावः ।

[ उभे निष्क्रान्ते । गौराङ्ग उत्तिष्ठति । ]

( दृश्यावसानम् )

# प्रणव-पारिजातः

( संस्कृत-मासिकपत्रम् )
त्रयोदशवर्षम्, सप्तमसंख्या ] [ फाल्गुनमासः १८९२ शकाब्दः]

## "काशीमाहात्म्यम्"

श्रीमद्देशचन्द्र-सांख्यतोर्थः

( द्वितीयोऽध्यायः )

बलदेवः। श्रूयते तापसकुञ्जरो महर्षिर्मुमुक्षुरगस्त्यः काशोधाम परित्यज्य मन्दाचलं गत इति। किमत्र कारणम्?

गुरुः। आकर्णयत एकाग्रमनसः। कदाचिद्देवर्षिनारदो नर्म्मदाम्भसि स्नात्वा श्रीमद्ओङ्कारमभ्यर्च्च्य गच्छन् विन्ध्याचलमवलोकितवान्। सोऽपि गिरिर्दूरादायान्तं शतसूर्य्यप्रभया समुद्भासितं तमृषिमवलोक्य प्रत्युज्जगाम। अतिसमुन्नतशिरा अपि विनम्रतरकन्धरस्तमृषिं प्रणम्यार्घ्यादिभिः पूजितवान्। गृहीतसत्क्रियेण तेन मुनिना आशीर्भिरभिनन्दितः स विन्ध्य उवाच—अद्य सद्यो भवत्पादपद्मरजसा मे रजो दूरीभूतम्। प्राक्कृतैः सुकृतैरद्य फलितम्। भवदनुग्रहेण पर्व्वतेष्वहं माननीयो भविष्यामि। इत्याकर्ण्य स मुनिर्दीर्घं निश्वस्य स्थितः। भयव्याकुलमानसः स पर्व्वतवरः पुनरुवाच—हे ब्रह्मन्! उच्छ्वासकारणं प्रणताय मे ब्रूहि। सुमेरुप्रभृतिषु पर्व्वतेषु सम्मिलितेषु धराधरणसामर्थ्यं वर्ण्यते। अहस्तु एक एव धरां दधे। गौरीगुरुत्वात्, भगवतः शङ्करस्य श्वशुरत्वात् सर्व्वाधिकाच्च हिमालयो माननीयः। मेरुः स्वर्गमयोऽपि रत्नसानुरपि, सुरनिवासोऽपि न मत्तो मान्यः। सन्ति चेह जगतीतले बहवः पर्व्वतास्तेषु स्वस्वस्थानेषु सम्मानिताः। एवमन्यानपि पर्व्वतान् निन्दति सः, करोति चात्मश्लाघाम्। विन्ध्यवचः श्रुत्वा महर्षिर्नारदोऽचिन्तयत्। अतिगर्व्वो हि पतनस्य मूलम्।

येषां श्रीशैलादीनां शिखरदर्शनमात्रेण नरा मुक्तिं लभन्ते, तेऽपि न मान्याः, अपि तु निन्दार्हाः ! यातु अस्य बलं पश्यामि। स देवर्षिरेवं विचिन्त्य तमब्रवीत्—पर्व्वतानां सारासारं विवृण्वता भवता यदुक्तं तत् सर्व्वं सत्यम्। परं सुमेरुस्त्वामवमन्यते। एतदेव हि मे उच्छ्वास-कारणम्। इत्युक्त्वा स मुनिः ततः प्रतस्थे। अथ स विन्ध्य उद्विग्नमना आत्मानं निन्दन्नुवाच—

धिग् जीवितं सान्द्रफलोज्झितस्य
धिग् जीवितञ्चोद्यमवर्जितस्य।
धिग् जीवितं ज्ञातिपराजितस्य
धिग् जीवितं व्यर्थमनोरथस्य॥

चिन्ताज्वरो मनुष्याणां क्षुधां निद्रां बलं हरेत्।
रूपमुत्साहमृद्धिश्च जीवितञ्च न संशयः॥

किं करोमि ? कुत्र गच्छामि ? अहो कथं वा सुमेरुं जेष्यामि। किमुत्प्लुत्य तस्य शिरसि पतामि। पक्षहीनतया तदपि न शक्नोमि। अथवा किं मे वृथा चिन्तया, विश्वकारणं विश्वेशं शरणं यायाम्। स पुनरप्यचिन्तयत्—ग्रहनक्षत्रैः सह भगवान् सूर्य्यः सुमेरुं बलाधिकं मन्यमानः प्रत्यहं तं प्रदक्षिणं करोति। सूर्य्यदेवः यं प्रदक्षिणं करोति, स एव मान्यः, स एव धन्यः, स एव कुलीनः, स एव समृद्धिमान् इति निश्चित्य स ववृधे। एवं सूर्य्यमार्गं निरुध्य कृतकृत्यो जातः। चिन्ताभार-विनिर्म्मुक्तः स विन्ध्यः स्वधर्म्मनिरतो ब्राह्मण इव सूर्य्योदयं प्रतीक्षते।

बलदेवः—यस्तपनस्तिमिरारिश्चराचरस्य विश्वस्य आत्मा, तस्यापि पन्थास्तेन विन्ध्याचलेन निरुद्धः ?

गुरुः। अथकिम्। शृणुत अवहिता यूयम्। ततो यदा सूर्य्याश्वा गन्तुं न शेकुस्तदा अनूरुरुवाच—देव ! मानोपहतचित्तो विन्ध्यो भवदीयं प्रदक्षिणं लुब्धकामः सुमेरुणा सह स्पर्द्धमानो गगनमार्गोऽपि रूध्यते। योऽहं राहुग्रस्तोऽपि क्षणमपि नावतिष्ठे। योऽहं योजनानां द्वे सहस्रे

द्वे शते निमेषार्द्धेन गच्छामि। सोऽहं चिरस्थिरः। अहो विधिरेव बलवान्।

शङ्करः—आश्चर्य्यमाश्चर्य्यम्। सूर्य्योऽपि गन्तुं न समर्थः? ततः किमभवत्?

गुरुः! सूर्य्यस्यैकत्रावस्थानेन प्राच्यौदिच्याः सर्व्वे प्राणिनः तीक्ष्णरश्मेः प्रखरकरतापेन भृशं सन्तप्ताः पीड़िताश्च जाताः। पाश्चात्या दाक्षिणात्याश्च उन्मीलितलोचनाः सतारकमाकाशं वीक्ष्याचिन्तयन्—अहो दिवाकराभावान्न दिवा, निशाकराभावान्न निशा। कः कालो न बुध्यते। ब्रह्माण्डं किमकाले लयमेष्यति। स्वाहा-स्वधा-वषट्काराभावात् क्रियालोपाच्च भुवनत्रयं चकम्पे। सूर्य्योदयात् प्रवर्त्तितेन यज्ञादिना यज्ञभुजां तृप्तिः। चित्रगुप्तादयोऽपि तस्मादेव कालं जानन्ति। सूर्य्य एव सृष्टि-स्थिति-प्रलयानां हेतुः। तस्य गतिस्तम्भात् सकलं जगत् स्तम्भितम्। सर्व्वं चित्रार्पितमिवाभवत्। एकत्र नैशान्धकाराद् अन्यत्र च दिवाकर-तापाद् बहवः प्राणिनो विनष्टा आसन्। जगत् कान्दिशिकमभवत्। ततः सुरासुर-यक्ष-राक्षसाः सर्व्वे ब्रह्माणं शरणं गताः। रक्ष रक्षेति ब्रुवन्तो विविधैः स्तोत्रैः स्तुवन्ति च। तेन स्तवेन तुष्टो ब्रह्माह—भवतामागमकारणं ब्रूहि। आं ज्ञातं, विन्ध्यो मेरुणा स्पर्द्धमानः सूर्य्यस्य पन्थानमवरुणद्धि। तदर्थं यूयमागताः। तदुपायमुपदिशामि। उग्रतपा महर्षिरगस्त्यो विश्वेश्वरे दत्तचित्तः काशीधामनि निवसति। तत्र गत्वा तस्मै निवेदयत स वः कार्य्यं करिष्यति। तेन पुरा वातापील्वलौ भक्षयित्वा सर्व्वे लोका रक्षिताः। इत्युक्त्वान्तर्दधे ब्रह्मा। तेऽपि हृष्टमानसाः परस्परमूचुः—अहो धन्यतमा वयं, प्रसङ्गतः श्रीश्रीविश्वेश्वरं श्रीश्रीअन्नपूर्णाञ्च दृष्ट्वा कृतार्था भवामः। काशीमभ्युपयायिनौ तावेव चरणौ धन्यौ। ब्रह्मणा या कथा कथिता, सा अस्माभिः श्रुता, तस्याः श्रवणलब्धात् पुण्याद् अद्य काशीं प्राप्नमः। एवं कथयन्तस्ते देवाः काशीं समाययुः।

॥ तृतीयोऽध्यायः ॥

शङ्करः—देव ! अमरैः काशीमागत्य किं कृतम् ? इमां दिव्यां कथामाकर्ण्य न तृप्तिमधिगच्छामो वयम् । तपस्विप्रवरोऽगस्त्यश्च देवैः निवेदितः सन् किम् अकरोत् ?

गुरुः—शृणुत वत्साः ! देवाः काशीं गत्वा कृततीर्थकृत्याः श्रीश्रीविश्वेश्वरं श्रीश्रीअन्नपूर्णाञ्च दृष्ट्वा संपूज्य स्तुत्वा प्रणम्य च अगस्त्यं निकषा गताः । महर्षिः स्वनाम्ना लिङ्गं संस्थाप्य रुद्रसूक्तं पठन् निश्चलोऽवतस्थे । देवा दूरत एव सूर्य्यतुल्यं तेजस्विनं निरीक्ष्य परस्परमूचुः—अयं किं साक्षाद् वाड़वाग्निरुत मूर्त्तिमत् तपः ? अथवा सर्व्वाणि तेजांसि इममाश्रित्य परमशान्तिप्राप्तये शान्तिमयं तेजः प्रकाशयन्ति । अस्य कठोरया तपस्यया तपनोऽपि तप्यते, दहनोऽसि दह्यते, चपलापि स्थिरी भवति । हिंस्रा अपि प्राणिनः हिंसां परित्यजन्ति । एतस्य पुण्यवलेन बलवन्तो जन्तवः क्षुद्रान् न घ्नन्ति । वकादयोऽपि सरसि अग्रेचरान् मत्स्यान् नादन्ति । पुराणविद्भिः क्वचिद् गाथा गीयते—"क्व मांसं क्व शिवे भक्तिः क्व मद्यं क्व शिवार्च्चनम् । मद्य-मांसरतानाञ्च दूरे तिष्ठति शङ्करः । अहो आश्रमस्य प्रभावः ! हिंस्रा अपि हिंसां विहाय निवृत्तमांसा भवन्ति ।

क्षेत्रस्यापि महिमा अनिर्व्वचनीयः ! तिर्य्यञ्चोऽपि अत्र प्राणान् त्यजन्तः तारकब्रह्मनाम श्रीश्रीविश्वेश्वरेरितं श्रुत्वा मुच्यन्ते । क्षेत्रस्य माहात्म्यं विज्ञाय स्थिरमतिर्यो वसेत्, काशी तं ध्रुवं तारयति । देवाः पुनरचिन्तयन्—काशीवासिन एते पक्षिणोऽपि वरम् । यत एतेषां न पुनरावृत्तिः । देवा अपुनर्भवा न । काश्यां वासाद् भयं नास्ति । स्वर्गपाताद् महद् भयम् । अत्र स्थिता मशका अपि हेलया यत् पदं प्राप्नुवन्ति, तत् पदं योगयुक्तयापि योगिभिरन्यत्र न प्राप्यते । तस्मात् सर्व्वप्रयत्नेन काश्यां श्रेयः समाचरेत् । बहुजन्मार्जितलब्धपुण्येन काशी कदाचिदपि न परित्यज्येत । अतः शरण्यं विश्वेशं शरणं यायात् । पुरुषार्थचतुष्टयं काश्यां यथास्यात् तथान्यत्र न कुत्रापि ।

बलदेवः—महाभाग ! किन्तावत् पुरुषार्थचतुष्टयम् ?

गुरुः—धर्म्मः अर्थः कामो मोक्षश्च। परमपुरुषार्थो मोक्षोऽपि अत्र देहपातादेव विश्वेश्वरकृपया लभ्यते।

शङ्करः—देव ! को नाम मोक्षः ?

गुरुः—त्रिविधदुःखात्यन्तनिवृत्तिर्मोक्षः। लक्षणान्तराण्यपि सन्ति।

शङ्करः—किञ्च दुःखत्रयम् ?

गुरुः—अध्यात्मिकमाधिदैविकं अधिभौतिकञ्च दुःखत्रयम् अध्यात्मिकं पुनर्द्विविधम्, शारीरं मानसञ्च। ग्रहपीड़ादिनिमित्तं दुःखमाधिदैविकम्। व्याघ्रचौरादिजनितं दुःखमाधिभौतिकम्। अन्यत् कालान्तरे वक्तव्यम्। अधुना प्रकृतमनुसरामः—देवाः अन्योऽन्यं काशीमहिमानमालोचयन्तो होमधूपलक्षाढ्यं शिष्यगणयुतं मृगशावकैरलङ्कृतं पतिव्रतया लोपामुद्रया विभूषितं महर्षेराश्रमपदं वीक्ष्य प्रविविशुः सवासवा देवाः सानन्दम् उच्चैर्जय जयेति प्रोचुः। स महर्षिरपि तामभिनन्द्य उपवेश्य च आगमनकारणं पप्रच्छ। यदा सर्व्वे देवास्तस्य वचनं श्रुत्वा सुरगुरोर्बृहस्पतेर्वदनकमलं ददृशुस्तदा स उवाच—हे महाभाग अगस्त्य ! देवानामागमनकारणं शृणु—त्वमेव धन्यस्त्वमेव कृतकृत्यस्त्वमेव सतामपि मान्यः। बहवस्तपस्विनः प्रत्याश्रमं प्रतिपर्व्वतं प्रतिवनं निवसन्ति, किं तु कोऽपि न भवतस्तुल्यमानार्हः। भवत्येव तपोलक्ष्मीर्विराजते, त्वय्येव ब्राह्मं तेजो विद्यते, इयं सतीकुलशिरोमणिस्ते सहधर्म्मिणी लोपामुद्रा छायेव त्वाम् अनुगच्छति। सा सर्व्वं पातिव्रत्यधर्म्मं सम्यक्प्रतिपालयति। त्वयि भुक्तवति सा भुङ्क्ते, विनिद्रिते च निद्राति, तव प्रबोधात् प्राक् सा प्रतिबुध्येत। त्वयि प्रोषिते सा मलिना कृशा च भवति। भवतो नाम कदाचिदपि न गृह्णाति। कायमनोवाक्यैर्नित्यं भवन्तं सेवते। एवं पतिव्रतां प्रशस्य तं मुनिं प्रणम्य च ब्रवीति—प्रणवस्त्वं श्रुतिरियम्; क्षमैषा, त्वं स्वयं तपः, इयं सत्क्रिया, फलं हि त्वम्। यद्यपि भवता सर्व्वं ज्ञातं, तथापि आगमनकारणं

ब्रवीसि—अयं शतक्रतुर्देवराजः कुलिशायुधोऽपि तव दृक्प्रसादं समीक्षते। एवमन्येऽपि दिक्पालाः। ब्रह्मविष्णुशिवाश्च अद्य जगतामुपकाराय भवन्तं याचन्ते। विन्ध्यनामधेयः कश्चित् पर्व्वतो वर्द्धितः सन् सूर्य्यमार्गावरोधको भवति। तस्य वृद्धिं निवारय। उग्रतपा महामुनिर्देवगुरोर्वाक्यमाकर्ण्य क्षणं समाधिस्थ आसीत्। अविचार्य्य तथेति प्रत्युवाच! भवतां कार्य्यं करिष्यामीत्युक्त्वा देवान् विसृज्य पुनश्चिन्तापरो ध्यानपरायणश्च अभवत्।

—:०:—

## श्रीमद्भगवद्गीतायां भक्ति-कर्म्मवादौ

( निबन्धकः—अध्यापकः श्रीरवीन्द्रकुमारसिद्धान्तशास्त्री )

( पूर्वतोऽनुवृत्तम् )

ननु बीजे रोपिते तस्माद् वृक्ष उत्पद्यते; स च वृक्षः कालेन फलवान् भवतीति बीजरोपणमेव फललाभस्य जनकम्। एवं कर्म्मान्तर-विषयेऽपि कृतस्य कर्म्मणोऽवश्यम्भावि फलं दृश्यते। यद्यपि तवादेशेन निःस्पृहः सन्नेव कर्म्म कर्त्तुमर्हामि, तथापि तेषां कर्म्मणामपरिहार्य्यं फलं कथं मयि नागमिष्यति? अनिच्छाकृतस्यापि कर्म्मणो यदीच्छा-कृतस्येव फलं जायते, किं फलं तदा स्यादासक्तिपरित्यागेन?—इत्येवं प्रश्नमाशङ्कमानः श्रीभगवानाह—

"मयि सर्वाणि कर्म्माणि सन्न्यस्याध्यात्मचेतसा।
निराशीर्निर्म्ममो भूत्वा युध्यस्व विगतज्वरः॥" इति।

अस्यायमभिप्रायः—कर्म्म कर्त्तुमेव विद्यते तवाधिकारः, न तु तस्य फललाभे! अतो ममैवादेशेन कर्म्म कुर्व्वन् शुभाशुभं वा सर्व्वमेव तत्फलं मय्येव समर्पय। तत्र च हेतुरध्यात्मचेतस्त्वम्। अतोऽध्यात्म-योगबलेन सर्व्वमेव कर्म्मफलं मयि समर्प्य ... —मायामोहाभ्यां

रहितः केवलं भगवदादेशं पालयितुं जाड्यभावमपहाय युद्धं कुरु। तथाचोक्तं—

"त्वया हृषीकेश ! हृदि स्थितेन
यथा नियुक्तोऽस्मि तथा करोमि ॥" इति

तथापि तादृशज्ञानमाश्रित्यैव युध्यस्वेति भगवदभिप्रायः। विद्यते हि लोकेऽस्मिन् पूजायज्ञादिव्यापारे सर्व्वत्रैव कर्म्मफलस्य भगवत्-पादारविन्दे समर्पणाय व्यवहारनियमः। दृश्यते हि पूजादीनां समाप्तौ "अद्य मया यत्कृतं यत् सर्व्वं श्रीविष्णोः पदारविन्दे समर्पितमस्तु" इत्यनेन फलसमर्पणस्य व्यवहारोऽपि। एतेन "कर्म्मण्येवाधिकारास्ते मा फलेषु कदाचन' इति प्रागुक्तं वचनमपि समर्थितम्।

भगवदादेशोऽपि मानवैरवश्यमेव पालनीयः। वेदवाक्यानां भगवदुक्तितयैव तेषामपरिहार्य्यताविधानम्। तेन ये श्रद्धावन्तो मानवाः सर्व्वथा हिंसादिकं विहाय परमया श्रद्धया भगवत आदेशमिमं पालयितुं कर्म्म कुर्व्वन्ति, तेऽपि तेषां तादृशैर्व्वैधकर्म्मभिरेव मुक्तिं लभन्ते। एतदेव श्लोकमाश्रित्याह—

"ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्म्मभिः॥" इति।

कर्म्मयोगे श्रद्धाया अपि प्रयोजनं स्वीकृतं श्लोकेनानेन। विशेषस्तु पश्चादालोचयिस्यते।

ये तु भगवन्तं प्रति द्वेषपरायणास्तेन च तस्यादेशं नानुपालयन्ति ते खलु मूर्खा हीनबुद्धयो मोक्षमार्गच्युताश्च। तथा च श्लोकः—

"ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्।
सर्व्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः॥" इति।

अतः श्रेयोऽभिलाषिणा सततमेव द्वेषं विहाय भगवदादेशः पालनीय इति तात्पर्य्यार्थः।

प्रकृतिरेव गुणैः कर्म्माणि सम्पादयतीति प्रागुक्तम्। तेन प्रकृतेरेव प्राधान्याज्ज्ञानवन्तोऽज्ञाना वा सर्व्वं एव तस्या अधीनाः, तेन च

ज्ञानिनोऽपि स्वकीयप्रकृतिवशादेव शुभाशुभानि कर्म्माणि कुर्व्वन्ति। मूढ़ास्तु कर्म्म सम्पाद्यापि तत्र साभिनिवेशतयाहङ्कारेण लिप्यन्ते; ज्ञानिना त्वया फलचिन्तां विहाय युद्धं करणीयमिति भावः। अत्रायं श्लोकः—

"सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति॥" इति।

एतेनेन्द्रियनिग्रहादपि प्रकृतेः प्राधान्यमङ्गीकृतम्। प्रकृतिरेव सर्व्वोपरि वर्त्तत इत्यर्थः। अतएव महाकविर्माघोऽपि

"सतीव योषित्प्रकृतिः सुनिश्चला
पुमांसमभ्येति भयान्तरेष्वपि।"

इति निगदितवान्। इन्द्रियाणि निग्रहीतुं न शक्नोतीति दुर्व्वाससादीनां मुनीनां व्यापारादवगम्यते।

अथ भगवान् बहुभिरुपदेशैरर्ज्जुनं कथञ्चिद् भावान्तरं प्रापय्य प्रतिपक्षावलम्बिन आत्मीयान् प्रत्यनुराग एव तस्य युद्धविरतेर्हेतुरिति स्मृत्वा साम्प्रतमनुरागं दूषयन्नाह—

"इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ॥" इति।

श्लोकेनानेनानुरागोऽपि द्वेषवदेव दूषणीयस्त्याज्यश्चेति निगदितम्। द्वयोरेवैतयोरिन्द्रियविषयत्वात् तुल्यैव दूषणीयता। अनुरागोऽपि द्वेष इव नितरामपानयति श्रेयो मानवानाम्। तेनैव द्वावेवैतौ विहातुमादिष्टवान् भगवान् धनञ्जयम्। द्वावेवैतौ मोक्षलाभस्य बाधकौ कर्त्तव्यबुद्धिविनाशकौ चेति परित्यागे हेतुः प्रकटितः।

एवमनुरागत्यागाय समुपदिश्य स्वधर्म्मस्यापरित्याज्यतामुद्घोषयन्नाह—

"श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात्।
स्वधर्मे निधनं श्रेयः परधर्म्मो भयावहः॥" इति।

अस्यायमभिप्रायः—त्वं क्षत्रियवंशे जातोऽसि; अतः 'क्षत्रियस्य

विजेतव्य'मिति शास्त्रमनुसृत्य युद्धमेव ते ध्रुवं कर्त्तव्यम्। अतस्तादृशमपरिहार्य्यं कर्त्तव्यं विहाय त्वमाक्रान्तोऽसि दोषेण। ननु कथमहं ब्राह्मणोचितं कर्म्मैव सम्पादयितुं नार्हामीत्यपि न वाच्यमित्याह—क्षात्रधर्म्म एव ते स्वधर्म्मः। भवतु नाम ब्रह्मण्यात्तस्य निकृष्टता ; तर्ह्यपि स स्वधर्म्मतया पालनीय एव, हीनगुणोऽपि स्वधर्म्मो गुणाधिकादपि परधर्म्माच्छ्रेयानिति श्रीकृष्णस्य सिद्धान्तः। स्वधर्म्ममाश्रित्य मरणेऽपि नास्ति दोषः इति तस्याभिमतम्। परधर्म्मस्तु सर्व्वथा परित्याज्यः इति विज्ञापितवान् भगवान् शिष्याय वाक्चातुर्य्येण। अत्र,

"परधर्म्मो भवेत् त्याज्यः सुरूपपरदारवत्।"

इति स्मृतिरपि दृश्यते। तेन क्षात्रधर्म्ममनुसृत्य युद्धकरणादन्यत् किमपि क्षत्रियस्य धनञ्जयस्य कर्त्तव्यन्तदानीं नानुमोदितवान् भगवान् श्रीकृष्णः।

तृतीयाध्यायस्य कर्म्मवादोऽत्रैव समाप्तिं गतः। अध्यायेऽस्मिन् तदनन्तरं पुनः कामनाविरतये विशिष्टा उपदेशाः प्रदत्ताः। तत्रायमन्तिमश्लोकः—

"एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना।
जहि शत्रुं महाबाहो! कामरूपं दुरासदम्॥" इति।

अतस्तृतीयाध्यायस्यैव नाम 'कर्म्मयोग' इति, तथापि श्रीमद्भगवद्गीतोक्तः कर्म्मयोगोऽत्रैव न समाप्तिं गतः। एतदनन्तरमपि कर्म्मयोगविषये बहव उपदेशा युक्तयश्च प्रदर्शिताः।

यस्मिन् वर्णाश्रमधर्म्मे वयमवस्थिताः, सोऽपि कर्म्मरचित एव। तथा चोक्तं चतुर्थाध्याये—

"चातुर्व्वर्ण्यं मया सृष्टं गुणकर्म्मविभागशः।
तस्य कर्त्तारमपि मां विद्धयकर्त्तारमव्ययम्॥" इति।

यद्यपि कर्म्म कृत्वापि यथा तस्य फलेन युक्तो न भवेत्तथा बहव उपदेशाः तृतीयाध्याय एव प्रदत्तास्तर्ह्यपि मोहग्रस्तस्य पार्थस्य मोहं सर्व्वथा नाशयितुमिच्छन् पुनः श्लोकान्तरेण तदोपदिशति ; यथा—

"न मां कर्म्माणि लिम्पन्ति न मे कर्म्मफले स्पृहा।

इति मां योऽभिजानाति कर्म्मभिर्न स बध्यते ॥" इति।

दृश्यते च लोकेऽस्मिन् सर्व्व एव प्राणिनः स्वकीयपूर्व्वपुरुषैराचरितानि कर्म्माणि कुर्व्वन्तीति। एष एव प्राकृतिको धर्म्मः। तृणभक्षणं गवां धर्म्मः। सर्व्वेषु देशेषु सर्व्वेषु च कालेषु स एवानुपाल्यते तेषां वंशधरैः। सर्पनाशनं नकुलानां धर्म्मः, सदैव तेषामपत्यैरनुपाल्यते। व्याघ्राणां रुधिरपिपासा जिघांसा च पुरुषपरम्परयैव लब्धे। ब्राह्मणादयो मानवा अपि पूर्व्वपुरुषाणां कार्य्यावलीमनुसृत्यैव तप आदिषु कार्य्येषु प्रवर्त्तन्ते। पूर्व्वजातानां लोकप्रसिद्धानां महापुरुषाणां कर्म्मावली च परवर्त्तिभिः सर्व्वदैवानुश्रियते। शास्त्रवाक्येभ्योऽपि एवंविधस्य प्राकृतिकधर्म्मस्य प्राचारबाहुल्यं समादराधिक्यञ्च सर्व्वत्रैव दृश्यते। एतदेव समालोक्य महर्षिणा व्यासेन महाभारते निगदितम्—

"वेदा विभिन्नाः स्मृतयो विभिन्ना
नासौ मुनिर्यस्य मतं न भिन्नम्।
धर्मस्य तत्त्वं निहितं गुहायां
महाजना येन गताः स पन्थाः।" इति।

अतो यदि शास्त्रवाक्येषु सदुपदेशेषु च तव श्रद्धा न विद्यते, तर्ह्यपि पूर्वपुरुषैराचरितव्यानि कर्म्माणि विलोक्यापि त्वया कर्म्मण्येव प्रवर्त्तितव्यमित्याह भगवान्—

"एवं ज्ञात्वा कृतं कर्म्म पूर्वैरपि मुमुक्षुभिः।
कुरु कर्म्मैव तस्मात् त्वं पूर्वैः पूर्वतरं कृतम् ॥" इति

प्राग् वैधावैधभेदेन कर्म्म द्वैविध्यमुक्तम्। तत्र किन्नाम वैधं किं वावैधमिति सन्देहं निराकर्त्तुं तदपि भगवान् विज्ञापितवान् शिष्याय, यथा—

"किं कर्म्म किमकर्म्मेति कवयोऽप्यत्र मोहिताः।
तत्ते कर्म्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥"

इत्यादि।

ये खलु जनाः फलाभिलाषं विहाय कर्म्म कुर्वन्ति, तेषां ज्ञानिनां

कर्म्मफलरूपा दोषा मोक्षप्रतिबन्धायालं भवितुं नार्हन्ति। तेषां ज्ञानमेव तादृशान् दोषान् नाशयतीत्याह—

"यस्य सर्वे समारम्भाः कामसङ्कल्पवर्ज्जिताः।
ज्ञानाग्निदग्धकर्म्माणं तमाहुः पण्डितं बुधाः॥ इति
"निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः।
शारीरं केवलं कर्म्म कुर्वन्नाप्नोति किल्बिषम्॥ इति च

ये तु ज्ञानिन आसक्तिविरहिताः केवलं यज्ञाय कर्म्म कुर्वन्ति, तेषां तादृशस्य कर्म्मणः फलं न तान् दूषयति। वैधकर्म्मणः फलस्य दोषजनकता नास्तीति तात्पर्य्यम्। तेनैव पशुहिंसानिन्दका अपि जना यज्ञार्थपशुवधे हिंसां नाङ्गीकुर्वन्ति। तथा चोक्तं 'तथा पशोरालभनं न हिंसा' इति। एतस्मादेव कारणाद् भगवान् वदति—

"गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः।
यज्ञायाचरतः कर्म्म समग्रं प्रविलीयते॥" इति

"सर्वं खल्विदं ब्रह्म" इति श्रुतिमुपलभ्य ये सर्व्वत्रैव ब्रह्मज्ञानं लभन्ते, ब्रह्मज्ञानेन च कर्म्म कुर्व्वन्ति, कर्म्मणोऽपि ब्रह्मत्वमङ्गीकुर्वन्तस्ते भगवन्तो ब्रह्मसारूप्यमेव लभन्ते, इत्येवं पुनर्वदति भगवान्—

"ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्मसमाधिना॥" इति

पुनः कर्म्ममयं यज्ञमेव प्रशंसन्नाह—

"यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम॥" इति

श्लोकेनानेन यज्ञशेषभोजिनो ब्रह्मसारूप्यलाभमुक्त्वा यज्ञविहीनस्येहैव लोकेऽधमा गतिरापद्यते, का कथा परलोकस्येति प्रख्यापितम्।

यज्ञाश्च बहुविधाः स्वयमेव ब्रह्मणा विहिताः। अतस्ते ब्रह्मणा कथितत्वात्तस्य मुखे स्थिता इव। ते च सर्वे एव कर्म्मोद्भवाः। ये ज्ञानिन एवं जानन्तः कर्म्म कुर्वन्ति, तेषां मोक्षलाभोऽप्रतिहत एव भवेत् तदुक्तम्—

"एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे।
कर्म्मजान् विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे॥" इति।

एतावता चतुर्थाध्यायस्थितः कर्म्मयोगः समाप्तः।

पुनः पञ्चमाध्याये कर्म्मैव प्रशंसन्नाह—

"सन्न्यासः कर्मयोगश्च निःश्रेयसकरावुभौ।
तयोस्तु कर्म्मसन्न्यासात् कर्म्मयोगो विशिष्यते॥" इति।

कर्म्मत्याग-कर्म्मयोगयोर्मध्ये कर्म्मयोगस्यैव प्राधान्यमिति प्रागपि निगदितम्। कर्म्मत्यागस्यापि मुक्तिजनकत्वं प्रागेवोद्घोषितम्। प्राक् कर्म्मफलत्यागेन मुक्तिर्लभ्यत इत्युक्तमधुना तु कर्म्मत्यागेनेति कोऽनयोर्व्विशेषः? न चात्र कर्म्मसन्न्यासशब्देन कर्म्मफलत्यागोऽभिप्रेतो भवितुमर्हति। तथा चेदासक्तिरहितात् कर्म्मण आसक्तियुक्तं कर्म्मैव श्रेय इत्यर्थः स्यात्। न तु भगवतस्तादृशोऽभिप्राय इति प्रागालोचितेभ्यः श्लोकेभ्य एवं ज्ञायते। तेनास्य कर्म्मत्यागात् कर्म्मकरणमेव श्रेय इत्येतावानेवार्थः।

कर्म्मणा मुक्तिर्जायते इति गीतावाक्यात् श्रुत्यादिभ्यश्च विज्ञायते। अपि नाम कर्म्मत्यागेनापि तथा सर्व्वत्रैव मुक्तिर्लभ्यते? "सन्न्यासः कर्म्मयोगश्च निःश्रेयसकरावुभौ इति श्लोकांशेनापाततस्तादृशार्थ एव बुध्यते।

ननु यदि कर्म्मत्यागेनैव मुक्तिः स्यात्तदा सर्व्वे एवालस्य-परायणा मानवा मुक्तिभाजो भविष्यन्ति। तेन च कर्म्माकरणाच्चेतना-युक्तेभ्यः प्राणिभ्यश्चेतनाविहीनानां काष्ठकुड्यपाषाणादीनामेव मुक्तिः सुलभा स्यात्। अपि नामैतावानेव गीतार्थः? कर्म्मणा ऐहिकसुख-दुःखादिलाभोऽपि दृश्यते। विश्वामित्रादीनां तपश्चर्य्यारूपकर्म्मैव तेषां ब्राह्मणत्वादिलाभे हेतुः। श्रीरामश्च समरकर्म्मणैव राक्षसान् निहत्य त्रिषु लोकेषु शान्तिं संस्थापयामास। कवीनां कवित्वशक्तेरपि जनकं प्रायशस्तेषामैहिकं साधनकर्म्मैव स्यात्। उक्तञ्च तत्रभवता आलङ्कारिकप्रवरेण ... नामग्रन्थे—

"तदस्तु तन्त्रैरनिशं सरस्वती, श्रमादुपास्या खलु
कीर्त्तिमीप्सुभिः।
कृशे कवित्वेऽपि जनाः कृतश्रमा विदग्धगोष्ठीषु
विहर्त्तुमीशते॥" इति

कर्म्मकरणाभावेऽपि चेत्तादृशफललाभो भवितुमर्हेत्तदा सर्वेषामेव जड़ानां कवित्वफललाभप्रसङ्गः।

कर्म्मत्यागमात्रान्मुक्तिर्लब्धुं न शक्यते। आलस्यपरायणानां कर्म्मत्यागो निन्दनीय एवेति नास्ति सन्देहावकाशः! ये तु ज्ञानिनो दीर्घकालं कर्म्म कृत्वा ज्ञानवलेन विषयवैराग्यं लब्ध्वा मनसा वाचा च सर्वाङ्गीणं कर्म्म त्यजन्ति, तेषां तादृशः कर्म्मपरित्याग एव मुक्तये भवति। प्राक्कर्म्माचरणं विना तादृशस्य कर्म्मत्यागस्य सर्वथा-सम्भवात् तस्मादपि कर्म्माचरणस्य वैशिष्ट्यमङ्गीकृतम्। आलस्यस्य सर्व्वथा विनाशायैव गीतोक्तधर्म्मस्य प्रचारः। आलस्यादीनां दोषाणां परित्यागाभावे मुक्तिरैहिकफललाभश्चासम्भवौ, इत्येव गीतोक्तधर्म्मस्य सारः।

अनासक्तस्य ज्ञानिनोऽहङ्कारो न विद्यत इति स कर्म्म कुर्व्वन्नपि तत्र स्वकर्त्तृत्वमननुभूय तत्फलेन न युज्यते इत्युक्तं—

"नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्।
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन्॥
प्रलपन् विसृजन् गृह्णन्नुन्मीषन्निमिषन्नपि।
इन्द्रियाणीन्द्रियार्थेषु वर्त्तन्त इति धारयन्॥" इति

योऽनासक्तो जनो भगवति स्वकृतानां कर्म्मणां फलानि न्यासीकृत्य कर्म्म करोति, तस्य पापायोगप्रकारमुपमया बोधयति—यथा पद्मपत्रे पतितमपि जलं पद्मपत्रमार्द्रीकर्त्तुं न शक्नोति, प्रत्युत तत्पत्रमनालिप्य पश्चात् स्वयमेवापयाति, अनासक्तं ज्ञानिनमपि तथा कलुषयितुमशक्नुवत् पापमेव स्वयमपगच्छति। यथा च श्लोकः—

—क्रमशः

# हरिनामामृतम्

## नाम नाटकम् ( प्रथमो भागः )।

अध्यापक-स्वर्गत-अमियनाथ चक्रवर्त्ति एम्-ए, काव्यतीर्थेन विरचितम्

( पूर्वतोऽनुवृत्तम् )

॥ प्रथमोऽङ्कः ॥

। पञ्चमं दृश्यम् ।

[ शिष्याः प्रविशन्ति पुस्तकादिसहिताः प्रणमन्ति च ।
गौराङ्गः पाठनार्थमासने उपविष्टस्तिष्ठति ]

प्रथम-शिष्यो } गुरुदेव ! अद्य किं पाठो भवेत् ?
भक्तदासः } ( गुरुमनुपस्थितहृदयं लक्ष्यीकृत्य ) अप्यद्य पाठो भविष्यति ?

गौराङ्गः । ( संज्ञां लब्ध्वा ) भ्रातः ! न जाने किं मे सम्भूतम् ! पाठनकाले प्रत्यहमहं सङ्कल्पं करोमि—अद्य यथार्थं पाठयिष्यामीति । किन्तु यावदेव पाठारम्भो भवति, तावदेवैकः परमसुन्दरः श्यामः शिशुर्मम सम्मुखे दण्डायमानो वंशीवादनं कुर्वन् नृत्यति । अहञ्च लुप्तसंज्ञ इव भवामि, अङ्गानि चावशानि जायन्ते । मम पूर्व्ववद् वायुरोगो भूय आविर्भूतः ।

भक्तदासः । नायं वायुरोगः । भवतामध्यापितमर्थं खण्डयितुं जगति कोऽपि न पारयति । नास्ति कस्यापि भवद्भक्तिसदृशी तादृशी भक्तिः । न खलु वायुरोगाक्रान्तस्य कस्यापि भाषणमेतादृशं मधुरं भवति ।

गौराङ्गः । न पुनरेवं युष्मान् प्रतारयिष्यामि । भ्रातरः ! कृपया अध्यापनाकार्यान् मुक्तिर्मे दीयतां भवद्भिः । विद्यार्जनाय च कोऽप्युपयुक्तगुरुराश्रियताम् ।

( शिष्याः कृताञ्जलयो विनयेन नमन्ति )

अपरः । मैवमुच्यताम् ।

भक्तदासः । गुरुदेव ! कोऽपरो भवत्तुल्यं स्नेहं यत्नञ्च कृत्वास्मान् पाठयिष्यति ?

गौराङ्गः । मा कुरुत चिन्ताम् । सततं कृष्णनाम भजत, तेन भजनेन सर्वसौभाग्यानि लब्धानि वो भविष्यन्ति । इदानीं सकृत् कृष्णकीर्तनं कृत्वा मां कृतार्थं कुरुत यूयम् ।

भक्तदासः । कृष्णकीर्तनम् ? गुरुदेव ! न वयं कृष्णकीर्तनं जानीमः ।

अपरः । शाधि तदस्मान् ।

गौराङ्गः । आगच्छत—वयं सर्वेऽत्र कृष्णकीर्तनं कुर्मः ।

[ हस्ततालं तुलसीवृक्षं परितो दण्डायमाना सर्वे । प्रथमं गौराङ्गः पश्चात् शिष्या गायन्ति । ]

( कीर्तनगानम् )

हरि-हरये नमः
कृष्ण-यादवाय नमः ।
यादवाय माधवाय केशवाय नमः ॥

शिष्याः । ( सहस्ततालं ददतो गायन्ति गौराङ्गेण सह )

( निष्क्रान्ताः )

[ गौराङ्गस्याश्रुभिः सर्वाङ्गानि सिक्तानि अभवन् ]

गङ्गादासः नेपथ्ये । ( गीतावसाने नेपथ्ये ) भो वत्स !

[ प्रविशति गौराङ्गगुरु-गङ्गादासः ]

गौराङ्गः । ( त्वरितं भक्त्या अभिनन्द्य )
गुरुर्गरीयान् पितृतो मातृतश्च—एषा खलु उक्तिर्महामतेः श्रीभीष्मदेवस्य ।

( साष्टाङ्गं प्रणमति )

गङ्गादासः । विद्यालाभस्ते भवतु । विश्वम्भर ! किमपि वक्तुकामोऽहम् आगतः । बहुजन्मनां तपोभिः कश्चिद् अध्यापको भवति । आस्तां ते मातामहो नीलाम्बर-चक्रवर्ती, पिता च जगन्नाथ

मिश्रः अतिविख्यातो पण्डितः। त्वमपि तवाध्यापकस्य मम कीर्तिप्रतिष्ठां कृतवान्। तवासामान्येन अध्यापनागुणेन शिष्येषु स्नेहेन च समग्र-गौड़देशे परिव्याप्तं ते यशः। त्वया रचिता व्याकरणशास्त्रस्य पाण्डित्यपूर्णा टिप्पनी, या समाजेन समादृता। स त्वमिदानीं केवलं हरिभजने रतः सन् अध्यापकत्वं त्यक्तवानिति शृणोमि। न खलु हरिभजने दोषः। शान्तं नियमितश्च हरिभजनं कुर्वन् पितृपितामहेभ्य आगतं गौरवं संरक्षितुं यथायथमध्यापनाकर्म कुरु।

गौराङ्गः। (कृताञ्जली विनयेन) गुरुदेव! सत्यमहमपराधी। क्षमां ते याचे। चिरमहं खलु गुरुब्राह्मणानां दासः। किन्तु नाहं ममाधीनो भवामि। गयायामद्भुतमहं दृष्टवान्। अत्र तावद् यं हृदयानन्दमहम् आस्वादितवान्, येन च ममान्तर्लोक उद्वेलित उद्भासितश्च, जीवगणेषु तमेवानन्दं वितरितुं ममाज्ञातसारेणैव कृष्णनामोन्मत्तः सन् सर्वजीवोद्धारणव्रतं दीनोऽप्यहं गृहीतवान्।

गङ्गादासः। हरिहरिः, शिष्यस्त्वं मम। केवलं मङ्गलमेव ते मम काम्यम्।

(गौराङ्गः पुनः प्रणमति)

गङ्गादासः। सर्वथा सर्वेषां हितकारी भव। (निष्क्रान्तः)

[ प्रविशति शचीसहितः श्रीवासाचार्य्यपादः ]

गौराङ्गः (प्रणमितुमुपगच्छन्) पण्डित, पण्डित!

(मूर्च्छितो भवति)

शची-श्रीवासौ। (गौराङ्गं शुश्रूषमाणौ कर्णे हरे कृष्ण हरे कृष्ण इत्यादि)

गौराङ्गः। (बाह्यज्ञानं पुनः प्राप्य) पण्डित! कृपया कथय—किमयं मे वायुरोगः। केचन वदन्ति—मां बद्ध्वा शिवादिघृतप्रयोगेण मम चिकित्सा कर्तव्या इति। अतीवाकुला मम माता।

(क्रमशः)

णौ कृते तु नरामोद्भवधातुत्वं न स्यात्तत्र तु विकल्प एव, प्रेङ्खयमाणः प्रेङ्खयमानो वा। उनुभ पूरण इत्यस्य प्रोम्भणमित्यत्रापि नित्यमिति काशिकादिमतम्। इवेरन्तस्थान्तस्य तु प्रेण्वनमित्यत्र न णत्वं पूर्वोक्तनिमित्तत्वाभावात्। विष्ण्वति प्रगूहमाणः प्रगूहमानो वा॥

१०। आसः शानस्य ईनः॥

११। परपदिनश्च शानस्ताच्छील्य-वयः-शक्तिषु॥

---

णौ कृते त्विति नरामोद्भवधातुत्वं न स्यात, किन्तु खरामोद्भवधातुत्वं स्यादिति तत्र तु विकल्प एवेति णेर्व्वेत्यनेनेति शेषः। उनुभ पूरण इत्यस्स इत्यनन्तरं ण्यन्तस्येति ज्ञेयम्। अण्यन्तस्य तु अस्माकं मतेऽपि नित्यं प्रोम्भणमिति उनुभ पूरणे तुदादिः। इविरिति अन्तस्थान्त इति अविष्णुवर्ग्य-ररामान्त इत्यर्थः। प्रेण्वनमिति इवि व्याप्तौ इरामेत्वान्नुम् अनोभाव इति अनः वैष्णवपरत्वाभावात् अविष्णुपदान्तस्येत्यादिना नस्य न विष्णुचक्रम्। अत्र ईश्वरादित्वेऽपि पूर्वोक्तनिमित्तत्वाभावात् न णत्वं. यत उक्तं पूर्वोक्तनिमित्तत्वे सत्येव षत्व-णत्वे इति सर्व्वेश्वरादेरितरव्यवधानात् पूर्वोक्तनिमित्तत्वाभावः। विष्णुजनादेरित्यादेरुदाहरणं दर्शयति विष्ण्वति। प्रगूहमाण इति गूह संवरणे भ्वादिरुभयपदी कर्त्तरि शानः शप् गोविन्दः गोह अ ऊ सर्व्वेश्वर इति अरामस्य ऊरामः मुक् णत्वम्॥

१०। आसः। आस उपवेशन इत्यस्माद्विहितस्य शानस्य स्थाने ईनो भवति॥

११। पर। ताच्छील्यवयःशक्तिषु गम्यमानासु आत्मपदिनः परपदिनश्चोत्तरे शानो भवति। ताच्छील्यं तत्स्वभावता फलनिरपेक्षया प्रवृत्तिस्ताच्छील्यमिति च। शानस्य आत्मपदस्थानीयत्वात् परपदिनो न प्राप्नोतीति विधानम्। भक्तं भजमान इति अत्र ताच्छील्यं गम्यते भजधातोरुभयपदित्वादात्मपदित्वं परपदित्वञ्च। कवचं बिभ्राण इति। अत्र कवचधारणेन वयो गम्यते कवचो वर्म्म। बिभ्राण इति डु भृञ् धारण-पोषणयोर्जुहोत्यादिरुभयपदी शाने कृते द्विर्वचनं नर ऋरामस्याराम इति ऋरामस्याराम हरिखड्गस्येत्यादिना नरस्य हरिघोषस्य हरिगदा। भृञ् आमि चेति अरामस्येरामः ऋद्वयं रः

भक्तं भजमानः, कवचं बिभ्राणः, रावणं निघ्नानः ॥

१२। वेत्तेः शतुर्वसुर्वा ॥

विदन् विद्वान् कृष्णम् । अकर्म्मकत्वेऽपि विद्वान् पण्डितः ॥

१३। शतृ-शानौ भविष्यति च तत्पूर्व्वं स्यश्च ॥

करिष्यन् करिष्यमाणः ।

१४। अर्हः शतृ पूज्ये ॥ अर्हन् ।

१५। इङ्-धारिभ्यां शत्रकृच्छ्रकर्त्तरि ॥

अधीयन् श्रीभागवतम्, धारयन् वेदान् । कृच्छ्रत्वे तु कष्टेनाधीयानः ॥

---

रावणं निघ्नान इति । अत्र रावणनिहननेन शक्तिर्गम्यते निघ्नान इति हन हिंसागत्योः परपदी गम-हन-जन-खन-घसामित्यादिना उद्धवादर्शनं हनो हस्य घो णिण्णयोरिति हस्य घः ॥

१२। वेत्तेः। विद ज्ञाने इत्यस्माद्विहितस्स शतृप्रत्ययस्य स्थाने वसुर्वा भवति। वेत्तेरिति निर्द्दिशो विद लाभ इत्यादेर्निरासार्थः। अकर्म्मत्वेऽपि शतुर्वसुर्भवतीति शेषः ॥

१३। शतृ। भविष्यति च काले धातोरुत्तरे शतृशानौ भवतः। तत्-पूर्व्वं शतृशानाभ्यां पूर्व्वं स्यश्च भवति। करिष्यन्निति ॠरामहनिभ्यामिट् सौ इति इट् ॥

१४। अर्हः। पूज्ये वाच्ये अर्हउत्तरे शतृ भवति। अर्हन्निति अर्ह पूजायां भ्वादि। पूज्य इति किम्। अवैष्णवो दुःखमर्हति ॥

१५। इङ्। कृच्छ्रं कष्टं कष्टरहिते कर्त्तरि वाच्ये इङ्धारिभ्यामुत्तरे शतृप्रत्ययो भवति। अधीयन्निति इङ् अध्ययने। इकिङौ नित्यमधिपूर्व्वौ। शतृ शप् महाहरः। योगविभागेन सन्धिं निर्वर्त्त्य पश्चादियादेशः। ङित्वात् शतृप्रत्ययो न भवतीति विधानम्। धारयन्निति धृङ् धारणे णिः ततः शतृ क्रियाफलस्य कर्त्तृगामित्वात् शतृप्रत्ययो न भवतीति विधानम्। कृच्छ्रत्वे त्विति कर्त्तुरिति शेषः। कृच्छ्रशब्देऽत्र धर्म्मिवचनः ॥

१६। द्विषः शतृ शत्रौ ॥

द्विषन्। अर्हदादयश्च फलान्तरं नापक्षन्ते रूढ़त्वात् ॥

मुख्यो लाक्षणिको गोणः शब्दः स्यादौपचारिकः।
रूढ़ो वा योगरूढ़ो वा यौगिकः शब्द एव च ॥

१७। न नारायणाच्छतुर्नुम्, ब्रह्मणस्तु कृष्णस्थाने तु वा।

ददत् ददतौ, जक्षत् जक्षतौ, ददन्ति ददति ॥

१८। शप्-श्याभ्यां शतुर्नुम् ईप्रत्यये शेषाद्द्वयात्तु वा ॥

चतुर्भुजानुबन्धांल्लक्ष्यामीप् वक्ष्यते। ब्रह्मण औ ई चोक्तः।

---

१६। द्विषः। शत्रौ वाच्ये द्विष उत्तरे शतृप्रत्ययो भवति। द्विषन्निति द्विष अप्रीतौ अदादिः शत्रुरित्यर्थः। शत्राविति किम्। औषधं द्वेष्टि। अर्हदादयश्चेति द्विषच्छब्दोऽर्हदादिश्चेत्यर्थः। यद्वा; फलान्तराप्रयोगे सद्विद्यमानघटमाना भवन्तीति पूर्व्वमुक्तं तदभिप्रेत्याह अर्हदादयश्च फलान्तरं नापेक्षन्त इति फलान्तरमिति क्रियान्तरमित्यर्थः। रूढ़त्वादिति रूढ़शब्दत्वादित्यर्थः। रूढ़त्वादित्युट्टङ्कितेन शब्दभेदानप्याह मुख्येत्यनेन। मुख्य एव शब्दः स्यात्, लाक्षणिक एव शब्दः स्यादिति सर्व्वत्र योज्यम्। तत्रेश्वरेच्छासङ्केतितो मुख्यो यथा घटपटादिः। लक्षणासङ्केतितो लाक्षणिको यथा गङ्गातटादिः। गौणवृत्तिप्रतिपाद्यो गौणः यथा अग्निमाणवकादिः। उपचारेण लक्षित औपचारिकः यथा सत्या इत्यत्र सत्यभामादिः शब्दानुकरणादिश्च। आधुनिक-संकेतितो रूढ़ः यथा डित्थ-डवित्थादिः। योगरूढ़वृत्तिप्रतिपादितो योगरूढ़ो यथा पङ्कजादिः। यौगिकवृत्तिबोध्यो यौगिकः यथा पाचकादिः। इत्यत्र मुख्य-रूढ़योरवान्तरभेदः अभिधासङ्केतितत्वेन तुल्यत्वात्। लाक्षणिक-गौणयोरप्यवान्तरभेदः गौणवृत्तेर्लक्षणैकदेशप्रभेदात् ॥

१७। न नारा। नारायणादुत्तरस्य शतृप्रत्ययस्य कृष्णस्थाने परे नुम् न भवति। नारायणात् ब्रह्मणस्तु शतुः कृष्णस्थाने परे नुम् वा भवति। ददिति डु दाञ् दाने जुहोत्यादिः श्रा-नारायणयोररामहरो निर्गुणकृष्णधातुक इति अरामहरः। जक्षदिति जक्ष भक्षहसनयोः अदादिः जक्षादिरपि नारायण इति नारायणत्वम्। ददन्तीति ब्रह्मतो जसशसोः शिरिति जस् शस् शिः ॥

क्रीड़न्ती दीव्यन्ती गोपश्रेणी गोपकुले वा। न दृश्यते च—

गतेऽर्द्धरात्रे परिमन्दमन्दं
गर्ज्जत्यसौ प्रावृषि नीलमेघः।
अपश्यती वत्सभिवेन्दुबिम्बं
विभावरी गौरिव हुङ्करोति॥

इति पाणिनिमुनेः काव्यम्। अरामहरस्य निमित्तमरामः पूर्व्ववच्च। तुदती तुदन्ती, भाती भान्ती, करिष्यती करिष्यन्ती सा ते वा। अन्यत्र तु अदती कुर्व्वती॥

१६। जोर्य्यतेरतृ भूते च॥

जरन् जरन्तौ॥

---

१८। शप्श्या। ईप्रत्यये परे शप्श्याभ्यामुत्तरस्य शतृप्रत्ययस्य नुम् भवति। ईप्रत्यये परे शेषाद्वयात्तु उत्तरस्य शतृप्रत्ययस्य नुम् वा भवति। शेषादिति शप्-श्याभ्यामन्यस्मादित्यर्थः। ईप्रत्यय इत्युक्ते स एव क इति चेत्तत्राह चतुर्भुजानुबन्धादिति। वक्ष्यते इति तद्धितप्रकरण इति शेषः। उक्त इति नामविष्णुपदप्रकरण इति शेषः। तस्माद् द्वयोरेवात्र ग्रहणमिति। क्रीड़न्तीति क्रीड़ विहारे भ्वादिः। दीव्यन्तीति दिवु क्रीड़ादिषु दिवादिः। लक्ष्मीत्वसूचनार्थं गोपश्रेणीत्युक्तं ब्रह्मत्वस्य द्विवचनान्तत्वस्य च सूचनार्थं गोपकुले इत्युक्तम्। न दृश्यते चेति क्वचित् नुम् न दृश्यते च बाहुल्यादिति शेषः। प्रावृषि वर्षाकाले अर्द्धरात्रे गते सति असौ नीलमेघः परि सर्व्वतोभावेन मन्दं मन्दं यथा स्यात्तथा गर्जति। तद्गर्जनमुत्प्रेक्ष्यते अपश्यतीत्यनेन। गौर्यथा वत्समपश्यती सती हुङ्करोति, तथैव विभावरी रात्रिर्वत्समिवेन्दूबिम्बमपश्यती सती हुङ्कारं करोतीत्यर्थः। अपश्यतीत्यत्र अपश्यन्तीति भवितुमर्हति। अरामहरस्येति अन्यथा शतुररामोत्तरता न स्यात्। तुदतीति तुद व्यथने तुदादित्वात् शपः शः। अरामहर ए अयोरविष्णुपदान्त इत्यरामहरस्य निमित्तमरामः पूर्व्ववच्च; ततश्च पक्षे नुम् तुदन्तीति। भा दीप्तौ अदादिः। सा गोपश्रेणी ते वा गोपकुले वा। अदतीति अद भक्षणे। अत्र प्राङ्निमित्ताभावात् नुमोऽभावः॥

२०। परोक्षातीते क्वसु-कि-काना अधोक्षजाभसंज्ञाः परपदात्मपदयोः ॥

प्रायश्छान्दसा एते। उकावितौ। अधोक्षजाभत्वाद् द्विर्वचनादि ॥

२१। नरे कृतेऽप्येकसर्व्वेश्वरादारामान्तात् घसेश्चैवेड् वसौ नान्येभ्यः ॥

एष भेजिवान् कृष्णं भाजयाञ्चकृवान्, आदिवान् तन्नैवेद्यम्, आदयाञ्चकृवान्।

वसोर्वस्य उत्वे निषेधप्राप्ते रिटोऽपायो निमित्तत्वाभावात्। भेजुषः आदुषः ददिवान् दरिद्रामासिवान्। मतान्तरे ददरिद्रवान् तन्मते अत्रेटश्च निषेधः। जक्षिवान्। ऋगतौ द्विर्वचनादि ॥

---

१६। जीर्य्य। भूते भूतकाले चकाराद्वर्त्तमानादौ जीर्य्यतेरुत्तरे अतृप्रत्ययो भवति। जरन्निति जॄ वयोहानौ दिवादिः वृद्ध इत्यर्थः। प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपीत्यमरः। शतृप्रत्यये जीर्य्यन्निति भवति ॥

२०। परो। परोक्षातीते काले परपदात्मपदयोः क्वसु-कि-काना भवन्ति, ते अधोक्षजाभसंज्ञाः। परपदात्मपदयोरिति पूर्व्ववद्व्याख्येयम्। तत्र क्वसु-की परपदस्थानीयौ, कान आत्मपदस्थानीयः। प्रायश्छान्दसा एते इति। तस्माद्भाषायामेतेषां प्रयोगप्राचुर्य्यं नास्तीति द्विर्वचनादीति भवतीति शेषः ॥

२१। नरे। वसौ परे नरे कृते न कृतेऽपि एकसर्व्वेश्वरात् आरामान्तात् घसेश्चैव इड् भवति। नान्येभ्य इति अन्येभ्य उत्तरे इट् न भवति नियमादिति शेषः। एकसर्व्वेश्वरादिति एकः सर्व्वेश्वरो यस्येति विग्रहः। कृ-सृ-भृ-वृस्तु द्रु-स्रु-श्रुभ्य एवाधोक्षजमात्रे नेड़ित्युक्तम्, अतोऽन्येभ्यः सर्व्वेभ्यः इट् स्यादिति नियमसूत्रं कृतम्। भेजिवानिति तृफलभजत्रपाम् इत्यादिना अरामस्य एत्वं नरादर्शनञ्च। अतो नरे कृतेऽप्येकसर्व्वेश्वरत्वं भाजयाञ्चकृवानिति-ण्यन्ताद्भजधातोः क्वसुः अनेकसर्व्वेश्वरकाशिभ्यामामधोक्षजे इति आम्, आमः कृभ्वस्तयोऽनुप्रयूज्यन्ते इति कृञोऽनुप्रयोगः। आदिवानिति अद भक्षणे क्वसुः

२२। अर्त्तेर्गोविन्दः क्वसौ ॥

आरिवान्। नान्येभ्य इट् ! बभूवान्। वसोर्वस्य उर्भगवति, भुवो भूव्, बभूवुषः। श्टृ दृ इत्येतयोर्वामनो वेति, शश्टृवान् शशर्वान्। जागृजजागर्वान् जजागृवान् इत्येके। भ्रस्जो भ्रवज्वान्। अत्र छ्वयोः शोटौ विकल्पयन्ति। विच्छ विविच्छ्वान् विविश्वान्। सङ्कर्षण एव पपृच्छ्वान्। कलापमतन्तु चिन्त्यम्। दिव यवयोर्हरोवले दिदिवान्। भगवति दिदिवुषः इत्यादि। मतान्तरे दिद्युषः॥

---

द्विर्वचनं ततो नरादेररामस्य त्रिविक्रमस्तस्मान्नुड् द्विविष्णुजने धातावित्यनेन त्रिविक्रमस्तस्मिन् कृते दशावतार इत्यनेन त्रिविक्रमोऽतोऽत्रापि नरे कृतेऽप्येक-सर्व्वेश्वरत्वम्; तत्रैवेयं कृष्णनैवेद्यम्। आदयाञ्चकृवानिति पूर्व्ववत्। वसोरिति वसोर्वस्य उत्वे सति निषेधप्राप्तेर्हेतोरिटोऽपायो निवृत्तिर्भवति। निषेधप्राप्तौ हेतुमाह निमित्तत्वाभावादिति। उरामस्य इटि निमित्तत्वं नास्तीति। ततश्च शसि भेजुषः आदुषः इति। वसोर्वस्य उर्भगवतीति उत्वम्। ददिवानिति दाधातोः क्वसुः आरामान्तत्वादिट्। दरिद्रामासिवानिति दरिद्रा दुर्गतौ आरामान्तत्वादिट् प्राप्तौ कृतेऽप्यकृतेऽपि य इत्यनेनामो नित्यत्वात् अनेकसर्व्वेश्वरकाशीत्यनेन आम्, अतो आरामन्तत्वेऽपि नेट् अस्तेरनुप्रयोगः। इटश्चेति आराम इटश्चेत्यर्थः। वसौ आरामहरश्च। जक्षिवानिति घसॢ अदन इत्यस्य अद घसॢसुं तेश-सनोरधोक्षजे तु वेत्यनेनअदादेश घसॢ इत्यस्य च रूपं गम-हन-जन-खन-घसामित्यादिना उद्धवादर्शनं घस्य कः वसि-घस्योः षः इति षत्वम्॥

२२। अर्त्तेः। क्वसौ परे अर्त्तेर्गोविन्दो भवति। गोविन्दे कृते त्रिवि-क्रमः। ततश्च एकसर्व्वेश्वरत्वादिट्। बभूवानिति भूनरस्य भोऽधोक्षज इति भूनरस्य भः, भस्य बः। भुवो भूविति। भूवो भूव् भूतेशाधोक्षजसर्व्वे-श्वर इत्यस्योल्लेखः। बभूवान् इति शसि। श्टृ दृ इत्यत्र वामनो वेति अधो-क्षज इति शेषः। शशर्वानिति सत्सञ्ज्ञाद्यृदन्तस्य ऋच्छेत्रृ रामान्ताञ्चेत्या-दिना गोविन्दः। जजागर्वानिति जागर्तेर्गोविन्दः। सर्व्वत्रेत्यादीदिना गो-

२३। गम-हन-विन्द-दृश-विशिभ्य इड् वा वसौ ॥

जग्मिवान् जग्मुषः। धातोर्मो नः, जगन्वान् जग्मुषः जघ्निवान् जघन्वान् जघ्नुष इत्यादि। विन्देति नुमा निर्देशः। विविद्वान् विविदिवान् ॥

२४। ईयिवस् प्रभृतयः।

इटा त्रिविक्रमादिना चैते क्वस्वन्ता निपात्यन्ते ॥

---

विन्दः। जजागृवानित्येक इति तन्मते गोविन्दो न भवतीति। भन्जो इति भन्जो आमर्द्दने। भवञ्जानिति अनिरामेतामित्यादिना उद्धवनरामहरः। अत्रेति अत्र क्वसौ विकल्पयन्तीति पूर्व्वाचार्य्या इति शेषः। छस्य शो वस्य ऊट् हरिवेणौ क्वौ कंसारिवैष्णवे च इति सूत्रम्। अत्र सूत्रे क्वाविति क्विपो रूपं तस्यैकदेशसाम्येन क्वसोरपि ग्रहणमिति छस्य श इत्यनेन नित्ये शोऽप्राप्ते विकल्पयन्तीति। विच्छीति। विच्छ गतौ। सङ्कर्षण एवेति तस्मात् प्रच्छ-धातोश्छरामस्य शोऽपि न भवतीति पूर्व्वाचार्य्यमतम्। पप्रच्छ्वानिति ग्रहिज्ये-त्यादिना सङ्कर्षणः। कलापमतन्तु चिन्त्यमिति तस्मात् कलापमते पप्रश्वा-निति। तन्मते ग्रहिज्येति सूत्रे प्रच्छोऽग्रहणात् सङ्कर्षणोऽपि स्यादतः पप्रच्छ्वा-नित्यपि। दिविति दिव् क्रीड़ादिषु। प्राचीनमते ऊटपक्षे दुद्यु वानिति भवतीति ज्ञेयम्। दिदिवुष इति वसोर्वस्य उत्वे कृते निमित्तापायात् पुनर्वराम इति। दिद्युष इति निमित्तापाये नैमित्तिकस्याप्यपाय इति नेष्यत इति ॥

२३। गम। गमलृ गतौ, हन हिंसागत्योः, विदलृ लाभे, दृशिर प्रेक्षणे विश प्रवेशने इत्येतेभ्य उत्तरे वसौ परे इड् वा भवति; क्वसाविति वा पाठः। जग्मिवानिति गम-हन-जन-खन-घसामित्यादिना उद्धवादर्शनम्। जग्मुषः भेजुष इतिवत्। इड़भावपक्षे जगन्वानिति। जग्मुष इति वसोर्वस्य उरामे कृते निमित्तापायान्नरामस्य मरामः उद्धवादर्शनम्। जघ्निवानिति उद्धवादर्शनः हनो हस्य घः। नुमा निर्देश इति विदलृधातोर्मुचादित्वात् नुम् भवतीति। श्नमा निर्देश इति पाठः क्वचित् दृश्यते। स त्वसभ्य एव ॥

२४। ईयि। वृत्तिमाह इटेति। एते ईयिवस् प्रभृतयः इटा त्रिविक्रमादिना च सह निपात्यन्ते। ईयिवानिति इन् गतौ क्वसुः, निपातादिट्।

इन-ईयिवान्। सोपेन्द्रत्वेऽपि समीयिवान्। ईयुषः। दाश्वसह-मिहां दाश्वान् साह्वान् मीढ्वान् निपात्यते। रध रेधिवान्। अथ कानः। चक्राणः रासं कृष्णः। कर्म्मणि कृष्णेन चक्राणो रासः। भावे, कृष्णेन चक्राणं जजागराणमित्यपि केषाञ्चित्॥

२५। अनूचानः कर्त्तरि॥

अनुवचो निपातः॥

२६। क्तवतुर्भूते॥

उकावितौ, क्रीड़ितवान् कृष्णः। कृतवान् क्रीड़ां क्रीड़ितवन्तौ राम-कृष्णौ॥

२७। क्तो भूते भाव-कर्म्मणोः॥

---

एति-हुवोर्यवौ कृष्णधातुक एवेति नियमात् नेयादेशः। ततो द्विर्वचने कृते इयादेशः त्रिविक्रमः। ईयुष इति शसि। प्रभृतिशब्दं विवृणोति दाश्वसह-मिहामिति। दाश्वानिति दाश्व दाने निपाताद्द्विर्वचनाभावः। साह्वानिति सह मर्षणे निपाताद्द्विर्वचनाभावः त्रिविक्रमश्च आत्मपदिनः क्वसुप्रत्ययो निपातादेवेति ज्ञेयम्। मीढ्वानिति मिह सेचने निपाताद् द्विर्वचनाभावः त्रिविक्रमश्च। रेधिवानिति रधहिंसायाञ्च अत्र निपातान्नुमाभावः। रधेर्न नुम् अधोक्षजवर्जितेटीत्युकमतोरधिजभोर्नुम् सर्व्वेश्वर इत्यनेन नुम् स्यात् किर्वक्ष्यते। कानमाह, अथ कान। चक्राण इति डु कृ ञ् करणे कर्त्तरि कानः द्विर्वचनं नर ऋरामस्यारामः कवर्गनरस्य चवर्गः। जजागराणमिति जागर्त्तेर्गोविन्द इत्यादिना गोविन्दः॥

२५। अनू। वृत्तिमाह अनुवचो निपातः अनूचान इति वच परिभाषणे परपदिनोऽपि निपातात् कानः। अनूचानः प्रवचने साङ्गेऽधीतिगुरोस्तु य इत्यमरः। प्रवचने वेदे॥

२६। क्तवतुः। भूते काले धातोरुत्तरे क्तवतुर्भवति। क्रीड़ितवानिति इटो रामधातुक इति इट्. चतुभु जानुबन्धत्वान्नुम्। अत्वसन्तोद्धवस्येत्यादिना त्रिविक्रमः॥

२७। क्तो। भूते काले धातोरुत्तरे भावकर्म्मणोर्वाच्ययोः क्तो भवति।

(४७) दक्षिणाग्निर्गार्हपत्याहवनीयौ (भ) त्रयोऽग्नयः ।
(४८) अग्नित्रयमिदं त्रेता (४९) प्रणीतः संस्कृतोऽनलः ॥
(५०) समूह्य परिचाय्योपचाय्यावग्नौ प्रयोगिणः ।
(५१) यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते ॥
तस्मिन्नानाय्यो (५२) ऽथाऽग्नायी स्वाहा च हुतभुक्प्रिया ।
(५३) ऋक् सामिधेनी धाय्या च या स्यादग्निसमिन्धने ॥

---

गृहपतिसंयुक्तो गार्हपत्योऽग्निस्तद्योनिराहवनीयः, होतव्योऽग्निः दक्षिणाग्निस्तद्योनिरन्ययोनिरपि ॥४७

अग्नित्रयमिदं त्रेता उच्यते। "वह्नित्रये च त्रेता स्त्री युगभेदे च दृश्यत" इति रुद्रः। अग्निहोत्रश्चात्र। यथा निगमाभिधानं—"पूर्णाहवनीयोऽग्निर्दक्षिणाग्निस्तु दक्षिणः। उत्तरे गार्हपत्यस्तु त्रेताग्निरिति कथ्यते ॥ अग्निहोत्रं तदेवोक्तमग्नित्रेताग्नयस्तथा। त्रेता चाग्नित्रयश्चैव ज्वलनत्रयमेव च ॥४८

मन्त्रादिना संस्कृतो वह्निः प्रणीतः। "प्रणीतः संस्कृते वह्नौ हृते क्षिप्ते प्रवेशित'' इति रभसः ॥४९

समूह्यादित्रयं यज्ञाग्नौ। परिचायोपचाय्यौ च समूह्यः क्रतुवह्निष्विति" रभसः। ऊह वितर्के ण्यण्, उपसर्गादह्रस्व ऊहतेरिति ह्रस्वश्च। परिचीयते उपचीयते परिचाय्योपचाय्यावग्नाविति निपातः ॥५०

गार्हपत्यादानीय यो दक्षिणाग्निः प्रणीयते स आनाय्यः। प्राङ्गोर्नित्योऽसम्मतानित्ययोः स्वरवदिति ण्यण् स्वरवच्च ॥५१

अग्नेति। त्रयमग्निभार्यायां शतक्रतुवृषाकप्यग्नीत्यादिना पुंयोगे ईः ऐत्वश्चारत्यस्य। सुष्ठु आहूयन्ते देवा अनया पृषोदरादिः ॥५२

सामीति। यामृचं पठित्वा अग्निर्ज्वाल्यते तत्र। समिध्यते अग्निरनया पृषोदरादिः। दधाति तामिति धाय्या। पाधोश्मानसामिधेन्यो रिति ण्यण् ॥५३

(५४) गायत्रीप्रमुखं छन्दो (५५) हव्यपाके चरुः पुमान् ।
(५६) आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः ।
(५७) धुवित्रं व्यजनं तद्यद्रचितं मृगचर्म्मणा ।
(५८) पृषदाज्यं सदध्याज्ये (५९) परमान्नन्तु पायसः ॥
(६०) हव्य-कव्ये दैवपित्रे अन्ने (६१) पात्रं स्रुवादिकम् ॥

---

गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तिप्रभृतयश्छन्दांसि । चदि आह्लादने असुन्नादेश्च छत्वम । "मुखञ्च प्रथमे चादौ प्रधाने च प्रकीर्त्तित"मिति कोषः ॥५४

हव्यं देवतार्थमन्नं तस्य पाके हव्ये स्थाल्यादावुपचारात् । चरेर्म्मरुवत् उः ॥५५

आमिक्षेति । शृते आवर्तिते उष्णे क्षीरे दधियोगतो या विकृतः सा आमिक्षा । आङ्पूर्वान्मिहेर्व्वाहुलकाद्दृषिवृषिमिहिभ्यः सगिति ह्रस्वमध्या पुरुषोत्तमेनोनादिवृत्तौ व्युत्पादिता । दीर्घमध्यापीति कश्चित् ॥५६

अग्निज्वालनार्थं मृगचर्म्ममयम् व्यजनं धवित्रम् । अर्त्तिलूधू इत्यादिना इत्रन । कुटादेरित्रणि धुवित्रञ्च ॥५७

दधिसहिते घृते पृषदाज्यम् । विन्दुयुक्तत्वात् पृषच्च तदाज्यञ्चेति । "पृषत्कञ्च सदध्याज्ये पृषदाज्यं तदुच्यत" इति रत्नकोषः ॥५८

परमान्नेति । स्वयं दुग्धपक्वान्ने देवार्थत्वात् परमान्नम् ॥५९

दैवे पैत्रे अन्ने यथासंख्यं हव्यकव्ये ॥६०

स्रुवादिकं यज्ञपात्रम् । पिवन्ति अनेन पाति वा पात्रम् । आदिना चमसादिः । ध्रुवादयः पञ्च नियतयज्ञपात्रविशेषाः । तत्र ध्रुवा वर्त्तुलाकृतिः । उपभृच्चतुरस्रा । जुहूस्त्रिकोणा । स्रवति घृतादिकमस्मात् स्रुवः । स्रुक् निपातिता । प्रायेणास्या बहुत्वप्रयोगात्-स्रुचः स्त्रिय इति बहुवचनम् । "स्रुग्बाहुमात्रा विज्ञेया द्विवितस्तिः स्रुवः स्मृत" इत्येकत्वे

ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः ॥
(६३) उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः ।
(६३) परस्पराकं शमनं प्रो-क्षणञ्च वधार्थकम् ।
(६४) वाच्यलिङ्गाः प्रमीतोपसम्पन्नप्रोक्षिता हते ।
(६५) सान्नाय्यं हवि (६६) रग्नौ तु हुतं त्रिषु वषट्कृतम् ॥
(६७) दीक्षान्तोऽवभृथो यज्ञे (६८) तत्कर्म्मार्हन्तु यज्ञियम् ॥

---

ऽपि। केचित्तु ध्रुवादयः स्रुचो भेदा इति वदन्ति। ध्रुवादयस्तिस्रः स्त्रिय इति व्याचक्षते। स्रुवः पुंस्येव ॥६१

मन्त्रेण पूतीकृत्य शस्त्रहतः पशुरुपाकृतः। उपाङ् पूर्व्वात् कृञ् हिंसायां क्तः ॥६२

परेति। त्रयं यागार्थं पशुहनने, परस्परा कं सुखं यस्मात्। शमु-क्षोयुंट् ॥६३

प्रमीति। त्रयं यागार्थं मारिते पश्वादौ। प्रपूर्व्वात् मीङ् हिंसायां कर्म्मणि क्तः। "त्रिलिङ्गमुपसम्पन्नं हतेऽपि च सुसंस्कृते" इति रुद्रः। 'प्रोक्षितो नियते सक्ते' इति रभसः ॥६४

सान्नाय्यमिति। द्वयं होतव्यमात्रे। सान्नाय्य-निकाय्यौ हविर्नि-वासयोरिति निपातः। अर्च्चि-रुचि-हु-सृपि-छादिछर्दिभ्य इस् ॥६५

अग्नौ हुतं घृतादिकं वषट्कृतं त्रिषु ॥६६

दीति। प्रधानयागसमापको न्यूनाधिकदोषशमनाय यः क्रियते प्रायश्चित्तादियज्ञः सोऽवभृथः। अवाद्भृञस्थक्। प्रधानयागो दीक्षा तस्यान्तः, 'दीक्षान्तावभृथौ समावि'ति रभसः। अन्ये तु "यज्ञावशेष-स्नानं यत्तदेवावभृथं विदुरि"ति तत्र द्वयमाहुः ॥६७

यज्ञकर्म्मार्हदेशादिकं यज्ञियम्। तच्छब्देन यज्ञः परामृष्यते कर्म्म च तस्यैव प्रस्तुतत्वात्। यज्ञमर्हति यज्ञियो ब्राह्मणः। यज्ञकर्म्म अर्हति यज्ञियो देशः ॥६८

त्रिष्व-(६९) थ क्रतुकर्म्मेष्टं (७०) पूर्त्तं खातादिकर्म्मणि ॥
(७१) अमृतं विघसो यज्ञशेष-भोजनशेषयोः ।
(७२) त्यागो विहापितं दानमुत्सर्जन-विसर्ज्जने ।
विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ।
प्रादेशनं निर्व्वपणमपवर्ज्जनमंहतिः ॥
(७३) मृतार्थं तदहर्द्दानं त्रिषु स्यादौर्द्ध्वदेहिकम् ।
(७४) पितृदानं निवापः स्यात् (७५) श्राद्धं तत् कर्म्म शास्त्रतः ।

---

क्रतौ दानादिक्रिया ईष्टं, यजेः क्तः ॥६९

खातादिकर्म्माणि दानं पूर्त्तम् । खातं पुष्करिण्यादि ॥७०

आदिना—"पुष्करिण्यः सभा वापी देवस्यायतनानि च । आरामश्च विशेषेण पूर्त्तं कर्म विनिर्द्दिशेत्" । पृधातोः क्तः ॥

यज्ञशेषो घृतादिरमृतम् । गुर्व्वादिभुक्तशेषो विघसः । उपसर्गेऽदेरल् घसादेशश्च ॥७१

त्याग इति । अंहतिपर्य्यन्तं त्रयोदश दाने । भाजेर्घञ् । विपूर्व्वाज्जहातेरिणन्तात क्तः । श्रण दाने, तालव्यादिरिणन्तात् युट् । तृ स्पृशोर्युट् । पदेरिणन्तात् युट् । प्रादिविशेषणैते दानार्थाभिधायिनः । हन्ति दुरितमित्यं हतिः पृषोदरादिः ॥७२

मृतदिवसे मृतार्थं जलाञ्जलिदानादि कर्म्म और्द्ध्वदेहिकम् । देहादूर्द्ध्वं भव तदहर्दानमिति । समासान्ताविधेरनित्यत्वात्त्रिपदतत्पुरुषाङ्गीकाराद्वा नात्प्रत्ययः ॥७३

पितॄनुद्दिश्य सामान्यं दानं निवापः । पितृग्रहणं मृतमात्रोपलक्षणम् ॥७४

कालपात्रादिनियमेन शास्त्रविहितं पितृकर्म्म श्राद्धम् । श्रद्धां दधात्यस्मिन् प्रज्ञा श्रद्धेति अण् । शास्त्रत इति हेतोः पञ्चमी ॥७५

(७६) अन्वाहार्य्यं मासिकेऽ (७७) शोऽष्टमोऽह्नः कुतपोऽस्त्रियाम् ॥

(७८) पर्य्येषणा परीष्टिश्चान्वेषणा च गवेषणा ॥

(७९) सनिस्त्वध्येषणा (८०) याच्ञाऽभिशस्तिर्याचनाऽर्थना ।

(८१) षट् तु त्रिष्वर्घ्यमर्घार्थे (८२) पाद्यं पादाय वारिणि ॥

(८३) क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि ।

(८४) स्यादावेशिक आगन्तुरतिथिर्ना गृहागते ॥

---

मासिकेऽमावस्यादि श्राद्धेऽन्वाहार्य्यम् । अन्वाङ्पूर्वात् हृञो ण्यण् ॥७६

अह्नो दिवसस्य पञ्चदशभागीकृतदिवसमध्यवर्त्ती अष्टमो भागः कुतपः । कु पापं तपत्यच् । "दिवसस्याष्टमे भागे यदा मन्दायते रविः । स कालः कुतपो नाम पितॄणां दत्तमक्षयम्" इति स्मृतिः ॥७७

पर्य्येषणेति । चतुष्कमनुसरणे । इषेर्युः बाहुलकात् क्तिश्च । गवेष मार्गणे चुरादिः ॥७८

सेति । द्वयं गुर्व्वादेः सत्कारपूर्व्वकनियोजने । षण् सम्भक्तौ इः दन्त्यादिरयं सनी च ॥७९

येति । चतुष्कं प्रार्थनामात्रे । याचेर्याचिविच्छीत्यादिना नङ् । शन्स स्तुतौ याचने क्तिः अर्थ याच्ञायां युट् ॥८०

आगन्तुपर्य्यन्तं वक्ष्यमाणाः षट् त्रिषु । अर्घः पूजाविधिः । अर्घात् तादर्थे यत् अर्घ्यं पुष्पतोयादि ॥८१

पादार्थमुदकं पाद्यम् ॥८२

अतिथ्यर्थेऽन्नादावातिथ्यम् । अतिथिषु साधु आतिथेयं यणेयणौ आतिथेयस्तमातिथ्यमिति रघुः ॥८३

आवेशेति । त्रयं गृहागतेऽतिथौ । आवेशनमावेशोऽन्तःप्रापणं तदर्हतीति आवेशिकः आवेशन इति इकण् । आगच्छति तुकः । नास्ति

(प्राघूर्णिकः प्राघुनकश्चाभ्युत्थानन्तु गौरवम् । )

(८५) पूजा नमस्यापचितिः सपर्य्याऽर्च्चार्हणाः समाः ।

(८६) वरिवस्या तु शुश्रूषा परिचर्य्याप्युपासनम् ॥

(८७) व्रज्याऽटाट्या पर्य्यटनं (८८) चर्य्या त्वीर्य्यापथे स्थितिः ।

(८९) उपस्पर्शस्त्वाचमन (९०)-मथ मौनमभाषणम् ॥

[ प्राचेतसश्चादिकविः स्यान्मैत्रावरुणिश्च सः ।

वाल्मीकाथ गाधेयो विश्वामित्रस्तु कौशिकः ।

व्यासो द्वैपायनः पाराशर्य्यः सत्यवतीसुतः ॥

---

चिरं स्थितिर्यस्मादतिथिस्तेन कथ्यते" इति मत्स्यपुराणम् । अचिर-स्थिरत्वात् अनित्या तिथिरस्य पृषोदरादित्वादतिथिः । अतिथिर्द्वयोरिति त्रिकाण्डशेषः । स्त्रियामतिथी ॥८४

पूजेति । षट् पूजायाम् । गौरवितप्रीतिहेतुः पूजा । पूजधातोरङ् नमस्तपोवरिवसस्तु यिन् । शंसि प्रत्ययादः । चायश्चि पूजायामिति परः । स्वमते चिनोतेः क्ति । सपर्य्या निपातिता दन्त्यादिरिति सुभूतिप्रभृतयः । अर्च्चेरङ् । अर्हेर्युः ॥८५

वरीति । चतुष्कं गुर्व्वाद्याराधने । श्रु श्रवणे सनन्तादः । समजेत्यादिना परिपूर्व्वात् चरेः क्यप् । उपपूर्व्वादासेर्युट् ॥८६

व्रज्येति । त्रयं भिक्षार्थमितस्ततःपरिभ्रमणे । व्रज्यजोः क्यप् । "भ्रमप्रस्थानयोर्व्रज्या स्त्रियां पर्य्यटनेऽपि चे'ति रुद्रः । अटेर्यशब्दादः ॥ ८७

गतिः स्थितिनिषेधः, शयनञ्च ईर्य्या सैव पन्था आचारस्तत्र स्थितिर्ध्यानमौनादिर्यतीनां धर्म्मचर्येति सुभूः ॥८८

उपेति द्वयमाचमने । स्पृश संस्पर्शे घञ् । "उपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपी"ति रत्नकोषः । अङश्चमेर्युट् ॥८९

मौनमिति । द्वयं मौने । मुनेः कर्म्म अण् ॥९०

  

(९१) आनुपूर्व्वी स्त्रीयां वावृत् परिपाटी अनुक्रमः ।
पर्य्याय-(९२) श्चातिपातस्तु स्यात् पर्य्यय उपात्ययः ॥
(९३) नियमो व्रत-मस्त्री (९४) तच्चोपवासादि पुण्यकम् ।
(९५) उपवस्तन्तूपवासो (९६) विवेकः पृथगात्मता ॥
(९७) स्याद् ब्रह्मवर्च्चसं वृत्ताध्ययनर्द्धि-(९८) रथाञ्जलिः ।

---

आन्विति। पञ्च आनुपूर्व्वे क्रमे। वा स्त्रियामानुपूर्व्वी। आभापणसाहचर्य्यात् क्लीवत्वम् आनुपूर्व्वम्। आनुपूर्व्वी साहचर्य्यात् आवृत् परिपाटी स्त्रियाम्। आवर्त्तनमावृत्। अनुपूर्व्वात् क्रमेर्घञ्। क्रमश्च—"क्रमः शक्तौ परिपाट्यां क्रमश्चरणपङ्क्योरिति विश्वः। परिपूर्व्वादिनः क्रमेऽर्थे घञ् ॥९१

अतीति। त्रयं व्यतिक्रमे। पतेर्भावे घञ् इणश्चाल् उपसर्गादर्थविशेषलाभः ॥९२

शास्त्रविहितो नियमः व्रतम्। "मन्त्रणायां प्रतिज्ञायां नियमो निश्चयव्रत"मिति रभसः ॥९३
तच्च व्रतमुपवासादिलक्षणं पुण्यकमुच्यते। "शीलं चरित्रं चारित्रमुपवासादिपुण्यक" मित्यमरमाला। आदिना अक्षरलवणाशनादि ॥९४

उपेति। द्वयमुपवासे उपपूर्व्वोऽकर्म्मको वसिरनशनार्थः, घञ्। उपवस्तं वसु स्तम्भे इत्यस्य क्ते रूपम्। "उपावृत्तस्तु पापेभ्यो यस्तु वासो गुणैः सह। उपवासः स विज्ञेयः सर्व्वभोगविवर्जित" इति। अमरमालायान्तु—"उपवासः पुमान् वा स्यादुपवस्तञ्च कीर्त्तित"मिति क्लीब-काण्डम् ॥९५

प्रकृतिपुरुषयोर्व्विशेषज्ञानं विवेकः। पृथक् भिन्न आत्मा स्वभावो यस्य तस्य भावः। अन्यतो विलक्षणस्य भावः, पृथगात्मा इत्यपरे ॥९६

स्यादिति। वृत्ता जाता वेदाध्ययनस्य या ऋद्धिः सम्पत्तिगुणोत्कर्षप्रभावस्तद्ब्रह्मवर्चसम्। ब्रह्मणोवर्चस्तेजः ब्रह्महस्तीत्यादिना अत् ॥९७

वेदपाठे योऽञ्जलिः क्रियते स ब्रह्माञ्जलिः ॥९८

पाठे ब्रह्माञ्जलिः (९९) पाठे विप्रुषो ब्रह्मबिन्दवः ॥
१००) ध्यानयोगासने ब्रह्मासनं (१०१) कल्पे विधिक्रमौ ।
(१०२) मुख्यः स्यात् प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः ॥
(१०३) संस्कारपूर्व्वंग्रहणं स्यादुपाकरणं श्रुतेः ।
(१०४) समे तु पादग्रहणमभिवादनमित्युभे ।
(१०५) भिक्षुः परिव्राट् कर्म्मन्दी पाराशर्य्यपि मस्करी ।
(१०६) तपस्वी तापसः पारिकांक्षी (१०७ वाचंयमो मुनिः ॥

---

वेदपाठे ये श्लेष्मकणा निःसरन्ति, ते बिन्दवो ब्रह्मबिन्दवः ॥९९

ध्यानयोगयोः साधनभूते ऊर्द्ध्वपादस्वस्तिकपद्मासनादावासने ब्रह्मासनम् ॥१००

केति। द्वयं यागाद्यङ्गभूते वैदिकविधाने। "कल्पः शास्त्रविधौ न्याये संवर्त्ते ब्रह्मणो दिने" इति। 'क्रमोऽनुक्रमकल्पयो' रिति रुद्रः ॥१०१

शास्त्रादेशितक्रमेण प्रथमः कल्पो मुख्यः। यथा व्रीहिभिर्यजेतेति। तदभावे नीवारैर्यजनमनुकल्पः ॥१०२

संस्कारो वटुकरणं तत्पूर्व्वकं वेदस्य ग्रहणम् उपाकरणम् उपाकर्म्मेति प्रसिद्धम् ॥१०३

पादेति। द्वयमभिवादने। "उपसंग्रहणञ्चापि प्राहुः सन्तोऽभिवादन"मिति भागुरिः १०४

भीति। पञ्चकं चतुर्थाश्रममाश्रिते परिव्राजके। भिक्षेरुः, परिव्रजतीति क्विप्दीर्घश्च। कर्म्मन्द्यति पृषोदरादिः। पाराशरोक्तं सूत्रमधीते णिनिः। मा कर्त्तुं शीलमस्य कास्तीराजेत्यादिना निपातः। श्रमणशब्दोऽप्यत्र ॥१०५

तपेति। त्रयं तपस्विनि। उपवासादि तपस्तद्योगाद्विन्। तपश्चरति अण्। पारमस्त्रास्ति पारि ब्रह्मज्ञानं तत् काङ्क्षतीति आवश्यके णिनिः ॥१०६

# प्रणव-पारिजातः

( संस्कृत-मासिकपत्रम् )

त्रयोदशवर्षम् , अष्टमसंख्या ]                [ चैत्रमासः १८९२ शकाब्दः ]

## महारसायनम्

### श्रीश्रीनामामृतलहरी

श्रीश्रीठाकुरसीतारामदासोङ्कारनाथकृतमहारसायनस्यानुवादः

अनुवादिका—अध्यापिका डक्टर वाणी चक्रवर्त्ति-काव्य-स्मृतितीर्था

( पूर्वतोऽनुवृत्तम् )

—मनसो मरणम्—

किं तावत् शान्तिं न प्राप्स्यामि ? किं न भविष्यति आसक्तितो मम निस्तारः ?

भविष्यति खलु भविष्यति ।

कथय माम्, कथङ्कारेण तावदहं शान्तो भविष्यामि ; कथय कथय, केन खलु मम सर्व-दुःखात् निवृत्तिर्भविष्यति, त्वया सह दिवानिशं स्थातुं पारयामि । कदा मम तद्दिनं समागमिष्यति ?

यदा तव मनसो मरणं भविष्यति ।

कथङ्करेण मनसो मरणं भविष्यति ? कथय माम् । मनसो मृत्युना त्वां प्राप्स्यामीति कथयसि—अद्योऽहं मनसो मरणाय दृढ़सङ्कल्पो भवामि । उपायं निर्देशय, शक्तिं प्रापय, यदेव त्वं कथयिष्यसि, तदहं करिष्यामि । मन्त्रस्य साधनं शरीरस्य पातनं वा—इदं स्थिरीकृत्य त्वां निकषा आगतोऽहम् ।

समर्थोऽसि ? तदा शृणु—

'यो मां पश्यति सर्वत्र सर्वञ्च मयि पश्यति'—बोद्धुं समर्थोऽसि ? किं वदसि, सुस्पष्टं वद ।

सर्वत्र मां पश्य, मयि च सर्वं पश्य—तेनैव शान्तिं लब्धुं शक्नोषि, मनसोऽपि मरणं भविष्यति।

केन रूपेण कुत्र द्रक्ष्यामि ?

क्षितिरापोऽग्निर्वायुराकाशम्—इति पञ्च भूतानि अहम्, एष्वेव पञ्चभूतेषु मां पश्य। श्रोत्र-त्वग्-जिह्वा-चक्षु-घ्राण-वाक्-पाणि-पाद-पायूपस्थ-मनांसि—एषु एकादशसु इन्द्रियेषु मां पश्य। शब्द-स्पर्श-रूप-रस-गन्धाः—एषु पञ्चसु तन्मात्रेषु मां पश्य। प्राणादिषु पञ्चसु वायुषु मां पश्य।

नाहं ते सर्वाः कथा बोद्धुं शक्नोमि।

पश्य, यत् पश्यसि—तत् सर्वमहम्। देवो दानवो, यक्षो रक्षो, गन्धर्वः किन्नरः, नरो नारी, पशुः पक्षी, कीटः पतङ्गो, जलं स्थलम्, अनिलोऽनलश्चेत्यादयः सर्वं अहमेव। द्विपश्चतुष्पदो बहुपदोऽपदश्चेति सर्वं अहम्। रोगः शोकः, मानापमानौ, हास्यं क्रन्दनं, शान्तिरशान्तिः, शत्रुर्मित्रं, तिरस्कारः पुरस्कारश्चेति सर्वं अहम्। अन्यत् किमपि नास्ति जगति मां विना। किं भोः! त्वं हतवाक् सन् स्थितोऽसि ?

त्वमेव सर्वम् अहोः कस्तावद् आनन्दः!

"दृश्यते श्रूयते यद् यत् स्मर्यते वा रघूत्तम।
त्वमेव सर्वमखिलं त्वद् विना नान्यकिञ्चन॥"

( श्रीअध्यात्मरामायणम् )

यद् दृष्टं, यत् श्रुतं—तत् सर्वं त्वम्! अखिलं जगत्—सर्वमेव त्वम्! नान्यत् किञ्चिद् विद्यते त्वां विना! इदानीमपि सर्वत्र त्वां द्रष्टुं न शक्नोमि, तथाप्यहं शान्तिसमुद्रे निमज्जामीवा। सर्वमेव त्वम्! सर्वमेव त्वम्!! सर्वमेव त्वम्!!!

बाढ़म्, अहमेव सर्वम्, अहमेव सर्वम्, अहमेव सर्वम्। नैयायिकस्य सप्त पदार्था अहम्; वैशेषिकस्य विशेषोऽहम्; सांख्यस्य चतुर्विंशति तत्त्वान्यहम्; पुरुषोऽहम्; पातञ्जलस्य यम-नियमासन-प्राणायाम-प्रत्याहार-ध्यान-धारणा-समाधयः खल्वहम्। उपनिषदो ब्रह्माहम्, योगिनः परमात्माहम्, वेदान्तस्याद्वयज्ञानमहम्; रामः कृष्णश्चाहम्;

भक्तोऽहम्, अभक्तोऽहम्; शाक्तोऽहम्, शक्तिरहम्; श्रीमद्भागवतस्य कृष्णोऽहम्; रामायणस्य रामोऽहम्; देवीभागवतस्य देवी अहम्; शैवस्य शिवोऽहम्; सौरस्य सूर्य्योऽहम्; गाणपत्यस्य गणेशोऽहम्; वैष्णवस्य च विष्णुरहम्।

अहो, क आनन्दः! सर्वेषां कठिनप्रश्नानां मीमांसा सम्पादिता। कथय कथय—अन्यदपि कथय।

खृष्टोऽहम्, भक्तोऽहम्; महम्मदोऽहम्, माहम्मदीयोऽहम्; ब्राह्मणोऽहं, चण्डालोऽहम्; देवोऽहम्, पिशाचोऽहम्। पापमहं, पुण्यवानहम्; ज्ञानवानहं मूर्खोऽहम्, शिष्योऽहम् गुरुरहम्; श्रोताहं, वक्ताहम्; सङ्कल्पोऽहं विकल्पोऽहं; स्वर्गोऽहं, नरकोऽहम्; अन्धकारोऽहम्, ज्योतिरहम्; योगोऽहं, भोगोऽहम्; मुक्तिरहं, बन्धनमहम्—सर्वमेवाहम्। पश्य—पश्य—उत्तमरूपेण चक्षुषा पश्य, प्रति अणुपरमाणुषु तिष्ठाम्यहम्। कं प्रति क्रोधं द्वेषञ्च प्रकाशयसि? सर्वमेवाहं—मां विना अन्यत् किञ्चिदेव नास्ति। अतिष्ठमहं, तिष्ठाम्यहं, स्थास्याम्यहं। यश्च हिंसां त्वं करिष्यसि, सैव हिंसा मां प्रति कृतेति बोद्धव्या। इह खलु अनन्ते ब्रह्माण्डे केवलमहं तिष्ठामि।

अहो, कस्तावदानन्दः! किं करिष्यामि, कथय—कस्मिन् कृते भावोऽयं मम चिरं प्रतिष्ठितः स्थास्यति—कथय माम्।

"खं वायुमग्निं सलिलं महीञ्च
ज्योतींसि सत्त्वानि दिशो द्रुमादीन्।
सरित्समुद्रांश्च हरेः शरीरं
यत् किञ्च भूतं प्रणमेदनन्यः॥"

(श्रीमद्भागवतम् ११।२।४१)

आकाशं वायुरग्निर्जलं पृथ्वी चन्द्रः सूर्य्यो ग्रहो नक्षत्रं सर्वे जीवाः, दश दिशः, सर्वे वृक्षाः, नदी समुद्रश्चेत्यादीनि सर्वाण्येव वस्तूनि मे शरीराणि इति बुद्ध्वा प्रणम। कविकथितस्य मनसो मरणस्य श्रेष्ठोऽयमुपायः। प्रणम रे—प्रणम।

"चेतसैवानिशं सर्वभूतानि प्रणमेत् सुधीः।
ज्ञात्वा मां चेतनं शुद्धं जीवरूपेण संस्थितम् ॥"

(अध्यात्मरामायणम्)

जीवरूपेण स्थितं शुद्धचित्तं मां बुद्ध्वा चित्तेन सर्वाणि भूतानि सदा प्रणम। इत्येवं प्रणमन् यदा त्वं मे परमो भक्तो भविष्यति, तदा त्वं देहेन प्रणमितुं शक्नोषि—

"विसृज्य स्मयमानान् स्वान् दृशं व्रीड़ाञ्च दैहिकीम्।
प्रणमेद् दण्डवद् भूमावाश्व-चाण्डाल-गोखरम् ॥"

(श्रीमद्भागवतम् ११।२९।१६)

बन्धवो यदि हसन्ति, तर्हि ते हसन्तु—'ब्राह्मणोऽहं, चण्डालोऽहम्' इमां दैहिकदृष्टिं त्यक्त्वा—कुक्कुरं, चण्डालं, गां, गर्दभं सर्वमयं प्रणमितुं शक्नोषि। प्रणामः—प्रणाम एव मनसो मरणस्य एक एवोपायः। एवं प्रणामेन यदा त्वं स्वसत्तां हारयिष्यति, तस्मिन दिने द्रक्ष्यसि—

अहं हरिः सर्वमिदं जनार्दनो
नान्यत् ततः कारणकार्यजातम्!

हरिरहं, सर्वमिदं जनार्दनः; न सर्वाणि कार्यकारणानि तस्माद् भिन्नानि सन्ति।

ईदृङ् मनो यस्य न तस्य भूयो
भवोद्भवा द्वन्द्व-गदा भवन्ति ॥

(श्रीविष्णुपुराणम् २२।८५)

ईदृशं मनो यस्य, तस्य संसारोत्पन्नाः सुखदुःखादयो द्वन्द्वरोगा न भवन्ति।

एतावद्दिवसात् परं मनसो मरणस्य औषधं प्राप्तम्। प्रणामः—प्रणामः। ऊर्द्धम् अधः सम्मुखे पश्चाच्च—प्रणामः, प्रणामः। हे राम! प्रणामः, प्रणामः।

—(क्रमशः)

# हरिनामामृतम्

नाम नाटकम् ( प्रथमो भागः )।

अध्यापक-स्वर्गत-अमियनाथ चक्रवर्त्ति एम्-ए, काव्यतीर्थेन विरचितम्

( पूर्वतोऽनुवृत्तम् )

॥ प्रथमोऽङ्कः ॥

। पञ्चमं दृश्यम् ।

श्रीवासः। यद्ययं ते वायुः स्यात्, तर्हि इममेव वायुं ब्रह्मादयोऽपि कामयन्ते। देहि मह्यमंशतोऽपि ते वायुरोगं, येन जीवनं मे धन्यं भवति। श्रीकृष्णस्य कृपा त्वयि महाभाग्येन वर्षिता, अतो मनुष्यदुर्लभम् अमूल्यं कृष्णप्रेम त्वयि सञ्जातम्।

[ गौराङ्ग उपागत्य श्रीवाससमालिङ्गति ]

गौराङ्गः। पण्डित! परमं कल्याणं कृतवांस्त्वं मम, मातुश्च। नायं वायुरोग इति रक्षितोऽस्मि।

श्रीवासः। ( शचीदेवीं प्रति ) विश्वम्भरमातः! जनास्तावन् निर्बोधाः। तेषां कथाभिर्मा व्याकुला भवतु। नायं वायुरोगः। एतत् खलु कृष्णप्रेम। एतादृशं प्रेम न कुत्रापि जीवे दृश्यते। इदानीं स्थिरा भव। न जनेभ्यः किमपि अस्मिन् विषये त्वया वक्तव्यम् भवेत्। ( गौराङ्गं प्रति ) यथारुचि वदन्तु नाम जनाः, अलं तव तच्छ्रवणेन। आगच्छ—आगच्छन्तु च शिष्याः, इतः प्रभृति विश्वम्भर-पुरःसराः सर्वे वयं मिलिताः सन्तः श्रीहरिसंकीर्तनं करिष्यामः।

गौराङ्गः। तथास्तु पण्डित।

[ शिष्याणामाह्वानाय निष्क्रान्तः ]

शची। पण्डित! तथापि मम भयं, यदि नाम विश्वरूपवन्मम विश्वम्भरोऽपि सन्न्यासी भवेदिति।

श्रीवासः। तथापि तव पुत्रस्तव पुत्र एव स्थास्यति। त्वमिदानीं भक्तानामाहारादिषु मनो धेहि।

शची। एषाहं गच्छामि। ( निष्क्रान्ता )

[ शिष्यैः सह गौराङ्गस्य प्रवेशः कीर्तनञ्च ]

शिष्यैः सह गौराङ्गः। } हरि-हरये—( इत्यादिकम् )

[ सहसा गदाधरो गृहमध्ये स्थितः सन् उच्चैः क्रन्दति ]

गौराङ्गः। ( रोदनध्वनिं श्रुत्वा व्याकुलम् ) कः खलु क्रन्दति ?

श्रीवासः। गदाधर! आगच्छ।

[ गदाधरः प्रविश्य गौराङ्गस्य पदयुगलं धृत्वा च केवलं क्रन्दति, न तु किञ्चिद् वदति ]

गौराङ्गः। गदाधर! सार्थकं ते जन्म यतस्त्वं शैशवात् श्रीकृष्णभजनं कुर्वंस्तिष्ठसि। गदाधर! अहं तावत् कृष्णं प्राप्तवान्, किन्तु कुत्र, कुत्रेदानीं स मे कृष्णः? निजदोषेण वञ्चितोऽस्मि। कियन् मे दुःखं, तद् युष्मासु सम्यग्वक्त न पारयामि।

( गदाधरमालिङ्गति )

गदाधरः। त्रिभुवनं कृष्णप्रेमपूर्णं अहं तु तत् कृष्णप्रेम इदानीमपि न जानामि।

( क्रन्दति )

गौराङ्गः। नास्ति कोऽपि त्वत्सदृशो भाग्यवान्, सत्वरं त्वं कृष्णप्रेम प्राप्स्यसि। सततं तिष्ठ मम पार्श्वे। कृष्ण! कृष्ण! कुत्र कृष्ण? कुत्र कृष्ण?

[ मूर्च्छितो भूमौ पतितो भवति ]

श्रीवासो गदाधरश्च। } हरे कृष्ण हरे कृष्ण ( इत्यादिकम् )

[ शिष्याः श्रीवासश्च तं धृत्वा कर्णयोर्नाम उच्चारयन्ति, गदाधरस्तं सेवते। सहसा गौराङ्ग आनन्दोत्फुल्लवदनो हसन् उत्थाय हस्तौ प्रसार्य्य किमपि वक्तुं चेष्टते। तेन नामदानं विरतं भवति। ]

गौराङ्गः। ( आवेशेन ) आगतः, आगतः शरीरेण नवद्वीपे।

श्रीवासः। कः, क आगतः ?

गौराङ्गः। महापुरुषः, स कृष्णप्रेमवितरणकारी महापुरुषः। आचार्यपाद! कैश्चन सह गत्वा नवद्वीपमध्यात् अन्विष्य तमानयतु मम सकाशम्। इदानीमेवाहं तं दृष्टवान्—ऋजु सुन्दरमनोहरं वपुः, स्कन्धे स्तम्भः, गमने अस्थिरः, वामकरे वक्रयष्टिः, कट्यां बद्धवेत्रः कमण्डलुः शृङ्गश्च, परिधाने शिरसि च नीलवस्त्रं, वामश्रुतिमूले च विचित्रं मकरकुण्डलं, वदने क्षणे हासः, क्षणे क्रन्दनध्वनिर्हुङ्कराश्च। कृपया तमानयतु। पश्य, तदर्थमतीव कातरोऽहं सञ्जातः।

श्रीवासः। तूर्णमहं गच्छामि।

[ श्रीवासः अविलम्ब्य निष्क्रान्तः ]

गौराङ्गः। वयमपि संकीर्तनेन सह चलन्तो भक्तसाक्षात्कारान् कुर्मः।

सर्वे। ( कीर्तनम् )

हरिहरये नमः
कृष्ण यादवाय नमः।
यादवाय माधवाय केशवाय नमः॥

( दृश्यावसानम् )

—( क्रमशः )

# श्रीमद्भगवद्गीतायां भक्ति-कर्म्मवादौ

( निबन्धकः—अध्यापकः श्रीरवीन्द्रकुमारसिद्धान्तशास्त्री )

( पूर्वतोऽनुवृत्तम् )

"ब्रह्मण्याध्याय कर्म्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥" इति

अनासक्तानां योगिनामप्यात्मशुद्धये कर्म्मसाधनस्य प्रयोजनमस्ति। कर्म्म च कुर्वन्ति ते। केवलमासक्तिराहित्यवशादेव तेन तेषां दोषो नोत्पद्यते। अत्रोक्तम्—

"कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।
योगिनः कर्म्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥" इति

व्याधिभिरन्यैश्च विविधैः क्लेशैर्नियतं भृशं निपीड़िता मानवाः सर्व्वं एव चरमकाम्यत्वेन शान्तिमभिलषन्ति। सा च शान्तिः सर्वेषामेवाभिप्रेतेति नास्ति सन्देहावकाशः। गृहिणस्त्यागिनो भोगिनो योगिनश्च सर्व्वं एव शान्तिकामिनः। एवमशेषकल्याणदायिनीं सर्व्वाभिप्रेतां शान्तिं कथं लभन्त इत्याह—

"युक्तः कर्म्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥" इति

अनासक्तो निष्कामः कर्म्मी कर्म्मफलस्य भगवते समर्पणादेव शान्तिं लभते। आसक्तस्तु शान्तिं लब्धुं न शक्नोति। स केवलं वासनया पीड्यत एव। देहस्थितमात्मानमुदाहरणतया संस्थाप्य तद्वदेवानासक्तो भवेदित्युपदिशति—

"सर्वकर्म्माणि मनसा संन्यस्यास्ते सुखं वशी।
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥" इति

नवद्वारविभूषितेऽस्मिन् जीवदेहे स्थितोऽप्यात्मा जीवेन कर्म्म कारयन्, कारयितृत्वेन स्वयमपि कुर्व्वंश्च केनापि कर्म्मणा यथा न लिप्यते ज्ञानिनापि ज्ञानेन तथा भवितव्यमित्युपदेशः।

एतेन पञ्चमाध्यायस्थितं कर्म्मप्रशंसनं समाप्य पुनः षष्ठाध्याये तदेव प्रशंसति ; यथा—

"अनाश्रितः कर्म्मफलं कार्य्यं कर्म्म करोति यः।
स सन्न्यासी च योगी च न निरग्निर्न चाक्रियः॥"

यः फलनिरपेक्षः सन् कर्म्म करोति, स एव सन्न्यासीति निगद्यते। न हि कर्म्म विना सन्न्यासस्य सम्भवः। तादृश एव कर्म्मी योगीति संज्ञामपि लभते। एतेन कर्म्मण एव सन्न्यासत्वं योगत्वञ्च विज्ञापितम् यादृशः कर्म्मी तावदग्न्याधानमकुर्व्वन्नपि साग्निकत्वं लभते, तस्यैव च क्रियावानिति संज्ञा भवति। एतेन कर्म्मणैव सर्व्वं लभ्यत इति बोधितम्।

ननु पातञ्जलसूत्रे 'योगश्चित्तवृत्तिनिरोध' इति योगलक्षणमुक्तम्। निरुद्धासु चित्तवृत्तिषु समताज्ञानमेव जायते। तदा च कर्म्मणामुपशम एव स्यात्। अतः कथं भवता कर्म्येव योगीत्येवं वक्तुं शक्यत इत्याह—

"आरुरुक्षोर्म्मुनेर्योगं कर्म्म कारणमुच्यते।
योगारूढ़स्य तस्यैव शमः कारणमुच्यते॥" इति।

चित्तवृत्तेर्निरोध एव योगः। स च वृत्तिनिरोधः कर्म्म विना भवितुं नार्हति। तथा च पातञ्जलसूत्रम्—"अभ्यास-वैराग्याभ्यां तन्निरोध" इति। तेनैव साधनपादो नाम दर्शनस्यास्य पादान्तरमपि विद्यते। साधनं विना योगसिद्धेरसम्भवात् साधनस्य च कर्म्मस्वरूपत्वात् कर्म्मणैव योगसिद्धिर्भवतीति अवश्यमेवाङ्गीकर्त्तव्यम्। अतएवोक्तं योगमारोढु-मिच्छन् कर्म्मण्येव प्रवर्त्तेत, यतः कर्म्मैव योगसिद्धेः कारणमिति। यदा तु भविष्यसि सिद्धियोगस्तदैव भविष्यति ते कर्म्मवृत्तेरुपशम इति च।

योगारूढ़ोऽपि जनः सर्व्वथा कर्म्म न परित्यजति, केवलं तत्फलमेव जहाति। इन्द्रियार्थेषु कर्म्मफलेषु च निःस्पृहः सन् यदा कश्चित् कर्म्म करोति, तदैव सर्व्वकामपरित्यागिनस्तस्य योगारूढ़ इति संज्ञा भवेत्। तत्रायं श्लोकः—

"यदा हि नेन्द्रियार्थेषु न कर्म्मस्वनुसज्जते।
सर्व्वसङ्कल्पसन्न्यासी योगारूढ़स्तदोच्यते॥" इति

एतावत् श्रुत्वा विचिन्त्य च पुनर्व्विभिन्नैः सन्देहैराक्रान्तोऽभवत् तत्र-भवान् धनञ्जयः। पञ्चमाध्याये सन्न्यासस्य कर्म्मयोगस्य च निःश्रेयस-करत्वमुक्तं भगवता। तत्र पूर्व्वोक्तविषयान् पर्य्यालोच्य, कायेन मनसा वाचा च यः कर्म्मत्यागः, स एव सन्न्यासशब्देन लक्षित इत्येवमनुमित-मर्ज्जुनेन।

यद्यपि कर्म्म विना तादृशस्त्यागो न सम्भवति, तर्ह्यपि कथन्तेनैव कारणेन तादृशकर्म्मत्यागोऽकर्म्मणः श्रेष्ठत्वमङ्गीकरिष्यते? क्रमोन्नतिरेव लोकेऽस्मिन् सर्व्वैर्म्मानवैः कार्य्यते साध्यते च। नहि कश्चित् सचेता आत्मन अवनतये प्रवर्त्तते। तेन कर्म्मणस्तादृशत्यागस्य यदि श्रेष्ठत्वं न स्यात्, को नाम तदा तदर्थं यतिष्यते? कथं वा तत्र यतितव्यम्? अपि च भगवतैव—

"न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्म्मकृत्।" इति

"न हि देहभृता शक्यं त्यक्तुं कर्म्माण्यशेषतः।"

इति च कथनात् केनापि जीवितेन जनेन सर्व्वथा कर्म्मत्याग एव न सम्भवतीत्येव ज्ञायते। मृत्युरेव सर्व्वथा कर्म्मत्यागस्य नामान्तरमिति मयापि प्राग् भणितम्।

साम्प्रतमर्ज्जुनोऽप्येतावता सन्देहेनाक्रान्तः पुनर्भगवदुक्त-सन्न्यासादेरभिप्रेतार्थं विज्ञातुमाह—

"सन्न्यासस्य महाबाहो! तत्त्वमिच्छामि वेदितुम्।
त्यागस्य च हृषीकेश! पृथक् केशिनिषूदन॥" इति

(अः १८)

प्रश्नस्यास्योत्तरमाह भगवन्—

"काम्यानां कर्म्मणां न्यासं सन्न्यासं कवयो विदुः।
सर्व्वकर्म्मफलत्यागं प्राहुस्त्यागं विचक्षणाः॥" इति

एतेन केवलं काम्यकर्म्मत्याग एव सन्न्यासः सर्व्वेषामेव कर्म्मणां फलत्यागश्च त्याग इति स्वाभिप्रेतार्थो विज्ञापितो भगवता। तेन च यद्यपि केवलं काम्यकर्म्मत्यागेनापि मुक्तिर्लभ्यते, तर्ह्यपि कर्म्मणा-

  

मपरित्यागेन केवलं सर्व्वेषां कर्म्मणां फलत्याग एव तस्माद् गरीयानिति 'तयोस्तु कर्म्मसन्न्यासात् कर्म्मयोगो विशिष्यते' इति श्लोकांशस्यार्थ इत्यायातम् ।

यस्तु केवलं काम्यकर्म्माण्येव त्यक्तुमिच्छति, स कर्म्मणां काम्या-काम्यत्वनिर्द्धारणे एव विमुग्धो भवितुमर्हेत् । सर्व्वकर्म्मफलत्यागविषये तु नास्ति तादृश-मोहप्रसङ्गः । एतस्मिन् विषये गीतायामेवोक्तं "किं कर्म्म किमकर्म्मेति कवयोऽप्यत्र मोहिताः ।" इति ।

अथ कर्म्मत्याग-कर्म्मयोगयोर्व्विषये मुनीनां मतभेदं प्रदर्शयति—

"त्याज्यं दोषवदित्येके कर्म्म प्राहुर्म्मनीषिणः ।
यज्ञ-दान-तपः-कर्म्म न त्याज्यमिति चापरे ॥" इति

सन्न्यासप्रशंसका मनीषिणो दोषयुक्तानि कर्म्माणि त्याज्यानीति कर्म्मयोगप्रशंसकास्तु यज्ञदानतपआदीनि कर्म्माणि न त्याज्यानीत्येवं निगदन्ति । यज्ञादीनां फलयोगश्रवणात्तेषां सदोषत्वमङ्गीक्रियते पूर्व्वपक्षैः । उत्तरपक्षास्तु तेषां वैधत्वान्निर्द्दोषतामेव प्रतिपादयन्ति । एवं मुनीनां मतभेदमुक्त्वा पुनस्तत्र स्वमतमपि कथयति—

"यज्ञदानतपःकर्म्म न त्याज्यं कार्य्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥" इति

एतेनापि कर्म्मत्यागो गीताशास्त्रस्यानभिप्रेत इत्येव स्पष्टं विज्ञापितम् । यज्ञादीनां पावनत्वञ्च प्रख्याप्य तत्र दृढ़ता प्रतिपादिता ।

यद्यपि कर्म्मत्यागो भगवतोऽनभिप्रेतस्तर्ह्यपि तत्फलत्यागः सर्व्वथैवाभिलषितः । तथोक्तं—

"एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्त्तव्यानीति मे पार्थ ! निश्चितं मतमुत्तमम् ॥" इति

एतेनापि आसक्तिं फलकामनाञ्च सर्व्वथा विहाय केवलं कर्त्तव्यबोधा-ल्लोकशिक्षार्थञ्च कर्म्माचरणमेव गीताशास्त्रस्य परमं मतमिति स्पष्टं विज्ञापितम् ।

रजोगुणेन तमोगुणेन च जायते या कार्यप्रवर्त्तना, भगवतोऽनभिप्रेतैव सा। तादृशं रजस्तमःकलुषितं कर्म्म स भृशं निन्दितवान्। केवलं सत्त्वगुणाश्रितं कर्म्मैव तस्याभिप्रेतं पुनः पुनस्तेन प्रशंसितञ्च। अत्रोक्तम्—

"नियतस्य च सन्न्यासः कर्म्मणो नोपपद्यते।
मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः॥
दुःखमित्येव यत् कर्म्म कायक्लेशभयात्त्यजेत्।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्॥
कार्य्यमित्येव यत् कर्म्म नियतं क्रियतेऽर्ज्जुन!
सङ्गं त्यक्त्वा फलञ्चैव स त्यागः सात्त्विको मतः॥" इति

सर्व्वथा कर्म्मत्यागस्य नितरामसम्भवाद् यः कर्म्मफलं परित्यजति, स एव त्यागीति कथ्यते। अत्र स्फुटमुक्तम्—"यस्तु कर्म्मफलत्यागी स त्यागीत्यभिधीयते।" इति।

सदसद्भेदेन कर्म्मणो द्वैविध्यमङ्गीक्रियते सुधीपुङ्गवैः। सत्कर्म्म सर्व्वैरेवाद्रियते असत् कर्म्म च निन्द्यते नियतमेव। एतद् द्वैविध्यञ्च साध्वसाधुभेदेनापि कथ्यते। श्रीमद्भगवद्गीतायामपि तादृशं कर्म्मद्वैविध्यमङ्गीकृत्य सत्कर्म्मणः समाचरणीयता, असत्कर्म्मणश्च परित्यागोऽभिप्रेतत्वेन विज्ञापितौ। तत्र किन्नाम सत्कर्म्मेत्याह—

"सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते।
प्रशस्ते कर्म्मणि तथा सच्छब्दः पार्थ! युज्यते॥
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते।
कर्म्म चैव तदर्थीयं सदित्येवाभिधीयते॥" इति

( अः १७ )

किन्नामेहासत् कर्म्म किञ्च तस्य फलमित्याह—

"अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत्।
असदित्युच्यते पार्थ! न च तत् प्रेत्य नो इह॥" इति

एतावता विविधैरुपदेशैः स्वकीय [illegible] कर्म्मयोगस्यैव

प्राधान्यं प्रख्याप्य पुनरर्ज्जुनं रणाय प्रवर्त्तयितुमिच्छन् भगवान् वदति—

"यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमाल्लोँकान्न हन्ति न निबध्यते ।।" इति

अतः स्वाभिमानं परित्यज्य निर्लिप्तः सन् शत्रूनेव जहि । रणाय प्रवृत्तस्य ते रणमेवापरिहार्य्यं कर्त्तव्यम् । न तु तत्फलचिन्ता करणीया । न च तत्र स्वजनान् प्रत्यासक्तेन भवितव्यम् । एतदेव सात्त्विकं कर्म्म । इत्यर्ज्जुनं प्रति भगवदुपदेशः ।

सात्त्विकं कर्म्मैवाचरणीयं सदा सुधीभिरिति सात्त्विककर्म्मणो लक्षणमपि गदितम् ; यथा—

"नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म्म यत् तत् सात्त्विकमुच्यते ।।" इति

पुनः सात्त्विकतामेव विज्ञापयितुमाह—

"मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्व्विकारः कर्त्ता सात्त्विक उच्यते ।।" इति

एवं मन्निष्ठानां वैधानां कर्म्मणां करणे मोक्षलाभ एव ते भविष्यतीति नैतत् कर्म्मकरणं निरर्थकत्वेन त्वया भाव्यमिति श्लोकेनाह—

"सर्व्वकर्म्माण्यपि सदा कुर्व्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ।।" इति

एवं परोक्षभावेनोपदिश्य पुनः प्रत्यक्षभावेन समुपदिशति—

"चेतसा सर्व्वकर्म्माणि मयि सन्न्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ।।" इति

एवं मदुपदेशानां पालने भविष्यति ते सर्व्वविपन्नाशस्तदन्यथा तु विनाश एवेत्याह—

"मच्चित्तः सर्व्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत् त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि ।।" इति

—( क्रमशः )

# पूज्य-पूजाव्यतिक्रमपरिणामः

निबन्धकः—श्रीलक्ष्मीधर द्विवेदी, साहित्यधर्मशास्त्राचार्य्यः

सेयं घटना बहोः कालात्प्राक् समजनि।

तदानीं राजा नहुषः वेदोक्तविधिना क्रतूनां शतमनुष्ठाय तत्पुण्य-प्रभावेण पुरुहूतपदेनाधिष्ठितोऽभूत्। निखिले स्वाराज्ये तस्याधिपत्यं बभूव। सुधर्मायाममरमण्डली प्रत्युत्थानाभिवादादिभिस्तं सम्मानयामास। तत्प्रीतिसम्पादनाय रम्भोर्वशीमेनकादयोऽप्सरसो ननृतुः। तदीययशोगीतिगानेन हाहा-हूहू-प्रमुखा गन्धर्वा मन्दरोपवनं निनादयामासुः। हरिचन्दनोक्षिते तदीये वक्षसि पारिजातमाला मन्दमारुते-नान्दोलिताभूत्। कदाचिदैरावतं कदाचिदुच्चैःश्रवसं वारुह्य समन्ताद् बभ्राम। यावन्ति उपभोगसाधनानि सन्ति, तानि सर्वाण्यनुभूय स नितरां प्रहृष्टः सञ्जातः।

शास्त्रेषु श्रूयते "हृष्टो दृप्यति दृप्तो धर्मानतिक्रामयति"। नहुषविषये कुतो वास्य व्यतिक्रमः स्यात्? स कदाचित् स्वमनसि विचारयामास यत् "मत्सदृशो न कोऽपि सौभाग्यवान् अस्यां त्रिलोक्यां विद्यते। सुमनसोऽपि ममाज्ञां सुमनोमालामिव सादरं शिरसि गृह्णन्ति। मदपेक्षया को गुणाधिकः? किमस्ति भूयोऽप्युपभोग्यमस्मिन् स्वर्लोके? आं, नाद्यापि पुलोमजासमागमो मे सञ्जातः। अद्यैव मन्दाकिन्या मन्दमारुतसेविते रोधसि तया सह विहरिष्यामी"ति सञ्चिन्त्य काञ्चिदप्सरं समाहूय तन्मुखेन स्वमनोभावं शचीसमीपं प्रेषितवान्।

महेन्द्रमहीषी शची पतिव्रतास्वग्रगण्या। नूतनेन्द्रस्य वार्तामाकर्ण्य दूतीमुखात् सातिशयखिन्नतामाप। कर्त्तव्यनिर्द्धारणे नितान्तमक्षमा सती सा सुरगुरुं बृहस्पतिं सस्मार। तत्क्षणादेव तामुपस्थाय गीष्पतिः

  

स्मरणकारणमपृच्छत्। सापि प्रणम्य तस्मै नूतनेन्द्रसन्देशं निवेदयामास क्षणं चिन्तयित्वा बृहस्पतिः प्रोवाच—मर्त्योऽयं स्वपुण्यातिशयप्रभावेण स्वाराज्यमधितिष्ठति। यथास्य पुण्यक्षयः स्यात्, तदनुष्ठेयम्, त्वया इत्थं वाच्यं यत्, "सत्यं मत्समागमकामश्चेद्भवान् तर्हि ब्रह्मर्षिभिरुह्यमानां शिविकामारुह्य मदन्तिकमागच्छतु। इत्युक्त्वान्तर्हितोऽभूद् गुरुः। बृहस्पत्युक्तप्रकारं वाचिकं दूतीमुखेन नहुषाय शची निवेदयामास। सोऽपि कामाकुलितचेता अगस्त्यप्रमुखानाहूय शिविकावाहने नियोजयामास। स्वयञ्चातीव प्रहृष्टः शिविकामारुरोह। इन्द्रादेशोऽयमिति मत्वा शान्ता ब्रह्मर्षयोऽपि बलिबर्दवत् शिविकां वोढुं प्रवृत्ताः। अनभ्यावशाच्छिबिकान्दोलिताभूद् गमने विलम्बश्च सञ्जातः। तदा नहुषचेतसि शचीमधिकृत्य महती आसीत् उत्कलिका।

"मामालोक्य दूरात् कृतस्मरा सलज्जा शची तत्रागत्य स्वागतं ज्ञापयेत्। अद्यैवाहं धन्यो भविष्यामि तस्या अनन्यसुलभाया अङ्गसङ्गमुपलभ्य", ईदृश्या भावनयाभिभूतत्वाद् विलम्बमसहमानः "सर्प सर्प" इत्यभिधायागस्त्यस्य पृष्ठे पदाघातमकरोत्। तदा ब्रह्मर्षेः क्रोधानलः सन्धुक्षितोऽभूत्, तेन च स "सर्पो भव दुरात्मन्नि"ति शेपे, तस्मिन्नेव क्षणे महोरगः सन्नहुषः स्वर्गात् पृथिव्यां पपात। अतो ह्युक्तं

अभ्युन्नतं पदं प्राप्य पूज्यान्नैवावमानयेत्।
इन्द्रतां नहुषः प्राप्तश्च्युतोऽगस्त्यावमाननात्॥"

—०—

# ग्रन्थसमालोचनम्

ग्रन्थनाम—सफलो विद्यार्थी

ग्रन्थकारः—श्रीमद्रामचन्द्रभारतीमहोदयः

मूल्यम्—४·२५

प्राप्तिस्थानम्—२५१८ चुडीवालान, दिल्ली-६

सफलो विद्यार्थीति नामधेयं संस्कृतमयं ग्रन्थरत्नं मया सम्यक् सोल्लासं समधीतम्। अस्मिन् ग्रन्थे बहूनि विचित्राणि विषयाणि सन्निवेशितानि सन्ति। यथा कश्चन देवार्च्चको देवाराधनाय स वर्ण-बहुवर्णविशिष्ट-विविधकुसुमानि सञ्चित्य एकस्मिन्नेव पुष्पपात्रे च तानि संस्थाप्य देवान् समर्च्चयति, तथा अयमपि ग्रन्थकारस्तदीय-सुनिपुणप्रतिभया विविध-शास्त्रतो ग्रन्थश्च बहुल शिक्षोपयोगि विषयान् समवचित्य स्वकीयस्थापन-सौकर्य्येण ग्रन्थेऽस्मिन् लोकशिक्षायै सुन्दराकारेण संस्थाप्य अस्मादृशान् शिक्षाव्रतनिष्ठान सुतरां समुज्जीवयति। स्वलिखितप्रबन्धावलिमध्ये ग्रन्थकारस्य सरलसंस्कृतोक्तिषु पाटवं समेषामेव संस्कृतप्रियाणां हृदयानन्द-दायकम्। लिखनप्रणाली बुधानामपि सर्व्वथा कामनीया। प्रबन्ध-सारस्यं पाठकचित्तचमत्कारकारकम्। मुद्रणपारिपाट्यं निरघम्। धर्म्म-नीतिशिक्षादानविषये ग्रन्थकारस्य कुशलतापि सर्वथा समादर-योग्याः! विविध धर्म समन्वये ग्रन्थकृतो महत्त्वं सर्वतो विसारि। आकृतिरपि विचित्रप्रच्छदपटेन दर्शनीयेति। ग्रन्थस्यास्य बहुलप्रचारः काम्यते। अलमतिवाक्पल्लवेनेति शम्।

श्रीरामरञ्जन काव्यव्याकरणतीर्थेन कृतम्।

—:o:—

स्नातं कृष्णेन। स्तुतो विष्णुर्वैष्णवैः॥

२८। अतीतादौ क्त-क्तवतू विष्णुनिष्ठासंज्ञौ॥

निष्ठेत्यन्ये॥

२९। क्षियस्त्रिविक्रमो विष्णुनिष्ठायां कर्त्तरि, आक्रोशदैन्ययोस्तु वा, तस्मात्तरामस्य नः॥

क्षिधातुर्द्विविधः। अन्तर्भूतण्यर्थः केवलश्च। क्षीणवान् कामं वैष्णवः॥

३०। क्तः कर्त्तरि च वाच्यः॥

क्षीणायुर्भव क्षितायुर्वा। क्षीणोऽयं वैष्णवः क्षितो वा। भावकर्म्मणोस्तु, क्षितं कामेन वैष्णवस्य। क्षितः कामो वैष्णवेन॥

---

स्नातमिति स्ना शौचे भावे क्तः भावकृद् ब्रह्मणीति ब्रह्मत्वम्। स्तुत इति ष्टुञ् स्तुतौ कर्म्मणि क्तः॥

२८। अती। अतीतादौ काले विहितौ क्त-क्तवतु विष्णुनिष्ठासंज्ञौ भवतः। संज्ञासूत्रमेतत्। अतीतादावित्यपादानात् वक्ष्यमाणस्य वर्त्तमानक्तस्यापि विष्णुनिष्ठात्वम्॥

२९। क्षियः। क्षियः कर्त्तरि विहितायां विष्णुनिष्ठायां परस्यां क्षियस्त्रिविक्रमो भवति। क्षिय इति। क्षि क्षये भ्वादिः, क्षि निवास-गत्योः तुदादिर्द्वयोरेव ग्रहणम्। आक्रोशे दैन्ये च गम्यमाने तु त्रिविक्रमो भवति। आक्रोशः शापः। तस्मात् त्रिविक्रमात् परस्य तरामस्य स्थाने नो भवति। क्षिधातुरिति क्षयार्थ इत्यर्थः। अन्तर्भूतण्यर्थत्वात् सकर्म्मक इत्यर्थः। केवलश्चेति अन्तर्भूतण्यर्थशून्यत्वादकर्म्मकश्चेत्यर्थः। क्षीणवान् कामं वैष्णव इति अत्रान्तर्भूतण्यर्थः॥

३०। क्तः। क्तः कर्त्तरि च वाच्यः वक्ष्यते इत्यर्थः। क्षीणायुर्भवेति गत्यर्थाकर्मक-श्लिष-स्थास-वस-जन-रुह-जीर्य्यतिभ्यः क्तः कर्त्तरि चेति क्तः। अत्राक्रोशो गम्यते। क्षीणोऽयं वैष्णव इति अत्र दैन्यं गम्यते। क्षितः कामो वैष्णवेनेति अत्रान्तर्भूतण्यर्थत्वात् कर्म्मणि क्तः॥

३१। श्रिञो जागृवज चतुर्भु जान्ताच्च नेट् कपिले ॥

श्रितः भूतः ऊर्णुतः क्षुतः। जागृस्तु जागरितः ॥

३२। रदाभ्यां विष्णुनिष्ठा तस्य पूर्व्वदस्य च नो दां विना, नुद-विनक्ति-त्रा-घ्रा-ह्री-उन्दीभ्यो वा ॥

शॄ-शीर्णः, भिन्न, नुन्नः, नुत्तः, विन्नः वित्तः, त्राणः त्रातः, घ्राणः घ्रातः, ह्रीणः ह्रीतः ॥

३३। आ-ईरामानुबन्धाद्विकल्पितेटः स्मयतेराश्वसेर्वमेश्च नेड् विष्णुनिष्ठायाम् ॥

---

३१। श्रिञो। कपिले परे श्रिञ् सेवायामित्यस्मात् जागृवर्ज्जं चतुर्भुजान्ताच्चोत्तरे इट् न भवति; ऊर्णुत इति ऊर्णुञ आच्छादने। क्षुत इति टुक्षु शब्दे। उ ॠ रामान्तरुस्नुक्ष्णुशीयुनुक्षुश्विडीश्रिभिः। वृङ्-वृञ्भ्याञ्च विनैकाचः स्वरान्ता धातवोऽनिटः। इत्युक्तमतः श्रिभूक्षूणामिट् स्यादिति निषेधविधानम्। जागरित इति जागृ निद्राक्षये ॥

३२। रदाभ्याम्। रदाभ्यामुत्तरस्य विष्णुनिष्ठातस्य पूर्व्वदस्य च स्थाने नो भवति। दां विनेति; दाधातोर्विष्णुनिष्ठातस्य पूर्व्वदस्य च नो न भवति। दावर्जनस्य फलमग्रे वक्तव्यम्। नुद प्रेरणे विद विचारे त्रैञ् पालने घ्रा गन्धोपादने ह्री लज्जायां उन्दी क्लेदने इत्येतेभ्य उत्तरस्य विष्णुनिष्ठातस्य नो वा भवति; पूर्व्वदस्य च नः। सन्नियोगशिष्टं नरामद्वयविधानं यदा विष्णुनिष्ठातस्य नो भवति। तदैव पूर्व्वदस्य च नः; यत्र पुनर्दरामो नास्ति, तत्र विष्णुनिष्ठातस्य नः। नदविनत्युन्दीनां पूर्व्वेण त्रा घ्रा इत्येतयोरपि हरिमित्रेत्यादिना वक्ष्यमाणसूत्रेण प्राप्ते विभाषा। शीर्ण इति शॄ हिंसायाम् ॠरामस्येर् कंसारावितोर्। धातुरव इति त्रिविक्रमः। भिन्न इति भिदिर विदारणे सहजानिट् तस्य दस्य च नः। नुन्न इति सहजानिट् तस्य दस्य च नः। नुत्त इति सहजानिट्त्वान्नेट्। एवं विन्न इति च। विनत्तीति निर्द्देशात् विद सत्तायामित्यस्य नित्यम्। विन्न इति च ॥

३३। आ ई। विष्णुनिष्ठायां परस्याम् आरामानुबन्धादीरामानुबन्धात्

उन्नः उक्तः। नवर्ज-तवर्गस्थस्य इत्युक्तेरत्र तु मूर्द्धन्यत्वम्। क्षुण्णः॥

३४। हरिमित्रयुक्सत्सङ्गाद्यारामान्तल्वादिभ्य ओरामेतश्च विष्णुनिष्ठातस्य नः, दुनोति-ग्वोस्त्रिविक्रमश्च॥

द्राणः ग्लानः, लूनः॥

३५। पूञो विनाश एव॥

पूनः। नष्ट इत्यर्थः। अन्यत्र तु, पूतः। ज्या-ग्रहि-ज्येति सङ्कर्षणः। श्या-श्वि-व्या-ज्येति त्रिविक्रमः, जीनः। टु दु उपतापे दूनः। दु गताविति प्रसादे भ्रमः। अमरकोषकविकल्पद्रुमादिविरोधात्, गूनः। विष्णुनिष्ठादेशस्य षत्वादन्यत्र स्थानिवद्भाव इष्टः, तेन चवर्गस्य कवर्गे—भुजो-भुग्नः। ओव्रश्च सङ्कर्षणः, विष्णुनिष्ठातस्य नः। स्कोः सत्सङ्गाद्योर्हरः, छशो राजेत्यादिना प्राप्तं षत्वमत्र तु न स्यात्। ततश्चवर्गस्य

---

विकल्पित इट् यस्य तस्मात् टु ओ श्वि गति-वृद्ध्योः इत्यस्मात् आङ्पूर्व्वात् श्वस प्राणने इत्यस्मात् टु वम उद्गिरणे इत्यस्माच्च उत्तरे इट् न भवति। उन्न इति ईरामानुबन्धत्वान्नेट्, अनिरामेतामित्यादिना नरामहरः। मूर्द्धन्यत्वन्। क्षुण्ण इति क्षुदिर् सम्पेषणे सहजानिट् तस्य दस्य च नः; णत्वं नवर्ज-तवर्गस्थस्य नस्य न णत्वमिति सूत्रम्।

३४। हरि। हरिमित्रयुक् सत्सङ्ग आदिर्येषां ते हरिमित्रयुक्-सत्सङ्गादयस्ते च ते आरामान्ताश्च तेभ्यः ल्वादेः ओरामेतश्च उत्तरस्य स्थाने नो भवति। ल्वादिगणः। दुनोति, टु दु उपतापे, गु पुरीषोत्सर्गे इत्येतयोर्विष्णु-निष्ठातस्य स्थाने नो भवति, तयोस्त्रिविक्रमश्च। द्राण इति द्रा कुत्सायां ग्लान इति ग्लै हर्षक्षये। लून इति लूञ छेदने श्रिञो जागृवर्जेत्यादिना इड् निषेधः॥

३५। पूञो। पूञ् पवन इत्यस्य विष्णुनिष्ठातस्य स्थाने विनाशेऽर्थे एव नो भवति नान्यत्र। पूत इति पवित्र इत्यर्थः। ज्येति ज्या वयोहानौ ल्वादिः दु गताविति प्रसादे भ्रम इति। प्रसादे व्याकरणविशेषे। हेतुमाह अमरेति। दु गतावित्यस्य ग्रहणे सति अमरकोष-कविकल्पद्रुमादिभिः सह

कवर्गो णत्वं वृक्ण। ओहाक् प्रहीणः। दिवादौ पूङादयो व्रीङन्ता ओरामेतः। सूनः दूनः॥

३६। डीङो नेट् च॥

डीनः लीनः दीनः॥

३७। स्फायः स्फीर्व्वा विष्णुनिष्ठायाम्॥

---

विरोधः स्यादिति तथाहि, सन्तापितस्त्वसन्तप्तो धूपितधूपायितौ च दून श्चेत्यमरकोषः। दुनोऽनुताप इति कविकल्पद्रुमः। टुरामौ रामनरामा इतः ओरामेत्वाद्विष्णुनिष्ठातस्य नः नरामेत्वात् स्वादित्वम्। विष्णुति। विष्णुनिष्ठाया आदेशस्य नरामस्य षत्वादन्यत्र स्थाने स्थानिवद्भावः। स्थानिवत्त्वं तरामवत्त्वम्। इष्ट इति पूर्व्वाचार्य्यैरिति शेषः। अतो वैष्णवस्य परत्वम्। ततश्च चवर्गस्य कवर्गः। भुग्न इति ओरामेत्वाद्विष्णुनिष्ठातस्य नः। षत्वमत्र तु न स्यादिति षत्वादन्यत्रेत्युक्तत्वादिति शेषः। चवर्गस्य कवर्ग इति स्थानिवद्भावादिति शेषः। प्रहीण इति दामोदरेत्यादिना ईरामः। दिवादौ वर्त्तमानाः पूङादयो व्रीङन्ता धातव ओरामेतो भवन्ति; ओरामेत्वात्तेषां विष्णुनिष्ठातस्य स्थाने नो भवति। तद्गणो यथा। पूङ् दूङ् दीङाः प्रोक्ता धोङ्मीङौ रीङस्तथा। णीङ डीङ वृजश्चैते ओरामेतः पूङादयः। पूङ प्राणिगर्भविमोचने दुङ् परितापे दीङ् क्षये धोङ् अनादरे मीङ् हिंसायां रीङ् श्रवणे लीङ् श्लेषणे डीङ् विहायसां गतौ व्रीङ् वरणे। एते नव पूङादयः॥

३६। डीङो। विष्णुनिष्ठातस्य नो भवतीति, प्रतिपादितमेव इट् च न भवति; ऊ ऋमान्तेत्यादौ डीङोऽपि वर्जनमुक्तमत इट् स्यादिति निषेधविधानम्। दिवादेरोरामेत्वादिड्निषेधश्च तस्यैव तेन शादेस्तु डयित इति केषाञ्चिन्मतम्। अस्माकं मते त्विटः परसम्बन्धित्वेन कपिलत्वाद्गोविन्दो न भवति, किन्त्वातिदेशिकविधेरनित्यत्वात् टीदागमः परसम्बन्धीति क्वचिद्व्यभिचरति च। तस्मादिटः परसम्बन्धित्वं खण्डयित्वा पृथक् रामधातुमनेन एवम्विधादौ स्थाने गोविन्दोऽपि भवितुमर्हति॥

३७। स्फायः। विष्णुनिष्ठायां परस्यां स्फायो वृद्धाविलस्य स्थाने

स्फीतः स्फातः। उच्छौ विवासे,व्युष्टा रजनी अति-क्रान्तेत्यर्थः ॥

३८। श्यैङः सङ्कर्षणो द्रवकाठिन्ये हिमत्वे च, प्रतेस्त्वन्यत्र च, अभ्यवाभ्यामेव वा विष्णुनिष्ठायाम्, विष्णुनिष्ठातस्य नो, न तु हिमत्वे।

शीनं घृतम्। हिमत्वे तु शीतं जलम्। द्रवेत्यादिभ्यामन्यत्र, संश्यानो गौः शीतान्न सङ्कुचित इत्यर्थः। प्रत्यादिभ्यस्तु। प्रतिशीनो गौर्द्रवो वा। अभिश्यानः अभिशीनः। एवमव। एवकारात्, समवश्यानः ॥

३९। दिवो विष्णुनिष्ठातस्य नो न तु विजीगीषायाम्, अच्चो-ऽनपादाने ॥

---

स्फोर्वा भवति; स्फीत इति ईरामानुबन्धत्वान्नेट् स्फात इति यवयोर्हरो वल इति य लुक् ॥

३८। श्यैङः। द्रवकाठिन्ये हिमत्वे च वाच्ये विष्णुनिष्ठायां परस्यां श्यैङ् गताविरयस्य सङ्कर्षणो भवति। हिमत्वे शीतलत्वे। प्रतेरुत्तरस्य श्यैङस्तु द्रवकाठिन्येमित्वे अन्यत्र च वाच्ये सङ्कर्षणो भवति। अभ्यव प्रतेः। विष्णुनिष्ठायां परस्यां केवलाभ्यामभ्यवाभ्यामुत्तरस्य श्यैङः सङ्कर्षणो वा भवति। विष्णु। श्यैङो विष्णुनिष्ठातस्य स्थाने नो भवति; हिमत्वे तु नो न भवति। शीनं घृतमिति द्रवावस्थायाः काठिन्यं गतमित्यर्थः। सङ्कर्षणे कृते श्याश्विव्याज्याभ्यां सङ्कर्षणस्य त्रिविक्रम इति त्रिविक्रमः। शीतमिति शीतल-मित्यर्थः। द्रवेत्यादिभ्यां द्रवकाठिन्यहिमत्वाभ्यां संश्यान इति अत्र सङ्कर्षण-स्यैवाभावः। विष्णुनिष्ठातस्य नो भवत्येव। प्रतिशीनो गौरिति शीतात् सङ्कुचित इत्यर्थः। प्रतिशीनो द्रव इति काठिन्यं गत इत्यर्थः। एवमवेति। अवश्यान अवशीन इति। समवश्यान इति अत्रावश्यं समुपेन्द्रेण मिश्रत्वमतः सङ्कर्षणाभावः ॥

३९। दिवो। दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्न-

इवन्तत्वात् सनि विकल्पितेट् द्यूनः। विजिगीषायां द्यूतम्। अञ्च—समक्तः। अपादाने तु, उदक्तः कूप्ण आसनात्। ञि फला आरामानुबन्धः॥

४०। चर-फलयोरस्य उस्ते।

प्रफुल्तः। त इति किम्। फलिता। फलनिष्पत्तौ फलितः क्तीति तस्यां भ्रमः॥

४१। फुल्लोत्फुल्ल-संफुल्ल-क्षीव-कृशोल्लाघाः।

ञिफलादीनामेते निपाताः। प्रकरणाद्विष्णुनिष्ठोपलक्षणमिदं तेन यथासम्भवं क्तवतावपि। फुल्लः फुल्लवान्। क्षीवृ-क्षीवः क्षीववान्

---

कान्तिगतिषु इत्यस्य विष्णुनिष्ठातस्य स्थाने नो भवति; विजिगीषायामर्थे वर्त्तमानस्य तु नो न भवति। अञ्चो। अपादानाभावे सति अञ्चो विष्णुनिष्ठातस्य स्थाने नो भवति। इवन्तत्वादिति। दिव धातोरिति शेषः। सनि विकल्पितेड़िति विकल्पितेट्त्वात् विष्णुनिष्ठायामिड़भावः। द्यून इति छस्य शो वस्य उट् हरिवेणावित्यादिना वस्य उट्। द्यूतमिति अत्र विजिगीषा धात्वर्थः। समक्त इति अञ्चु गतिपूजनयोः गत्यर्थत्वात् अनिरामेतामित्यादिना नरामहरः सङ्गत इत्यर्थः। पूजायान्तु न लोपाभाव उक्तः। उदक्त इति अत्रापादानसद्भावः; उद्गतः इत्यर्थः। ञि फलेति ञि फला विसरणे॥

४०। चर। चर गताविरयस्य फलधातोश्च अरामस्य स्थाने ते परे उर्भवति, चरधातोरुदाहरणमग्रे वक्ष्यते। प्रफुल्त इत्यारामानुबन्धान्नेट् फलितेति बालकल्कित इट् अत्रेटा व्यवधानात न तरामस्य परता॥

४१। फुल्लोत्। वृत्तिमाह ञिफलादीनामेते निपाता इति। ननु यदि फुल्लादयो निपात्यन्ते, तर्हि कथं फुल्लवानित्यादि न भवत्विति चेत्तत्राह प्रकरणादिति। विष्णुनिष्ठायाः प्रकरणात् इदं सूत्रं विष्णुनिष्ठोपलक्षणं विष्णुनिष्ठाग्राहकमित्यर्थः। तेन हेतुना यथासम्भवानतिक्रमेण क्तवतावपि ज्ञेयमिति शेषः। फुल्ल इति निपातात्। ञि फलः फुल् विष्णुनिष्ठातस्य नश्च। क्षीव इति क्षीवृ मदे क्षीव इति निपातात् तरामस्यारामः मत्त इत्यर्थः। क्षीववानिति

क्रशेः—कृशः कृशवान्। लाघृङ् सामर्थ्ये, उल्लाघः उल्लाघवान्। नान्योपेन्द्रात्, प्रफुल्त इत्यादि। कथं, प्रफुल्लपुण्डरीकाक्षं याः पश्यन्ति हरेर्मुखमिति पश्चात् समासेन॥

४२। निर्वो निर्वाणो न तु वाते।

वा गति-गन्धनयोः। निर्वाणो वह्निर्मुनिर्वा। वाते तु, निर्वातो वातः।

४३। निर्विण्णो निर्विद्यते।

कृतमूर्द्धन्यो निपात्यते॥

४४। सिनः कर्म्मकर्त्तरि बन्धे ग्रासे।

---

जीवितवान् इत्येके। कृश इति कृश तनुकरणे निपातात् तरामस्यारामः तनुरित्यर्थः। उल्लाघ इति व्याधिनिर्मुक्त इत्यर्थः। उल्लाघो निर्गतो गदादित्यमरः। नान्योपेन्द्रादिति। उत्फुल्लसंफुल्लयोः पृथक् पाठादुल्लाघ इति सोपेन्द्रनिर्द्देशाच्चेति शेषः। इत्यादीत्यादिपदेन संलाघित इत्यादि ज्ञेयम्। कथमिति प्रफुल्लपुण्डरीकाक्षमिति मुखमित्यस्य विशेषणं पुण्डरीकं शुक्ल पद्मम्। सिद्धान्तमाह पश्चादिति। प्रकृष्टं फुल्लं प्रफुल्लमिति कुप्रादयो मध्यपदलोपश्च। ततश्च प्रफुल्ले पुण्डरीके अक्षिणी यत्रेति पीताम्बरसमासः कर्त्तव्यः॥

४२। निर्वो। निर्वो निर्वाणो निपात्यते, वाते वाच्ये तु न; वाते वाच्ये विष्णुनिष्ठातस्य नो न भवतीत्यर्थः। निर्वाणो मुनिरिति मुक्तो बभूवेत्यर्थः। निर्वाणो मुनिवह्न्यादौ निर्वातस्तु गतेऽनिल इत्यमरः। अनभिधानात् क्तवतौ न भवतीति ज्ञेयम्। मुक्तिवाचकस्तु निर्वाणशब्दो अनप्रत्ययान्ते ब्रह्म। मुक्तिः कैवल्यनिर्वाणमित्यमरः॥

४३। निर्वि। निर उत्तरस्य विद सत्तायामित्यस्य कृतमूर्द्धन्यो निपात्यते कृतमूर्द्धन्य इति कृतणत्व इत्यर्थः। विष्णुनिष्ठातस्य दस्य च नः सिध्यत्येव, किन्तु णत्वमेव निपात्यते इत्यर्थः॥

४४। सिनः। बन्धे ग्रासे कर्म्मकर्त्तरि सति सिनो निपात्यते। अत्र सिञ बन्धने इत्यस्यैव ग्रहणमिति सूचयितुं बन्ध इत्युक्तम्। सिन इति

सिञ् बन्धने। सिनो ग्रासः स्वयमेव ॥

४५। शुषो विष्णुनिष्ठातस्य कः, पचो वः, क्षायो मः।

शुष्कः। पक्वः। क्षै क्षये—क्षामः ॥

४६। प्रस्तीमादयः प्रपूर्व्वस्य स्त्यायो निपात्यन्ते।

प्रस्तीमः, प्रस्तीमवान्, प्रस्तीतः, प्रस्तीतवान् ॥

४७। न ध्या-ख्या-पॄ-मदि-मूर्च्छिभ्यो नः।

ध्यातः ख्यातः पूर्त्तः मत्तः। राच्छ्वयोर्हरः क्वौ कंसारि-वैष्णवे च; मूर्त्तः। ॠतो क्र्यादिः, ओष्ठोद्भवस्येति धातुविशेषणत्वात् समीर्णः ॥

---

निपातात् विष्णुनिष्ठातस्य नः बद्ध इत्यर्थः। ग्रास इति किम्? सितो वृषभः स्वयमेव। कर्म्मकर्त्तरीति किम्? सितो वैष्णवेन ग्रासः ॥

४५। शुषो। शुष शोषण इत्यस्य विष्णुनिष्ठातस्य स्थाने को भवति। पचो डु पचष पाक इत्यस्य विष्णुनिष्ठातस्य स्थाने वो भवति। क्षायः क्षै धातोर्विष्णुनिष्ठातस्य स्थाने मो भवति। शुष्क इति सहजानिट्त्वान्नेट्। क्षामः कृशः ॥

४६। प्रस्ती। प्रपूर्व्वस्य स्त्यायः स्थाने विष्णुनिष्ठया सह प्रस्तीमादयः निपात्यन्ते। प्रपूर्व्वस्येत्यादिकं वृत्तिर्वा। प्रस्तीम इति ष्ट्यै स्त्यै शब्दसंघातयो-र्निपातात् स्त्यायः स्तीर्विष्णुनिष्ठातस्य नश्च। प्रस्तीत इति निपातात् स्त्यायः स्तीः ॥

४७। न ध्या। ध्यादिभ्य उत्तरस्य विष्णुनिष्ठातस्य स्थाने नो न भवति। ध्यात इति ध्यै चिन्तायां हरिमित्रयुगित्यादिना प्राप्ते निषेधः। एवं ख्यात इत्यत्र च। ख्यात इति ख्या प्रकथने चक्षिङादेशश्च। पूर्त्त इति पॄ पालनपूरणयोः ओष्ठोद्भवस्य ॠत ऊर् कंसाराविति ऊर् रदाभ्यामित्यादिना प्राप्ते निषेधः। एवं मत्त इत्यत्र च। मत्त मदी हर्षे इरामानुबन्धत्वान्नेट्। मूर्त्त इति मुर्च्छा मोहसमुच्छ्राययोः आरामानुबन्धत्वान्नेट् रदाभ्यामित्यादिना प्राप्ते निषेधः। ओष्ठ्येति ओष्ठोद्भवस्येत्यस्य विशेषणत्वादित्यर्थः। विशेषणा-दिति वा पाठः। समीर्ण इति ॠरामस्येर् कंसाराविति इर् ॥

(१०८) तपःक्लेशसहो दान्तो (१०९) वर्णिनो ब्रह्मचारिणः ॥
(११०) ऋषयः सत्यवचसः (१११) स्नातक-स्त्वा-(प्लव) प्लुतो व्रती ॥
(११२) ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते ।
(११३) यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ ॥
स्थाण्डिलश्चा (११४) ऽथ विरजस्तमसः स्युर्द्वयातिगाः ।

---

वेति। द्वयं मौनव्रतिनि। वाचं यच्छति पुरन्दरेत्यादिना निपातः। धर्म्मादिमननात् मुनि'रिति हलायुधः ॥१०७

तप इति। दान्तशान्तेत्यादिना निपातः "दमिते त्रिषु दान्तः स्यात्तपःक्लेशसहेऽपि चे"ति रभसः ॥१०८

वेति द्वयं ब्रह्मचारिणि। ब्रह्मचारिणीति वर्णादिन्। ब्रह्म चरति णिनिः ॥१०९

ऋषेति। द्वयमृषौ। ऋषेः किः। तत्र काश्यपाद्याः ब्रह्मर्षयः, नारदाद्याः सुरर्षयः, मान्धातृप्रभृतयो राजर्षयः। स्त्रियामृषी च। सत्यं वचो येषाम्। स्यादृषौ रिषिरित्यपि। तथाच। "वेदागमेषु निपुणा नरदेवमुख्याः, सर्व्वास्त्रशास्त्रपरिखिन्नधियोऽप्यमत्ताः। विद्याविदग्धमतयो विषयः प्रवृद्धा वृद्धाश्च भूमिपतयोऽप्यतिशक्तिमन्तः"इति ॥ ११०

स्नातक इति। समाप्तवेदाध्ययनो यः स्नानशील आश्रमान्तरं न गच्छति तत्र। आप्लुतव्रतयोगादिन् ॥१११

यतीति। द्वयं जितेन्द्रिये। निर्जित इन्द्रियाणां ग्रामः समूहो यैस्ते तथा। यतमिन्द्रियसंयमोऽस्तीति इन्। यतेरिः ॥११२

स्थेति। द्वयं व्रतकाम्यया ण्डिलशयितरि। स्थण्डिले शेते व्रताभीक्ष्ण्ययोश्चेति णिनिः। स्थण्डिले शेते अण् ॥११३

विरजस्तमसः सत्त्वस्थिता अद्वैतमापन्नाः द्वयातिगाः। द्वयमतिक्रम्य गताः डः ॥११४

४०

(११५) पवित्रः प्रयतः पूतः (११६) पाषण्डाः सर्वलिङ्गिनः ॥
(११७) पालाशो दण्ड आषाढ़ो (११८) व्रते राम्भस्तु वैणवः।
(११९) अस्त्री कमण्डलुः कुण्डी (१२०) व्रतिनामासनं वृषी ॥
(१२१) अजिनं चर्म्म कृत्तिः स्त्री (१२२) भैक्षं भिक्षाकदम्बकम्।
(१२३) स्वाध्यायः स्याज्जपः (१२४) सुत्याऽभिषवः सवनञ्च सा।

---

पवीति। त्रयं शुचौ। पुनातेरित्रन्। प्रयमेः पुङश्च क्तः ॥११५

पाषेति। द्वयं वेदव्यवहारबाह्ये सर्व्वाश्रयचिह्नधारिणि। पाषण्डो मध्यमूर्द्धन्यो निपातितः ॥११६

व्रतिनां पलाशकृतदण्डः आषाढ़ः। व्रतिदण्डे मलयगिरावाषाढ़ो मध्यमूर्द्धन्यः। व्रते वैणवो वंशकृतो दण्डो राम्भः। "रम्भा कदल्यप्सरसोर्ना वेणौ वानरान्तरे" इति रभसः ॥११७।११८

कमेति। द्वयं व्रतिनां मृन्मयादि जलाधारे। केन जलेन मण्ड्यतेऽलुः। कुण्डेरच् ॥११९

व्रतीति। "कपिकच्छ्वां वृषः पुंसि शृङ्गिमूषिकवासके। श्रेष्ठे स्यादुत्तरस्थश्च व्रतिनामासनं वृषो"ति मूर्द्धन्यान्ते रुद्रः। व्रतिनः सीदन्त्यस्यामिति पृषोदरादौ श्रीपतिः। चन्द्रगोमी तु—अतसी बृसी मांसी स्वसृ नासा इति दन्त्येष पठति ॥१२०

अजीति। त्रयं कृष्णसारादिचर्म्मणि। अजेरिनच्। चरेर्म्मन्। कृत्यते छिद्यते क्तिः ॥१२१

भिक्षाणां समूहेऽण् ॥१२२

स्वेति। द्वयमावृत्त्या वेदाध्ययने। इङाभ्याश्चेति घञ्। व्यधजपोश्चानुपसर्गेऽप्। प्रज्ञाद्यणि जापश्चेति रक्षितः। "मन्त्रजापं पुराकरोत्" इति प्रयोगात् ॥१२३

सुत्येति। त्रयं व्रतार्थं स्नाने। समजेत्यादिना सुञः क्यप् अल् युट् च ॥१२४

(१२५) सर्व्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् ।
(१२६) दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक् ॥
(१२७) शरीरसाधनापेक्षं नित्यं यत् कर्म्म तद् यमः ।
(१२८) नियमस्तु स यत् कर्म्म नित्यमागन्तुसाधनम् ॥
(१२९) उपवीतं यज्ञ (ब्रह्म)-सूत्रं प्रोद्धृते दक्षिणे करे ।
(१३०) प्राचीनावीतमन्यस्मि (१३१) न्निवीतं कण्ठलम्बितम् ॥
(१३२) अङ्गुल्यग्रे तीर्थं दैवं स्वल्पाङ्गुल्योर्मूले कायम् ।

---

सर्व्व इति। नासिकासमीपे जलगण्डुषमादाय सर्व्वपापनोदि यज्जपनीयं तदघमर्षणं त्रिषु। अघं पापं मर्षति अपनुदति युः। अघमर्षणो मन्त्रः। अघमर्षणी ऋक्। अघमर्षणं यजुः ॥१२५

अमावस्यायां यागो दर्शः। पौर्णमासो भवन्तु यागः पौर्णमासः ॥१२६

यत् यावज्जीवमवश्यम्भावेन शरीरमात्रमपेक्षते न वाह्यसाध्यं किञ्चित् तदस्तेयाहिंसाब्रह्मचर्य्यादि यमः "अहिंसा सत्यवचनं ब्रह्मचर्य्यमकल्कता। अस्तेयमिति पञ्चैते यमाश्चैते व्रतानि च" इति मनुः ॥१२७

नियमेति। आगन्तुक-दोषोत्थानादि-निमित्तमुपवासादि नियमः। "मन्त्रणायां प्रतिज्ञायां नियमो निश्चये व्रते" इति रुद्रः। "अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम्। अप्रमाश्च सततं पञ्चैते नियमाः स्मृताः" इति मनुः ॥१२८

वामांसे न्यस्ते दक्षिणे करे प्रोद्धृते यज्ञसूत्रमुपवीतम् ॥१२९

यज्ञसूत्रे दक्षिणांसे न्यस्ते वामकरे प्रोद्धृते प्राचीनावीतम् ॥१३०

तदेव कण्ठलम्बितं निवीतम् ॥१३१

अङ्गुलीति। हस्त एव देवादीनां तीर्थानि सन्ति। तत्र अङ्गुल्यग्रे दैवं तीर्थम्। कनिष्ठानामिकयोर्मूले कायं प्राजापत्यम्। कस्य प्रजापतेरिदमित्यायन्। अङ्गुष्ठतर्जन्योर्म्मध्ये पैत्रम्। अङ्गुष्ठमुले ब्राह्मम।

(११५) पवित्रः प्रयतः पूतः (११६) पाषण्डाः सर्वलिङ्गिनः ॥
(११७) पालाशो दण्ड आषाढ़ो (११८) व्रते राम्भस्तु वैणवः।
(११९) अस्त्री कमण्डलुः कुण्डी (१२०) व्रतिनामासनं वृषी ॥
(१२१) अजिनं चर्म्म कृत्तिः स्त्री (१२२) भैक्षं भिक्षाकदम्बकम्।
(१२३) स्वाध्यायः स्याज्जपः (१२४) सुत्याऽभिषवः सवनञ्च सा।

---

पवीति। त्रयं शुचौ। पुनातेरित्रन्। प्रयमेः पूङश्च क्तः ॥११५

पाषेति। द्वयं वेदव्यवहारबाह्ये सर्व्वाश्रयचिह्नधारिणि। पाषण्डो मध्यमूर्द्धन्यो निपातितः ॥११६

व्रतिनां पलाशकृतदण्डः आषाढ़ः। व्रतिदण्डे मलयगिरावाषाढ़ो मध्यमूर्द्धन्यः। व्रते वैणवो वंशकृतो दण्डो राम्भः। "रम्भा कदल्यप्सरसोर्ना वेणौ वानरान्तरे" इति रभसः ॥११७।११८

कमेति। द्वयं व्रतिनां मृन्मयादि जलाधारे। केन जलेन मण्ड्यतेऽलुः। कुण्डेरच् ॥११९

व्रतीति। "कपिकच्छ्वां वृषः पुंसि शृङ्गिमूषिकवासके। श्रेष्ठे स्यादुत्तरस्थश्च व्रतिनामासनं वृषी"ति मूर्द्धन्यान्ते रुद्रः। व्रतिनः सीदन्त्यस्यामिति पृषोदरादौ श्रीपतिः। चन्द्रगोमी तु—अतसी वृसी मांसी स्वसृ नासा इति दन्त्येष पठति ॥१२०

अजीति। त्रयं कृष्णसारादिचर्म्मणि। अजेरिनच्। चरेर्म्मन्। कृत्यते छिद्यते क्तिः ॥१२१

भिक्षाणां समूहेऽण् ॥१२२

स्वेति। द्वयमावृत्त्या वेदाध्ययने। इङाभ्याश्चेति घञ्। व्यधजपोश्चानुपसर्गेऽप्। प्रज्ञाद्यणि जापश्चेति रक्षितः। "मन्त्रजापं पुराकरोत्" इति प्रयोगात् ॥१२३

सुत्येति। त्रयं व्रतार्थं स्नाने। समजेत्यादिना सुञः क्यप्। अल् युट् च ॥१२४

(१२५) सर्व्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् ।
(१२६) दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक् ॥
(१२७) शरीरसाधनापेक्षं नित्यं यत् कर्म्म तद् यमः ।
(१२८) नियमस्तु स यत् कर्म्म नित्यमागन्तुसाधनम् ॥
(१२९) उपवीतं यज्ञ (ब्रह्म)-सूत्रं प्रोद्धृते दक्षिणे करे ।
(१३०) प्राचीनावीतमन्यस्मि (१३१) न्निवीतं कण्ठलम्बितम् ॥
(१३२) अङ्गुल्यग्रे तीर्थं दैवं स्वल्पाङ्गुल्योर्मूले कायम् ।

---

सर्व्व इति। नासिकासमीपे जलगण्डुषमादाय सर्व्वपापनोदि यज्जपनीयं तदघमर्षणं त्रिषु। अघं पापं मर्षति अपनुदति युः। अघमर्षणो मन्त्रः। अघमर्षणी ऋक्। अघमर्षणं यजुः ॥१२५

अमावस्यायां यागो दर्शः। पौर्णमासो भवन्तु यागः पौर्णमासः ॥१२६

यत् यावज्जीवमवश्यम्भावेन शरीरमात्रमपेक्षते न वाह्यसाध्यं किञ्चित् तदस्तेयाहिंसाब्रह्मचर्य्यादि यमः "अहिंसा सत्यवचनं ब्रह्मचर्य्यमकल्कता। अस्तेयमिति पञ्चैते यमाश्चैते व्रतानि च" इति मनुः ॥१२७

नियमेति। आगन्तुक-दोषोत्थानादि-निमित्तमुपवासादि नियमः। "मन्त्रणायां प्रतिज्ञायां नियमो निश्चये व्रते" इति रुद्रः। "अक्रोधो गुरु-शुश्रूषा शौचमाहारलाघवम्। अप्रमाश्च सततं पञ्चैते नियमाः स्मृताः" इति मनुः ॥१२८

वामांसे न्यस्ते दक्षिणे करे प्रोद्धृते यज्ञसूत्रमुपवीतम् ॥१२९

यज्ञसूत्रे दक्षिणांसे न्यस्ते वामकरे प्रोद्धृते प्राचीनावीतम् ॥१३०

तदेव कण्ठलम्बितं निवीतम् ॥१३१

अङ्गुलीति। हस्त एव देवादीनां तीर्थानि सन्ति। तत्र अङ्गुल्यग्रे दैवं तीर्थम्। कनिष्ठानामिकयोर्मूले कायं प्राजापत्यम्। कस्य प्रजापते-रिदमित्यायन्। अङ्गुष्ठतर्जन्योर्म्मध्ये पैत्रम्। अङ्गुष्ठमुले ब्राह्मम।

मध्येऽङ्गुष्ठाङ्गुल्योः पैत्रं मूले ह्य(त्व)ङ्गुष्ठस्य ब्राह्मम्
(स क्ष) ॥

(१३३) स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ।
(१३४) देवभूयादिकं तद्वत् (१३५) कृच्छ्रं सान्तपनादिकम् ॥
(१६६) सन्न्यासवत्यनशने पुमान् प्रायो (१३७) ऽथ वीरहा
नष्टाग्निः (१३८) कुहना लोभान्मिथ्येर्य्यापथकल्पना ॥
१३९) व्रात्यः संस्कारहीनः स्या(१४०)दस्वाध्यायो निराकृतिः ।

---

तथाच याज्ञवल्क्यः—"कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च । प्रजा-पति-पितृ-ब्रह्मदेवतीर्थान्यनुक्रमात् ।" ॥१३२

ब्रह्मेति । त्रयं ब्रह्मत्वे । भावे भुव इति क्यप् सयुक् शब्दः सम्बन्धि वचनः तस्य भावो यन् ॥१३३

तद्वद् देवत्वं देवसाजुय्यमित्यादि ॥१३४

सान्तपनचान्द्रायण प्राजापत्यादिकं व्रतं कृच्छ्राभिधेयम् । तथाच— "गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम् । एकरात्रोपवासश्च कृच्छ्रं सान्तपनं विदुः ।" ॥१३५

सन्न्यासः क्रियापरित्यागः तद्वति अभोजने प्रायः । प्रपूर्व्वादिनोऽच् "प्रायोपवेशनमतिर्नृपतिर्बभूव' इति रघुः ॥१३६

वीरेति । द्वयं यः पुत्रादिषु गार्हपत्याग्निं समर्प्य वर्षमेकं प्रवासी भवति तत्र । वीरो यज्ञाग्निस्तं हतवान् क्विपि वीरहा ॥१३७

अथलिप्सया । मिथ्येर्य्यापथस्याधर्म्ममार्गस्याचारभेदस्य वा कल्पना सम्पादना कुहनोच्यते । कुह विस्मये चुराद्यदन्तात् यः ॥१३८

षोडशवर्षपर्यन्तमकृतसंस्कारो व्रतदानानर्हो भ्रष्टगायत्रीको व्रात्यः ॥१३९

वेदाभ्यासशून्यो निराकृतिः । बाहुलकात् पुंसि क्तिः । "उपाध्या-योऽध्यापकः स्यादस्वाध्यायो निराकृति"रिति पुंस्काण्डेऽमरमालायाम् । ॥१४०

(१४१) धर्म्मध्वजी लिङ्गवृत्ति (१४२) रवकीर्णी क्षतव्रतः ॥
(१४३) सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ।
अंशुमानभिनिर्म्मुक्ताऽभ्युदितौ तौ यथाक्रमम् ॥
(१४४) परिवेत्तानुजोऽनूढ़े ज्येष्ठे दारपरिग्रहात् ।
परिवित्तिस्तु तज्ज्यायान् (१४५) विवाहोपयमौ समौ ॥
तथा परिणयोद्वाहोपयामाः पाणिपीड़नम् ।
(१४६) व्यवायो ग्राम्यधर्म्मश्च रतं निधुवनञ्च सः ॥

---

धेति। द्वयं जीवनार्थमेव यो जटादिकं बिभर्त्ति तत्र। धर्मे ध्वजयोगान्निन्दायामिन्। लिङ्गेन जटादिना वृत्तिरस्य ॥१४१

अवेति। द्वयं हीनव्रते। हीनव्रतमवकीर्णं, तद्योगादिन्। "ब्रह्मचारी स्त्रियं गच्छन्नवकीर्णी भवत्युत।" क्षतं व्रतमस्य ॥१४२

यस्मिन् द्विजे सुप्ते रविरस्तमेति सोऽभिनिर्म्मुक्तः। यस्मिंश्च सुप्ते रविरुदेति सोऽभ्युदितः ॥१४३

अविवाहिते ज्येष्ठे दारपरिग्रहात् कनीयान् परिवेत्ता भवति। तज्ज्येष्ठः परिवित्तिः। संज्ञात्वात् पुंस्यपि क्तिः। "अनूढे त्वग्रजे मोहाद्विवाहं कुरुते तु यः। परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्व्वजः" इति पुंस्काण्डेऽमरमाला। दारेत्युपलक्षणम्। अग्न्याधानेऽपि। "दाराग्निग्रहणाधाने यः कुर्य्यादग्निमग्रतः। परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्व्वजः इति स्मृतिः ॥१४४

व्यवेति। पाणिपीड़नान्तं षट्कं विवाहे। व्युद्भ्यां वहेर्घञ्। यमः संन्युपविषु चेति पक्षेऽल्। परिनयतेरल् उपसर्गाण्णत्वम् ॥ १४५

व्यवेति। चतुष्कं मैथुने। क्वचित् मैथुनं निधुवनञ्च स इति पाठ इति सुभुः ॥१४६

(१४७) त्रिवर्गो धर्म्मकामार्थैश्चतुर्वर्गः समोक्षकैः ।
(१४८) सबलैस्तैश्चतुर्भद्रं (१४९) जन्याः स्निग्धावरस्य ये ॥

इति ब्रह्मवर्गः ।

## क्षत्रियवर्गः

(१) मूर्द्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् ।

---

धर्म्मार्थकामास्त्रिवर्गं । त्रयाणां धर्म्मार्थकामानां वर्गः समूहः । श्रुति-स्मृतिप्रदिष्ट आचारो धर्म्मः । सर्व्वोपकरणमर्थः विषयविषयिसन्निपातज-सुखं कामः । धर्म्मार्थकाममोक्षाश्चतुर्व्वर्गः ॥१४७

तुल्यबालैस्तु धर्म्मादिभिश्चतुर्भिश्चतुर्भद्रमुच्यते ॥१४८

वरस्य जामातुः स्निग्धा वरस्य जन्याः । जनीं वधू वहन्ति यत् । "नावोढ़ा ज्ञातिभृत्येषु वत्सलेषु वरस्य च । जनके जननीजे ना जन्यं निर्व्वाणयुद्धयोः" इति रभसः "प्रत्यासन्नन्त्वरयतितरां जन्ययात्राप्रवेशः" इति मालतीमाधवे ॥१४९

इति सामन्तसार-ग्राम-निवासी श्रीरघुनाथचक्रवर्त्तिविरचितायां त्रिकाण्डचिन्तामणावमरकोषटीकायां ब्रह्मवर्गविवरणम् ।

—:o:—

## ॥ क्षत्रियवर्गः ॥

मूर्द्धेति । पञ्च क्षत्रियसामान्ये । राज्यार्पणसमये मूर्द्धन्यभिषिक्तः मूर्द्धाभिषिक्तः प्रथमः क्षत्रियः तत्प्रकरणतयानाभिषिक्तोऽप्युच्यते । राज्ञोऽपत्यां न्यः । ब्रह्मणो बाहुभ्यां जातः । क्षदेः सोत्रात् त्रन् , क्षत्रस्यापत्यम् इयः । "क्षत्रियस्तु विराट् क्षत्रराजन्यद्विजलिङ्गिनः" इति रभसे । पुंनपुंसकयोः क्षत्रमित्यन्यत्र । तथाच—"पतिर्मम क्षत्रमशेषभूभृत् प्रभा-विरामो भरतश्च जिष्णुः" इति रामायणे । विराजते दीप्यते क्विप् ॥१

(२) राज्ञि राट्-पार्थिव-क्ष्माभृन्नृप-भूप-महीक्षितः ॥
(३) राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः ।
(४) चक्रवर्त्ती सार्व्वभौमो (५) नृपोऽन्यो मण्डलेश्वरः ॥
(६) येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ।
शास्ति यश्चाज्ञया राज्ञः स सम्राड़-
(७) ऽथ राजकम् ॥
राजन्यकञ्च नृपतिक्षत्रियाणां गणे क्रमात् ।

---

रेति। सप्त राजनि। राजतेः कनकिपौ, पृथिव्याः पतिः पृथिव्यां ख्यातो वा अन्। पृथोरपत्यमित्यनि पार्थिवश्च! क्ष्मां भुवं भुनक्ति पालयति क्ष्माभुक्। क्ष्माभृदिति पाठे क्ष्मां बिभर्त्तीति क्विप्। नॄन भुवं पाति कः। महीं क्षिणोति अधिगच्छति क्विप् ॥२

स्वविषयानन्तरा भूमिः समन्ता, तस्या इमे सामन्ताः समीपवर्त्तिनो राजानः। प्रणताः अशेषाः सामन्ताः यस्मिन् सोऽधीश्वरः स्यात् ॥३

चेति। इयं सर्व्वभूम्यधिकारिणि। पुण्योपनतेन चक्रेण वर्त्तते णिनिः। सर्व्वभूमेरीश्वरः अण् ॥४

असार्व्वभौमो भूम्येकदेशेश्वरो मण्डलेश्वरः। मण्डलं द्वादशविधमुक्तं कामन्दके,—अरिर्म्मित्रमरेर्मित्रं मित्रमित्रमतःपरम्। तथारिमित्रमित्रञ्च विजिगीषोः पुरोःस्थिताः। पार्ष्णिग्राहस्तथाक्रन्द आशारावनयो पृथक्। उदासीनो मध्यमश्च इत्येतद्राजमण्डलम्" इति ॥५

येनेति। येन राजसूयाख्ययज्ञविशेषेण इष्टं, यश्च सर्व्वमण्डलस्य ईश्वरः पालयिता, तथा यश्च हिमवत् समुद्रान्तर्व्वर्त्तिनो राज्ञः शास्ति विजित्य वशीकरोति, स सम्राट्। समो राजि कौ इत्यनुस्वारनिषेध ॥६

राजराजन्ययोः समूहे कन् ॥७

(८) मन्त्री धीसचिवोऽमात्यो (९) ऽन्ये कर्म्मसचिवास्ततः ॥
(१०) महामात्राः प्रधानानि (११) पुरोधास्तु पुरोहितः ।
(१२) द्रष्टरि व्यवहाराणां प्राड्विवाकाऽक्षदर्शकौ ॥
(१३) प्रतीहारे द्वारपाल-द्वाःस्थ-द्वाःस्थितदर्शकाः

---

मेति। त्रयं मन्त्रिणि। कर्त्तव्यतानिश्चयो मन्त्रः, तद्योगादिन्। सचति समवेतो भवति शिवादित्वात् कन् इरागमश्च। सचिवः सहायो ऽमात्या इति दन्त्यादावावजयः। धी प्रधानः सहायो धीसचिवः। अमा सह चरति अमात्यः। नित्यधिष्ट्या इति निपातः ॥८

धीसचिवादन्ये कर्म्मणि नियुक्ताः कर्म्मसचिवाः ॥९

महेति। द्वयं प्रधानामत्ये। महती मात्रा परिच्छद एषां। "मात्रा कर्णविभूषायां वित्ते मानपरिच्छेदे"। प्रधानं रूपभेदात् क्लीबं—"प्रकृतौ च महामात्रे प्रज्ञायां परमात्मनि। नपुंसकं प्रधानं स्यादेकत्वे तूत्तमे सदे"ति रभसः। "महामात्रः प्रधानः स्या"दिति पुंस्काण्डे वोपालितः। "महामात्रः प्रधाने स्यात्तथा हस्तिपकाधिप" इति धरणिः ॥१०

पुर इति। द्वयं पुरोहिते। पुरो धीयतेऽसूनक्तौ। "बृहस्पतिपुरोधसा" इति भट्टिः ॥११

प्रेति। द्वयं व्यवहाराणामृणदायविभागादीनां द्रष्टरि प्रश्नकारिणि पृच्छतीति प्राट्, क्विप्वचीत्यादिना क्विप् दीर्घश्च। विवक्तीति विवाको नञोऽनित्यत्वात् कर्त्तरि घञ् ततः कर्म्मधारयः। अक्षान् व्यवहारान् दर्शयति वुण्। "विवादानुगतं दृष्ट्वा पूर्व्ववाक्यं प्रयत्नतः। विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः" इति। तुलादिपरीक्षायां यो व्रियते सोऽपि प्राड्विवाकः ॥१२

प्रतीत। चतुष्कं द्वारस्थिते। प्रतिहरन्ति क्षपयन्त्यनेन घञ्, ह्रस्वस्य दीर्घता। द्वारं पालयति अण्। द्वारि तिष्ठति कः। द्वारि स्थितं दर्शयति वुण्। प्रतीकलक्षणया दर्शकोऽप्यत्र, "दर्शकः स्याद्दर्शयिता प्रतीहारेऽपि दर्शक" इति रुद्रः। द्वास्थोपदर्शक इति क्वचित् पाठः ॥ १३

# प्रणव-पारिजातः

( संस्कृत-मासिकपत्रम् )

त्रयोदशवर्षम् , नवमसंख्या ] [ वैशाखमासः १८६२ शकाब्दः ]


## साम्यसागरकल्लोलम्

निबन्धकः—श्रीश्रीजीवन्यायतीर्थः

॥ द्वितीय-मुखसन्धिः ॥

प्रविशति गणनाथः।

गणनाथः। महान् जयति विप्लवो व्यसनसागरे यः प्लवो
नतोन्नतसमत्वकृन् नरसमाजसंशोधकः।
धनिस्थितिभयङ्करः श्रमिककर्षकप्रीतिदो
विशिष्टपददायको विपुलमानदो मादृशाम्।

प्रविशति कश्चिद् भारवाही श्रमजीवी।

भारवाही। भो महोदय! दिनद्वयं यावन्न लब्धमन्नम्। अहमस्मि भारवाही। भृशं क्षुधाकातरोऽस्मि, देहि मे किञ्चिद् भोज्यम्।

गणनाथः। उपविश मुहूर्त्तम्। भोस्तरुणाः! सत्वरं समगच्छत। किञ्चन गुरु कार्यमस्ति।

प्रविशन्ति पञ्च गणसैनिकाः।

गणसैनिकाः। एते वयं समागता एव।

गणनाथः। अयमेको भारवाही प्राप्तः। तं गणसङ्घस्य सभ्यपदं ग्राहय। सभ्यसंख्यावर्द्धनं मुख्यं कर्म विज्ञायताम्।

( निष्क्रान्तः )

प्रथमोगण-सैनिकः। भो भारिन्! देहि शुल्कमष्टाणकमितम्, गणसङ्घसदस्यं विधास्यामि त्वाम्।

भारवाही। अर्थाभावान्न लभे भक्ष्यद्रव्यं, तेन मृतप्रायोऽस्मि। कथं दास्यामि शुल्कमूल्यम्!

द्विः गः सैः। तर्हि दूरीभव स्थानादस्मात्। अथवा कथय कथं ते भोजनाभावः सम्भूतः।

भारवाही। युष्मत्सङ्घकृतेन भारिणामान्दोलनेन विपर्य्यस्तसतयो वैपणिका नास्माभिः कार्य्यं कारयन्ति। पण्यवीथिकां रुद्ध्वा ते स्वगृहेषु कथमपि बाणिज्यं परिचालयन्ति। वयन्तु कर्माभावादनशनेन दिनद्वयं प्रतीक्ष्य कर्मकेन्द्रस्थानादस्मिन् मदीये ग्रामे पलायितोऽस्मि।

तृः गः सैः। इदानीम् ऋणरूपेण ते दीयते मया शुल्कम्। पश्चात् प्राप्ते धने मदीयमृणं परिशोधनीयम्। लिख पुस्तकेऽस्मिन् निजनाम।

भारवाही। कथञ्चित् लिखितुं समर्थोऽस्मि।

तृः गः सैः। लिख निजनाम वृद्धाङ्गुष्ठमुद्राञ्च विधेहि। ( शुल्कपत्र-पुस्तके तथा करोति ) अरे किं नामासि ?

भारवाही। कृष्णदासनामास्मि।

प्रः गः सैः। अहो कुसंस्कारः! इदानीमपि कृष्णदासनामकरणं श्रूयते।

भारवाही। इदानीं भक्षणाय मे किञ्चिद्देहि।

प्रः गः सैः। किं वयं पुञ्जीकृतधना धनिनो भवामो यद् यावन्मात्रेण धनवर्षणं करोमि ? कथय कोऽस्मिन् ग्रामे धनी वर्त्तते, तस्य धनलुण्ठनेन ते दास्यामि।

भारवाही। अस्मिन् ग्रामे तथाविधो धनी कोऽपि नास्ति। प्रायः सर्व एव भवति अद्यभक्ष्यधनुर्गुणजातीयः।

द्विः गः सैः। नास्ति किं कश्चिदापणः, कुतस्तावद् युष्माभिः खाद्यादिकं क्रीयते ?

भारवाही। वर्त्तते कश्चिदेक आपणः। ग्रामवासिनां प्राणभूतोऽयम् आपणः। तस्मादेव द्रव्यक्रयेण जीवनं धारयन्ति ग्राम्यजनाः।

तृः गः सैः। क्व तावदस्माकं कामरेता* नेता। यावत्तेन सह सम्मन्त्र्य कर्त्तव्यमवधारयामः॥

चः गः सैः। अहं गच्छामि तमानेतुम्॥

( निष्क्रान्तः )

( ततः प्रविशति चतुर्थगणसैनिकेन सह गणनाथः )

गणनाथः। साम्ये लयं सांख्यविदो वदन्ति
वैषम्यमूला किल विश्वसृष्टिः।
मिथ्या प्रलापोऽयमिति ब्रुवाणाः
साम्यं शुभं तत् प्रतिपालयामः॥

भो भोः सैनिकाः प्रचारयत साम्यवादं, प्रसारयत हृदयं साम्यभावनया। भेदजर्जरस्य समाजस्य विलोपं तथाविधराष्ट्रस्य च विनाशं साधयत।

सौधे विलासवसनाशन-वस्तुपूर्णे
तिष्ठन्ति के न धनिनः सुखशान्तिभाजः।
क्रन्दन्ति जीर्णवसनाः श्रमिकाः सहस्रं
घर्माक्तविग्रहधराः कृषकास्तथैव॥

तुङ्गस्थानादाकृष्य धनिनो निम्नतले पातयत भोः सैनिकाः।

भारवाही। ( क्लेशात् नेतृसमीपं गत्वा ) नमस्ते महोदय! किञ्चिद् भोज्यं मे देहि।

गणनाथः। कोऽयं भिक्षुको मामन्नं याचते?

प्रः गः सैः। स एव क्षुधार्त्तो भारवाही।

गणनाथः। भोः सैनिकाः! अस्य सदस्यत्वं सशुल्कं लिपिलेखनपूर्वं किं साधितम्?

प्रः गः सैः। अथ किम्? इदानीम् ऋणरूपेण शुल्कं प्रदत्तं तृतीयसैनिकेन। अस्य सकाशे किञ्चिदपि नास्ति। सत्वरं किञ्चिद्देयमस्मै। अन्यथा मरणमाशङ्क्यम्।

*Comrade leader

गणनाथः । को दास्यति ? सैनिकाः ! लुण्ठनेनार्जयत द्रव्याणि । किमहं स्वकीयं द्रव्यं निर्बोध इव दास्यामि परस्मै ? न वा युष्मानपि दातुमुपदिशामि ।

अविमृष्य निजस्य सम्पदं धनहीनाय ददाति यो जनः ।
विनिमाति दुरन्तदुर्दशां ननु तस्माच्चपला पलायते ॥

गच्छत यूयं लुण्ठनेन द्रविणमर्जयत । यथायथं सङ्घभागं प्रतिपाल्य कश्चिदंशो दीयतां दीनाय ।

तृः गः सैः । यदि म्रियेतायं भारवाहो बहुकालमनशनेन तिष्ठन् ?

गणनाथः । म्रियतां नाम । यो जीविष्यति तस्मै देयम् । नाहं स्वकीय-नीतिमर्य्यादां लङ्घयामि ।

प्रः गः सैः । अहो नेतृवरस्य नीतिनिष्ठा ! (भारिणं प्रति) अरे भारिन् ! प्रसर रे तदापणं प्रति ।

भारवाही । नाहं चलितुं समर्थोऽस्मि । हृदयं स्पन्दते, श्वासोऽधिकं प्रवहति ।

तृः गः सैः । भवतु त्वामहं स्कन्धमारोप्य वहामि । (तथा करोति)

प्रः गः सैः । ऋणदानेन धन्यस्त्वं स्कन्धारोपात्ततोऽधिकम् ।
गर्दभः क्षुद्रकायोऽपि यथा विपुलभारवाट् ॥

द्विः गः सैः । भो भारिन् ! कियद्दूरे तिष्ठत्यापणः ।

भारवाही । समीप एव । क्षुत्पिपासाभ्यां नितरां पीड़ितोऽस्मि । मामवतारय स्कन्धात् किञ्चिज्जलं पायय । अन्यथाहं म्रिये ।

गणनाथः । भोः सैनिकः ! भारिणमवतार्य्य स्कन्धाद् वृक्षतले रक्ष । ततः कुरु लुण्ठनमापणस्य । कालहरणस्य नास्त्यवसरः । अन्यथा विदितवृत्तान्त आपणिकः सर्वधनैः सह पलायिष्यते ।

तृः गः सैः । (भारिणं वृक्षतले रक्षति)

भारवाही । (मुखं व्यादाय पिपासां नाटयति)

गणनाथः। आगच्छत रे गणसैनिकाः शुभकर्मानुष्ठानाय।

( गणनाथमनुसृत्य पञ्च सैनिका आपणिकं वेष्टयन्ति )

गणनाथः। अरे स्वार्थान्ध ! आपणिक ! युष्मत्प्रतिवेशी श्रमिको बुभुक्षया मृतप्रायो न दृश्यते। न ददासि तस्मै प्राण-धारणार्हं भोज्यम् ?

—( क्रमशः )

## श्रीमद्भगवद्गीतायां भक्ति-कर्म्मवादौ

( निबन्धकः—अध्यापकः श्रीरवीन्द्रकुमारसिद्धान्तशास्त्री )

( पूर्वतोऽनुवृत्तम् )

युक्तिभिराभिः कर्म्मणः प्राधान्यं मुक्तिजनकत्वञ्च विज्ञाप्य भक्तं धनञ्जयं समराय प्रवर्त्तयितुं भगवान् पुनः पुनः यतते स्म।

ननु प्रकृतिरेव कर्म्मकारयित्रीति प्राग् विज्ञापितं भवता। कथन्तदा मां कर्म्मणि प्रवर्त्तयितुं यतते भवान् ? कथं प्रकृतिरेव मां न नियोजयेदिति प्रश्नमाशङ्क्य कर्म्मवादस्योपसंहारे भगवानाह—

"यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे।
मिथ्यैव व्यवसायस्ते प्रकृतिस्त्वां नियोक्षति॥
स्वभावजेन कौन्तेय ! निबद्धः स्वेन कर्म्मणा।
कर्त्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत्॥" इति

यथा युद्धमनाकाङ्क्षमाणैरपि भवद्भिर्द्रौपदीस्वयंवरे राजभिः सह संग्रामः कृतः, यथा च तादृशेनैव त्वया विराटगोगृहे कौरवैः सह युयुधे, यथा च सम्पूर्णमनभिलषद्भिरपि भवद्भिरत्र समराय सैन्यसमावेशः कृतस्तथैव प्रकृतेर्व्विधानेनैव युद्धमपि त्वयाधुनैव करिष्यते इति नास्ति मदीयवाक्येऽविश्वासप्रसङ्गः। प्रकृतेर्बलवत्ता चेत् नास्थास्यत्, तदा सर्व्वेष्वेवैतेषु कर्म्मसु भवतां प्रवृत्तिरपि नाभविष्यत्। अतो यथा तत्र तत्र कार्य्येषु प्रकृतेः प्रधान्यमुपलब्धं साम्प्रतमपि तथैव तत्प्राधान्यमुप-

लप्स्यते. इति केवलमुपदेशप्रदानार्थमेव मयैवं कथ्यते। कार्य्यन्तु प्रकृतिरेव कारयिष्यति। अत्र तेऽहङ्कारः कथमपि न फलाय भविष्यति।

एवं भगवदुक्तस्य समग्रस्यैव कर्म्मवादस्य समालोचनया फले चाना-सक्तेन रागद्वेषादिद्वन्द्वरहितेन श्रद्धावता जनेन केवलं कर्त्तव्यबोधाल्लोक-शिक्षार्थञ्च जगदुपकारकं वेदादिसम्मतं वैधं कर्म्मैव सततं कर्त्तव्यमित्येव भगवदुपदेशोऽवधारितः। कर्म्मफलत्यागस्यैव प्राधान्यं तेनाङ्गीकृतं न तु कर्म्मत्यागस्य। यज्ञादीनि फलप्रसूनि कर्म्माण्यपि कर्त्तुमेव तेनोपदिश्यते। अतः कर्म्ममाहात्म्यप्रचारकेण सततकर्म्मपरायणेन कर्म्ममयपुरुषेण श्रीकृष्णेन ब्रह्माण्डविवरपरिपूरितकीर्त्तिरादर्शकर्म्मा मूर्त्तिमद्वीरत्वप्रतिमो विश्वविजेता धनञ्जयः प्रवृत्ते समरकर्म्मण्यात्मानं प्रवर्त्तयितुमेवोपदिष्टः। न च तदुपदेशरत्नराजिर्वृथाभवत्; यतः प्राक् समरविमुखोऽपि धनञ्जयः पश्चात् प्रकृतार्थमुपलभ्य पुनः समरायै-वाभिमुखो बभूव। अत्रोक्तमर्ज्जुनेन—

"नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव॥" इति

एतावद्भिर्भगवदुपदेशैर्निवृत्तिमिच्छन्नप्यर्ज्जुनः पुनः कर्म्मण्येव प्रवर्त्तितः। अर्ज्जुनस्य कर्म्मप्रवृत्तेरुत्पादकाः इमे उपदेशा एव गीतोक्तो कर्म्मवाद इति कथ्यते। कीदृशं कर्म्माचरणीयमिति प्रागेव प्रतिपादितम् कर्म्म च पुनरुत्तम-मध्यमाधमभेदेन त्रिधेति प्रागुक्तं मया। तत्र स्वार्थ-निरपेक्षेण येन कर्म्मणा झटिति मुक्तिर्लभ्यते तदेवोत्तमं कर्म्म। अत्र भक्तियोगोऽवश्यमेव तिष्ठेत्। न हि भक्तिविरहितेन कर्म्मणा झटिति मुक्तिर्लब्धुं शक्यते। न च भक्तिं विना सम्भवत्युत्तमकर्म्म। प्राकृतं कर्म्म तु प्राणिमात्र एव विद्यते। शिशुर्भूमिष्ठ एव हस्तपदादिसञ्चालनं करोति। नास्ति तु तत्र भक्तिप्रसङ्गः। न च तेन स्वकीया मुक्ति-र्विश्वेषामुपकृतिर्वा भवितुमर्हति; न चापि कस्याप्यपकारप्रसङ्गः। एतादृशं कर्म्मैव मध्यमरूपेण विज्ञेयम्। यत्तु कर्म्म स्वार्थनिरपेक्षेण केवलं

जगदुपकाराय प्रवर्त्तते, तदप्युत्तमकर्म्मैव। यत्तु केवलं स्वार्थसाधनाय प्रवर्त्तते, विश्वेषामनुपकारिणा नितरामपकारिणा च जनेन सम्पादितं तादृशं कर्म्मैवाधमकर्म्मरूपेण गण्यते।

'एकाग्रता भक्ति'रित्यर्थे सर्व्वेष्वेव कर्म्मसु भक्तिर्विद्यते। तत्राधमकर्म्मणि या भक्तिः, सैवाधमा भक्तिः, मध्यमकर्म्मणि विद्यमाना च मध्यमः। केवलमुत्तमकर्म्मणि विद्यमानैव सोत्तमाभक्तिरूपेण विज्ञेया। अतो 'भजनं विषयासक्ते'रित्यादिना यद् भक्तिलक्षणं मया कृतं, तामुत्तमामेव भक्तिं जानीयात्।

कर्म्मणा सह भक्तेः कीदृशः सम्पर्क इति साम्प्रतं कथ्यते। प्राकृताः मानवाः स्वभावत एव प्राकृते कर्म्मणि प्रवर्त्तन्ते। तत्र पुनः पुनः प्रवर्त्तना तत्साधनञ्च परिपार्श्विकीमनुकूलामवस्थामवलम्ब्य क्रमशो भक्तिमुत्पादयतः। तदनन्तरं सैव भक्तिर्मानवं मोक्षसाधने वैधकर्म्मणि प्रयोजयति। तस्माच्च झटिति मुक्तिर्लभ्यते। यथा खलु कर्म्मविरहितया भक्त्या मुक्तिर्न सम्भवति, तथैव भक्तिविरहितेन कर्म्मणापि सा न जायते। विज्ञेयम्—भक्ति-कर्म्मणी नितरामोतप्रोतभावेन सम्बद्धे इति। अत्रेदमवधेयम्—कश्चित् प्राकृतजनो लोकमुखात् कस्यचित् साधोरागमनं श्रुत्वा कौतूहलपरवशतया तं द्रष्टुं गच्छेत्। तत्र च तदीयं महार्हमुपदेशं श्रुत्वा भक्तानां भक्तिभावञ्चावलोक्य स्वयमपि सहसा भक्तिं लभेत। ततश्च साधोरुपदेशेन मोक्षसाधनानि कर्म्माणि सम्पाद्य स्वयमपि मोक्षमार्गं प्रविशेत्। अत्र प्राथमिकैः श्रवण-गमन-दर्शनादिभिः प्राकृतैः कर्म्मभिरेव तस्य भक्तिलाभस्तदनन्तरं भक्तियुक्तेन कर्म्मणा मुक्तिसम्भावनेति चिन्ताशीलैः पण्डितप्रवरैर्भक्तेरप्यपरिहार्य्यत्वमवश्यमेवाङ्गीकार्य्यम्। शास्त्रीयकर्म्मविषयेऽप्येष एव नियमः। प्रागज्ञानोऽपि मनुष्यः शास्त्रवाक्यानि श्रुत्वा लोकव्यवहारं वा विलोक्य भक्तिं विनापि वैधे कर्म्मणि प्रवर्त्तते। तदनन्तरं क्रमशस्तादृशानां कर्म्मणां साधनमेव तस्य चित्ते भक्तिमुत्पादयति। ततश्च तया भक्त्या स सम्यग् वैधं कर्म्म साधयित्वा मुक्तिं लभते।

भगवते कर्म्मफलं समर्प्य कर्म्मसम्पादनीयमिति प्रागुक्तम् तादृशं समर्पणञ्च भक्तिं विना न सम्भवति। प्रथमन्तावदीश्वरे विश्वासो जयाते। ततश्च तस्य सर्व्वशक्तिमत्ताबोधे तस्मिन् भक्तिरुत्पद्यते। ततश्च सैव भक्तिस्तस्मै कर्म्मफलं समर्पयितुं प्रेरणामुत्पादयति। भक्तेरेव नामान्तरं श्रद्धा। गीताशास्त्रे भक्तेः श्रद्धाया वा प्राधान्यं बहुधा विशेषेण वर्णितम्। श्रीमद्भगवद्गीतायास्तृतीयाध्याये कर्म्मयोगवर्णनावसरेऽपि श्रद्धायुक्तस्य कर्म्मयोगस्यैव प्राधान्यमङ्गीकुर्व्वन् श्रीभगवानुवाच—

"ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्म्मभिः॥" इति।

चतुर्थाध्यायेऽपि—

"श्रेयान् द्रव्यमयाद् यज्ञाज्ज्ञानयज्ञः परन्तप।
सर्व्वं कर्म्माखिलं पार्थ! ज्ञाने परिसमाप्यते॥"

इत्यनेन ज्ञानस्य प्राधान्यमुक्त्वा तस्य लाभप्रकारमाह—

"तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥" इति।

अनेन सेवाप्रणिपातादिना भक्तिरेव ज्ञानसाधयित्रीति विज्ञापितम्! एवं भक्तिलब्धेन ज्ञानेन मोहनाशः सर्व्वभूतेषु समज्ञानञ्च जायतइत्याह—

"यज्ज्ञात्वा न पुनर्म्मोहमेवं यास्यसि पाण्डव!
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि॥" इति।

पुनश्च ज्ञानस्य सर्व्वपापविनाशकत्वमाह—

"अपि चेदसि पापेभ्यः सर्व्वेभ्यः पापकृत्तमः।
सर्व्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि॥" इति।

ज्ञानमेव कर्म्मफलपरित्यागेऽपि साधकमित्याह—

"यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्ज्जुन!
ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथा॥" इति।

येन ज्ञानेन सर्व्वाणि पापानि नश्यन्ते, मुक्तेः परिपन्थीनि सर्व्वाणि कर्म्मफलानि च विफलीक्रियन्ते, तज्ज्ञानं जगति पवित्रतमं श्रेष्ठञ्चेति नास्ति सन्देहावकाशः। अतएवोक्तं—"न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।" इति। मानवानां चरमकाम्यायाः शान्तेरपि जनकं तादृशं पवित्रतमं परमकाम्यं ज्ञानञ्च श्रद्धां विना कोऽपि लब्धुं नार्हतीत्याह—

"श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति॥" इति।

श्रद्धाहीनो जनः स्वभावत एव ज्ञानविरहितः संशयात्मा च भवति। तस्य तु इहलोके परलोके वा कुत्रापि कुशलं न स्यात्। विनाश एव तस्य चरमा गतिरित्युच्यते—

"अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः॥" इति।

साधितेन कर्म्मणा लब्धायां भक्तौ तया साधनभूतया सर्व्वत्र भगवदस्तित्व-ज्ञानं तेन च साम्यज्ञानमेव जायते। तादृशसाम्यज्ञानसम्पन्नो जनो मुक्तिमेव लभत इत्युक्तम्—

"यो मां पश्यति सर्व्वत्र सर्व्वञ्च मयि पश्यति।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति॥
सर्व्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।
सर्व्वथा वर्त्तमानोऽपि स योगी मयि वर्त्तते॥" इति।

षष्ठाध्यायस्य शेषभागे—

"तपस्विभ्योऽधिको योगी, ज्ञानिभ्योऽपि मतोऽधिकः।
कर्म्मिभ्यश्चाधिको योगी, तस्माद् योगी भवार्ज्जुन॥"

इत्यनेन योगिनः प्रशस्य पुनर्योगिष्वपि श्रद्धावत एव श्रेष्ठत्वं विघोषयति—

"योगीनामपि सर्व्वेषां मद्गतेनान्तरात्मना।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः॥ इत्यनेन।

भगवद्भक्तिर्मानवानां मुक्तेर्जननीति कथितम्। अथ सा कथं लब्धुं शक्यत इति चिन्तनीयमेव। केचन महापुरुषा जन्मान्तरीयाणां

पुण्यानां फलेनैवाहेतुकीं भक्तिमपि लभन्ते। तादृशा महाजनास्तु विरला एव, प्राकृतजनानान्तु कर्म्मणैव भक्तिर्जायत इति गीतायां कथितं लोकेष्वपि दृश्यते च। कर्म्मणा कथं भक्तिर्जायत इति प्रागेव प्रबन्धेऽस्मिन् युक्तिभिः प्रदर्शितम्। सप्तमाध्याये पुनर्भगवतः सर्वशक्तिमत्तां सर्व्वत्रावस्थितत्वं सर्व्वदातृत्वञ्च विज्ञाय तस्मिन् विश्वाससमन्विता भक्तिर्जायत इति निगदितम्। भूम्यादयः सर्व्वा एव भगवतो मूर्त्तयः। स च सर्व्वत्र विद्यमानः सर्व्वेषां जनकश्चेत्यादि निगद्य तस्मादन्यत् किमपि नास्तीत्यादि चोद्घुष्य जागतिकेषु सर्व्वेष्वेव पदार्थेषु स्वकीयविद्यमानताप्रकारं स्पष्टभाषया बोधितवान् भगवान् धनञ्जयम्। गुणादीनां सर्व्वेषां स एवोत्पादक इत्यादि च कथयित्वा तस्य सर्व्वशक्तिमत्ताञ्च विज्ञापितवान्। सर्व्वत्रैव भगवदस्तित्ववशाद् यस्मिन् कस्मिंश्चित् पदार्थे भगवद्बुद्धया पूजने भगवत एव तुष्टिर्जायत इति च निगदितम्। देवपूजकेभ्यो भगवद्भक्तानामेतदेव पार्थक्यं—देवपूजकाः पूजया भगवतः प्रीतिमुत्पाद्य तस्माद् भक्तिं लभन्ते तया च साधनभूतया मोक्षं लब्धुं शक्नुवन्ति; साक्षाद्भगवद्भक्तास्तु सद्य एव मुक्तिं लभन्त इति। अत्रोक्तं—"देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि" इति।

मृत्युकाले यदि कश्चिज्जनो योगबलेन भगवन्तं स्मरति, तदा चेत्तत्र तस्य भक्तियोगः स्यात्, तर्हि स भगवत्येव विलीनो भवेत्। अत्रोक्तं—

"प्रयाणकाले मनसाचलेन भक्त्यायुक्तो योगबलेन चैव।
भ्रुवोर्म्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम्॥" इति

यच्च — "सर्व्वद्वाराणि संयस्य मनो हृदि निरुध्य च।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम्॥
ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥"

इत्यभिहितमत्रापि भक्तियोगं विना सर्व्वद्वारसंयमो मनसो हृदि निरोधश्च भवितुं नार्हत्येवेति निश्चयम्।

यच्च— "अनन्यचेताः सततं यो मां स्मरति नित्यशः।
तस्याहं सुलभः पार्थ! नित्ययुक्तस्य योगिनः॥"

इति कथितन्तत्रापि भक्तिं विना कुतो भवेददन्यचेतस्त्वस्य सम्भवः? भक्तिं विना भगवत्प्राप्तिर्न भवतीति स्फुटमाह—

"पुरुषः स परः पार्थ! भक्त्या लभ्यस्त्वनन्यया।
यस्यान्तःस्थानि भूतानि येन सर्व्वमिदं ततम्॥" इति

श्रद्धाहीनानां हतभाग्यानान्तु कर्म्मणि कृतेऽपि मुक्तिर्न लभ्यते। अत्रोक्तं—

"अश्रद्दधानाः पुरुषा धर्म्मस्यास्य परन्तप!
अप्राप्य मां निवर्त्तन्ते मृत्युसंसारवर्त्मनि॥" इति

भक्तियोगेनैव मानवा अनन्यचित्ता भवितुमर्हन्ति। तादृशानामनन्यचित्तानां साधनया झटित्येव सिद्धिर्भगवत्प्रीतिश्च लभ्यते इत्याह—

—(क्रमशः)

## हरिनामामृतम्

नाम नाटकम् (प्रथमो भागः)।

अध्यापक-स्वर्गत-अमियनाथ चक्रवर्त्ति एम्-ए, काव्यतीर्थेन विरचितम्

(पूर्वतोऽनुवृत्तम्)

॥ प्रथमोऽङ्कः॥

। षष्ठं दृश्यम्।

[काजी मुलुकपतिर्नाम शासकस्तन्मन्त्री च]

काजी मुलुकपतिः। — का एषा वार्ता यत् मम राज्ये कश्चित् महम्मदीयधर्मं परित्यज्य हिन्दुधर्मं गृहीतवान्!

काजी-मन्त्री। भवतो दयादृष्टिरेवानार्थकरी। अत्र नगरे इदानीं वैष्णवानामत्याचारः क्रमशो वर्द्धते।

मुलुकपतिः। सर्वा एव प्रजा अस्माकं सन्तानतुल्याः, अत्र धर्मविचारो न करणीयः।

काजी-मन्त्री। वैष्णवानामेक इदानीं स्वयं खोदेति स्वात्मानं घोषयति।

मुलुकपतिः खोदेति। कथमेतत् सम्भवति ?

( विस्मयं नाटयति )

काजी-मन्त्री। अन्ये च वहवस्तमवलम्ब्य अहर्निशमुच्चैः कोलाहलं कुर्वन्तो नगरविघ्नम् उत्पादयन्ति।

मुलुकपतिः। किं तावन् नगरपालौ जगन्नाथ-माधवौ कुरुतः ?

काजी-मन्त्री। तौ प्रति अहं भवन्नाम्ना कठोरतर-शासनविधानार्थमादेशं प्रेरितवान्।

मुलुकपतिः। उत्तमं कर्म्म कृतं त्वया।

काजी-मन्त्री। किन्तु एते नाम वैष्णवा भयङ्करा जीवाः।

मुलुकपतिः। कथम् ?

काजी-मन्त्री। अन्यधर्मीया जना यद्येकवारं हरिनाम उच्चारयन्ति, तर्हि तत्क्षणाद् वैष्णवास्तान् वैष्णवधर्मं स्वीकुर्वन्ति।

मुलुकपतिः। काले काले किं वा भविष्यति! भवतु, कस्तावन्महम्मदीयो वैष्णवधर्म्मं गृहीतवान् ?

काजी-मन्त्री। इदानीं तस्य नाम हरिदास इति।

मुलुकपतिः। किं खलु त्वया तस्मिन् कृतम् ?

काजी-मन्त्री। मया ? मया तं नूतन-वैष्णवं धृत्वा विचारार्थमत्रानेतुं जनः प्रेरितः।

मुलुकपतिः। उत्तमम्। [ प्रविशतः भैरवानन्द-वक्केश्वरौ ]

भैरवानन्दः। ( उपवीतेनाशिषो ज्ञापयित्वा )

महान् खलु राज्यविपर्ययो नवद्वीपनगरे भयमुत्पादयति।

मुलुकपतिः। ( साश्चर्य्यम् ) राज्यविपर्ययः! मन्त्रिन्, राज्यविपर्ययः!!

वक्केश्वरः। ( तादृशीं कृत्वा )

भवन्तो न केवलं काजीनामधेयाः शासकाः, अपि तु स्वयं राजान एवास्माकमथवा स्वयमीश्वरस्य प्रतिनिधयः, अथवा स्वयमेव ईश्वराः।

काजी-मन्त्री। असारां भूमिकां विहाय वक्तव्यसारं ब्रूहि।

वक्केश्वरः। सारम्? सारं विना किमपि न कथ्यते अस्माभिः। किन्तु असारे स्थूलमस्तिष्के सारोऽसारः समपर्यायः। न्यायशास्त्रं तु भवद्भिर्न पठितम्।

भैरवानन्दः। (हस्तेन निवार्य्य) विरम पण्डित! (मुलुकपतिं प्रति) इदं गङ्गातटं परमं तीर्थस्थानं हिन्दु-जनानामिति ज्ञायते भवद्भिः?

मुलुकपतिः। वाढं, ज्ञायते एव।

भैरवानन्दः। अत्र स्थितमिदं तव राज्यभुक्तं नवद्वीपनगरं श्रेष्ठानां श्रेष्ठानां बहुशास्त्रज्ञपण्डितानामवस्थानात्—

मुलुकपतिः। जानामि—यथार्थं श्रेष्ठविद्यास्थानमिदं मदीयं शासन-स्थलं नवद्वीपनगरम्।

भैरवानन्दः। बहुतराः स्मार्ता वैयाकरणा वेदान्तादि-दार्शनिकाः—

वक्केश्वरः। नैयायिकाः—

भैरवानन्दः। नैयायिका वेदज्ञाः क्रियाकाण्डविशारदाश्च पण्डितवर्य्या नियतं शास्त्रचर्चाभिस्तव राज्यं स्वर्गवद् विशिष्टताम् अधिरूढं कृतवन्तः।

मुलुकपतिः। स्वर्गसदृशं मम नवद्वीपनगरमिति निश्चितं जानामि।

भैरवानन्दः। किन्तु—

वक्केश्वरः। इदानीमारण्यकशृगालपरीतं सभ्यमण्डपमिव—

भैरवानन्दः। (करं निवार्य्य) अह-ह, विरम वक्केश्वर! किन्तु इदानीं कौपीनधारिणः—

वक्केश्वरः। मुक्तकच्छाः—

भैरवानन्दः। (विरक्तिभावेन) आः! त्वमेव कथय।

वक्केश्वरः। मुक्तकच्छा मुण्डितमस्तका मालास्थलीं वहन्तस्तिलक-धारिणो जातिविचारहीना अर्द्धमहम्मदीया इव सन्तो महम्मदीयान् अपि स्वधर्मे आनीय वैष्णवाः परमं राज्यविघ्नं सृजन्ति।

भैरवानन्दः। अस्माकं रक्षकाणां भवतां शरणं याचामहे वयम्।

वक्केश्वरः। शरणदानेन आल्लाहसदनं स्वर्गं लभन्तां भवन्तः।

काजी-मन्त्री। भोः पण्डित! वाक्संयमं कुरु।

मुलुकपतिः। ( मन्त्रिणं प्रति ) मन्त्रिन्! दुर्वृत्तानां वैष्णवानां शासनं चिन्तय। अतः परं मम राज्ये न भविष्यति वैष्णवाना-मवस्थानम्।

काजी-मन्त्री। घातुक दुर्दान्त!

[ प्रविशति विकटदर्शनो दुर्दान्तो नाम घातुकः। दुर्दान्तो महम्मदीयरीत्या नतिं करोति ]

काजी-मन्त्री। दुर्दान्त! सत्वरमेवं क्रियतां येन वैष्णवानां कीर्तन-वाद्ययन्त्राणि भग्नानि भवन्ति, कीर्तनञ्च निवारितं भवति।

दुर्दान्तः। झटिति द्रक्ष्यति फलम्।

[ पूर्ववन्नत्वा निष्क्रान्तः ]

भैरवानन्दः। पण्डित वक्केश्वर! ( इङ्गितं करोति )

वक्केश्वरः। आवामपि राज्यमङ्गलं पश्यावः। चलतु महाशय!

[ उपवीतेन पूर्ववद् आशिषः कुर्वन्तौ निष्क्रान्तौ। दुर्दान्तेन कठोरं धृतो यवनो हरिदासः प्रविशति ]

हरिदास। ( वारं वारमुच्चैरुच्चारयति )

हरे कृष्ण हरे कृष्ण

कृष्ण कृष्ण हरे हरे।

४८। वित्तं भोग्ये प्रतीते च।
वित्तं धनं, वित्तः कृष्णः॥

४९। भीम-भीष्मौ भयानके साधू।
निरः कुष इड् विष्णुनिष्ठायाम्।
निरः कुषो वेड़िति विकल्पितेड़यम्। निष्कुषितः॥

५०। वसति-क्षुधिभ्यामिट् क्त्वा-विष्णुनिष्ठयोः।
लुभो व्याकुलीकरणे, अञ्चेः पूजायां, क्लिश-पूङ्भ्यां वा। उषितः

---

४८। वित्तं। भोग्ये प्रतीते च वाच्ये वित्तं निपात्यते। वित्तं धनमिति द्रव्यं वित्तमित्यमरः। सूत्रे लिङ्गवचनमतन्त्रमित्याह वित्तः कृष्ण इति प्रतीत इत्यर्थः। प्रतीते कथित-ख्यात-वित्त-विज्ञात-विश्रुता इत्यमरः। निपातात् विष्णुनिष्ठातस्य दस्य च नो न भवति॥

४९। भीम। भयानके भयङ्करे वाच्ये साधु इति निपात्येते इत्यर्थः। दारुणं भीषणं भीष्मं घोरं भीमं भयानकमित्यमरः। निरः। विष्णुनिष्ठायां परस्यां निर उत्तरस्मात् कुष उत्तरे इट् स्यात्। निरः कुषो वेड़िति विकल्पितेड़यमिति विकल्पितेट्त्वात् विष्णुनिष्ठायामिट्निषेधः स्यादिति इड्विधानमिति भावः। निष्कुषित इति कुष निकर्षे ररामस्य विष्णुसर्गे कृते निर्दुर्बहिः प्रादुराविश्चतुरामिति विष्णुसर्गस्य षः। अत्र समासकार्ये तु षसौ च वक्ष्येते इति सन्धिप्रकरणे उक्तमतोऽसिद्धरूपं न त्याज्यमिति प्रतिज्ञायां न विरोधः॥

५०। वसति। क्त्वाविष्णुनिष्ठयोः परयोर्वसतिक्षुधिभ्यामुत्तरे इट् स्यात्। लुभो। क्त्वाविष्णुनिष्ठयोः परयोः व्याकुलीकरणेऽर्थे वर्त्तमानात् लुभ उत्तरे इट् स्यात्। अञ्चे। पूजायामर्थे वर्त्तमानादञ्चेरुत्तरे इट् स्यात्। क्लिश। क्त्वाविष्णुनिष्ठयोः परयोः क्लिशपूङ्भ्यामुत्तरे इड् वा स्यात्। ङरामः पूञो निवृत्त्यर्थः। उषित इति वस निवासे वचिस्वपियजादीनामित्यादिना सङ्कर्षणः वसिघस्योः ष इति षत्वं सहजानिटत्वादिट् न स्यादितीड़्विधानम्। क्षुधित इति क्षुध बुभुक्षायां सहजानिट्। विलुभितानामिति। लुभ विमोहने व्याकुलीकृतानामित्यर्थः। विलुभिता इति विसङ्कुला भूता इत्यर्थः।

क्षुधितः। कृष्णेन विलुभितानां गोपीनां केशा विलुभिताः। गार्ध्ये तु लुब्धः। अञ्चितः। गतौ अक्तः। क्लिशितः क्लिष्टः॥

५१। पूङः सेड् विष्णुनिष्ठा न कपिलः।
पवितः पूतः॥

५२। शीङ्-स्विदि-मिदि-क्ष्विदि-धृषः सेड् विष्णुनिष्ठा न कपिलः।
शयितः॥

---

इषु सह लुभ रुष रिष इड् वा ते विकल्पितेट्त्वम् अतो विष्णुनिष्ठायामिड्निषेधः स्यादितीड् विधानम्। क्त्वितु इषु सहेत्यादिना विकल्पे प्राप्ते व्याकुलीकरणे नित्यतार्थविधानम्। लुब्ध इति। लुभ गार्ध्ये गार्ध्यमाकाङ्क्षा। अञ्चित इति अन्चु गतिपूजनयोः उरामेतो वेट् क्त्वीति वक्ष्यते अतो विकल्पितेट्त्वात् विष्णुनिष्ठायामिड्निषेधः स्यादिति पूजायामिड्विधानम्। क्त्वितु। पूर्व्वपरयोः परविधिर्ब्बलवानित्यनेन उरामेत्वसामर्थ्याद्विकल्प एवेड् भवति, अतः पूजायाम् अङ्क्त्वेति च भवति। पूजायामङ्क्त्वति क्रमदीश्वरन्यासकाराभ्याम-प्युदाहृतम्। अतः वसतीत्यादिसूत्रचतुर्षु मध्ये पूर्व्वसूत्रद्वये क्त्वाविष्णुनिष्ठयोर्ग्रहणं प्रयोजनं, उत्तरद्वये तु विष्णुनिष्ठाग्रहणं प्रयोजनं क्त्वाग्रहणन्तु जलस्थलवृष्टिवदिति। अक्त इति अनिरामेतामित्यादिना नरामहरः। क्लिशितः क्लिशू विबाधने क्र्यादि क्लिशः उपतापे दिवादिर्वा क्र्यादिः स्वरतिसूतिसूयति धूञूदित इड्वेति विकल्पितेट्त्वाद्विष्णुनिष्ठायामप्राप्ते विभाषा। क्त्वितितु उदित्वादेव विभाषा अपरिहार्य्यैव दिवादेस्तु विष्णुनिष्ठायां क्त्वेच नित्यं प्राप्ते विभाषा॥

५१। पूङः। पूङ सेड्विष्णुनिष्ठा कपिलो न भवति। पवित इति पूङ् पवने ञ्यो जागृवर्ज चतुर्भूजान्ताच्च नेट् कपिल इत्यनेन निषेधे प्राप्ते विभाषा। कपिलत्वाभावाद्गोविन्दः॥

५२। शीङ। शीङ स्वप्ने ञि ष्विदा स्नेहनमोचनयोर्भ्वादिः स्विदा गात्रप्रक्षारणे दिवादिर्द्वयोरेव ग्रहणम्। ञि मिदा स्नेहने ञिक्ष्विदा मोक्षणे ञि धृषापागल्भ्ये इत्येतेषां सेड् विष्णुनिष्ठा कपिलो न भवति। शयित इति कपिलत्वाभावाद्गोविन्दः॥

५३। आरम्भे च विष्णुनिष्ठा, तत्र क्तस्तु कर्त्तरि च, आरामानुबन्धादिड़् वा विष्णुनिष्ठायामारम्भभावयोः, जपि-वमोश्च ॥

ञि ष्विदा द्युतादौ, ष्विदा पुषादौ। ञि ष्विदा द्युतादौ पुषादौ चेत्येके। प्रस्वेदितवान् प्रस्वेदितः कृष्णः। स्वेदितं गोपीभिः। ञि मिदा स्नेहने प्रमेदित इत्यादि। पक्षे, प्रस्विन्नः स्विन्नमित्यादि ॥

५४। क्षमार्थान्मृषो विष्णुनिष्ठा वा न कपिलः ॥

मर्षितः। अक्षमार्थात्—अपमृषितं वाक्यमाह। अपमृष्टमशुद्धमिति यावत्, धातूनामेकार्थत्वात् ॥

५५। उरामोद्धवाद्भौवादिकाद्भावारम्भयोः सेड़् विष्णुनिष्ठा वा कपिलः ॥

---

५३। आर। आरम्भे च गम्यमाने विष्णुनिष्ठा भवति। अत्र क्तस्तु कर्त्तरि च भवति, अत्रेति निर्द्धारणे सप्तमी विष्णुनिष्ठायामित्यर्थः आरम्भे भावे च विहितायां विष्णुनिष्ठायां परस्याम् आरामानुबन्धाद्धातोरुत्तरे इड़् वा स्यात्। आ इरामानुबन्धादित्यादिना निषेधे प्राप्ते विभाषा। जपि। अन्तर्भावयोर्विहितायां विष्णुनिष्ठायां परस्यां जपिवमोश्च सम्बन्धे इड़् वा स्यात्। जपितः जप्तः वमितः वान्त इत्युदाहरणम्। द्युतादाविति द्युतादिगणे वर्त्तते इत्यर्थः। एवं पुषादाविति। प्रस्वेदितवानिति प्रशब्द आरम्भद्योतकः। प्रस्वेदित इति आरम्भे कर्त्तरि क्तः। स्वेदितमिति भावे। पक्ष इति इड़भावपक्षे इत्यर्थः। प्रस्विन्न इति रदाभ्यामित्यादिना विष्णुनिष्ठातस्य दस्य च नः। स्विन्नमिति भावे ॥

५४। क्षमा। क्षमार्थान्मृषधातोरुत्तरात् विष्णुनिष्ठा कपिलो न भवति। मर्षित इति मृष क्षमायां कपिलत्वाभावाद्गोविन्दः। अपमृषितमिति कपिलत्वाभावाद्गोविन्दाभावः। अपमृषितमित्यस्यार्थमाह अपमृष्टमिति। हेतुमाह धातूनामिति ॥

५५। उरा। भौवादिकादुरामोद्धवाद्धातोरुत्तराद्भावे आरम्भे च विहिता विष्णुनिष्ठा कपिलो वा भवति। द्योतितमिति द्युत दीप्तौ भ्वादिः उरामोद्धवः।

द्योतितं ... प्रद्युतितः। सेड़िति किम्? स्रुचु स्रुक्तः। एवं म्लुचु प्रभृतयः॥

५६। नेर्हरो विष्णुनिष्ठायाम्॥

भावितः। श्वयतेराश्वसेर्वमेश्चेति नेट्। सङ्कर्षण-त्रिविक्रमौ। शूतः आश्वस्तः। अत्र विश्वस्त इत्यपि केचित्। विश्वासयुक्ते विश्वस्त-स्त्रिषु स्त्री विधवा स्त्रियामिति रुद्रकोषात्। पक्षे वम-वान्त, गुहू गूढः। वनु-उदितो वेट्क्त्वि इति वक्ष्यते, ततो नेट्, हरिवेण्वन्तसहजानिटा-मित्यादि, वतः, ततः। तृतीकृत्यादेरीरामत्वं विकल्पितेट् इत्यस्यानित्यत्वे

---

भावे क्तः कपिलत्वाद्भावे गोविन्दः। प्रद्योतित इति आरम्भे चेत्यादिना म्रुचु गतौ उरामेतो वेट्क्त्वीतिवक्ष्यते अतो विकल्पितेट्त्वात् विष्णुनिष्ठाया-मिड़भावः॥

५६। णेर्हरो। विष्णुनिष्ठायां परस्यां णेर्हरो भवति। भावित इति-ण्यन्तात् क्तः इट् णेर्हरः। अनिडादाविति विशेषणात् णेर्हरोऽनिड़ादौ। रामधातुक इत्यनेन प्राप्ते विधानम्। सङ्कर्षणत्रिविक्रमाविति वचिस्वपियजादी-नामित्यादिना सङ्कर्षणः। श्याश्विव्याज्याह्वां सङ्कर्षणस्य त्रिविक्रम इत्यनेन त्रिविक्रमः। शून इति टु ओ श्वि गतिवृद्ध्योः ओरामेत्वाद्विष्णुनिष्ठातस्य नः। आश्वस्त इति श्वास प्राणने, अत्रेति केचिदिति क्रमदीश्वरादय इत्यर्थः। व्याङ् श्वसिति क्रमदीश्वरलक्षणः। विश्वस्त इत्यपि केचिदिति यदुक्तं तत्र हेतुमाह विश्वासयुक्त इति। विश्वासयुक्ते विश्वस्तो वर्त्तते स विश्वस्तशब्दस्त्रिषु लिङ्गेषु वर्त्तते। बाच्यलिङ्गत्वात् विधवा स्त्रियामपि वर्त्तते तदा स्त्री स्त्रीलिङ्गः विश्वस्तेति। वान्त इति टु वमु उद्गिरणे हरिवेण्वन्तोद्धवस्य त्रिविक्रमः क्वौ कंसारिवैष्णवे चेति उद्धवस्य त्रिविक्रमः मस्य विष्णुचक्रं विष्णुचक्रस्य हरिवेणुः। गूढ़ इति गुहू सम्वरणे। स्वरति-सूति-सूयति-धूञूदित इड़्वेति विकल्पेट्त्वमतो विष्णुनिष्ठायामिड़भावः। हस्य ढः; तस्य धः. धस्य ढः, ढस्य हरः; पूर्व्वस्य त्रिविक्रमश्च। वन्विति वनु याचने; उदित इत्यत्र उरामेत इति ज्ञेयम्। हरिवेण्वन्तेति अनेन हरिवेणुहरः। तत इति तनु विस्तारे पूर्व्ववत्।

ज्ञापकं तेन, धावु गतिशुद्धयोः, धावितः धावितवान्। शुद्धौ तु धौतः धौतवान्। पतॢ-पतितः पतितवान्। मनु-मनितः मनितवान्। अनेकसर्व्वेश्वरत्वादिट्। संज्ञापितः दरिद्रित इत्यादि ॥

५७। क्षुब्धादयो मन्थादौ साधवः।

क्षुभ—क्षुब्धो मन्थे। लगे लग्नः सक्ते। म्लेच्छ म्लिष्टमस्पष्टे। रिभृ शब्दे रिब्धं स्वरे। फण गतौ फाण्टमुदकसम्पर्काद्विभक्तरसे ईषदुष्णे

---

कर्त्तरि क्तः। धुतितं प्रधुतित इति कपिलत्वाद् गोविन्दाभावः। मुक्तमिति ननु यदि विकल्पितेटो विष्णुनिष्ठायामिड् न भवति, तर्हि कथं धावितः धावितवान्, पतितः पतितवान् इत्यादि भवत्विति चेत्तत्राह नृतीकृत्यादेरिति ; नृतीकृत्यादेरिड् वा से सिं विना इति विकल्पितेट्त्वम् अतो नृती गात्रविक्षेपे कृती छेदने इत्यादेर्विष्णुनिष्ठायामिड्निषेधः सिद्ध एव अत ईरामेत्वमनर्थकम् अतोऽनित्यज्ञापकमिति। धौत इति छस्य श इत्यादिना वस्य ऊट् अद्धायादूठो वृष्णीन्द्रः शुद्धौ तु इड् निषेध एवेति भावः। पतल इति। पतल गतौ पतित इति ; इबन्त-ऋध-भ्रस्ज-दन्भु-श्रि-ऊर्णु-यौति-भवति-ज्ञपि-सनि-तनि-पति-दरिद्राभ्य इड् वा सनीति विकल्पितेट्त्वम् तथापि अनित्यत्वादिट्। मन्विति मनु बोधने उरामेत्वाद्विकल्पितेट्त्वम्। अनेकसर्व्वेश्वरादिड़िति अनित्यत्वादेवेति शेषः। अनेकसर्व्वेश्वरत्वादिति पाठः क्वचिद्दृश्यते सत्वसभ्यः अनित्यत्वस्यैव हेतुत्वात् (क)। संज्ञपित इति ण्यन्ताज्ज्ञपेः क्त इट् णेर्हरः इबन्तेत्यादिना विकल्पेट्त्वम्। दरिद्रित इति दरिद्रा दुर्गतौ दरिद्रातेरारामहर इत्यादिना आरामहरः अत्रापि इबन्तेत्यादिना विकल्पितेट्त्वम् ॥

५७। क्षुब्धा। मन्थादौ वाच्ये क्षुभादीनां धातूनां विष्णुनिष्ठया सह क्षुब्धादयः साधव इत्यर्थः। साधव इति निपात्यन्ते इत्यर्थः। क्षुभिति। क्षुभ सञ्चलने क्षुब्ध इति निपातादिड्भावः। मन्थ इति मन्थदण्डे इत्यर्थ वैशाखमन्थ मन्थान मन्थनो मन्थदण्डक इत्यमरः। आदिशब्दो विवृणोति लगे लग्नः सक्त इत्यादिना। लगे इति लगे सङ्गे। लग्न इति निपातादिड्-

(क) अलभ्यत्वसभ्यत्वे विवेचनीये। श्रीरामः ॥

कषाये च। ञि धृषाशसोर्धृष्टविशस्तावविनीत एव। दृहेर्दृढः स्थूल-बलिनोः। कषेः कष्टं कृच्छ्रगहनयोः। संविनिपूर्व्वस्यार्देः समर्ण-व्यर्ण-न्यर्णाः, अभ्यर्णस्तु निकटे। श्रा इत्यस्य शृतं क्षीरादिपाके। परिवृंहेः परिवृढोऽधिपे। ण्यन्तस्य वृत्तेर्वृत्तमध्ययने। वृत्तं श्रीभागवतम् अधीत-

---

भावो विष्णुनिष्ठातस्य नश्च सक्त इति युक्त इत्यर्थः। म्लेच्छति म्लेच्छ अव्यक्तायां वाचि म्लिष्टमिति निपातादिड्भाव एरामस्य इरामश्च। अस्पष्ट इति अस्पष्टवचन इत्यर्थः। अथ म्लिष्टमविस्पष्टमित्यमरः। रेभृ इति रेभृ शब्दे रिब्धमिति निपातादिड्भाव एरामस्य इरामश्च॥ फाण्टमिति निपातादिड्-भावः. हरिवेण्वन्तोद्धवस्येत्यनेन त्रिविक्रमश्च टवर्गयुक्तत्वात्तरामस्य टरामः सिध्यत्येव। उदकसम्पर्कात् जलसंसर्गात् विभक्तः पृथग्भूतो रसो यस्य तादृशे ईषदुष्णे अल्पतप्ते कषाये रसविशेषे निर्यासे वा। निर्य्यासेऽपि कषायोऽस्त्रीति नानार्थवर्गः। निर्य्यासः क्वाथः। फाण्ठमिति पाठोऽपि दृश्यते किन्तु फाण्ठशब्दस्य कषायविशेषवाचिता नास्ति। अनायासकृतं फाण्टमित्यमरः। ञि धृषा। ञि धृषा प्रागल्भ्ये शसु हिंसायाम् इत्येतयोः अविनीत एव वाच्ये धृष्टविश्वस्तौ साधू। अविनीतः प्रगल्भः। धृष आरामानुबन्धत्वात् शस उरामेत्त्वाद्विष्णुनिष्ठायामिड्निषेधे सिद्धे नियमार्थं वचनमिदम् अविनीत एवेति तेनाप्रगल्भे धर्षितो विशसित इति। दृहे। स्थूलश्च वली च तयोर्वाच्ययो-र्दृन्भू हिंसायामित्यस्य दृढः साधुः। दृढ इति अनिरामेतामित्यादिना नरामहरः हस्य ढः तस्य धः धस्य हरः ऋरामस्य नेति त्रिविक्रमनिषेधः। शक्त स्थूलौ त्रिषु दृढाविति नानार्थवर्गः। ऊरामेत्वाद्विष्णुनिष्ठायामिड्निषेधे सिद्धे इदमपि नियमार्थं स्थूलबलिनोरेवेति तेनान्यत्र दृंहित इति कषेः। कृच्छ्रे गहने च वाच्ये कष हिंसायामित्यस्य कष्टं साधु। इड्भाव एव निपातफलम्। कृच्छ्रं दुःखं गहनं दुष्प्रवेशस्थानम्। काननं गहनं समे इत्यमरः। कष्टे तु कृच्छ्रगहने इति नानार्थवर्गः। कृच्छ्र गहनयोरेव इड्भावः। तेनान्यत्र कषितं सुवर्णमिति। कष्टो अग्निः संवि। संविनिपूर्व्वस्य अर्द्द गतौ याचने च इत्यस्य विष्णुनिष्ठया सह समर्णः व्यर्णः न्यर्णः साधवः। इड्भाव एव निपातफलं

मित्यर्थः। घुष्टमविशब्दने। घुष्टा रज्जुर्घृष्टेत्यर्थः। विशब्दने तु, घुषितं वाक्यम्। शब्देन प्रकटिताभिप्रायमित्यर्थः॥

५८। दान्त-शान्त-पूर्ण-च्छन्न-ज्ञप्त-दस्त-स्पष्टा णौ वा निपात्यन्ते॥

---

रदाभ्यामित्यादिना विष्णुनिष्ठातस्य दस्य नः सिध्यत्येव। अभ्य। निकटे वाचे अभिपूर्व्वस्य अर्द्दे रभ्यर्णः साधुः। अत्रापि निपातफलमिड्भावः। उपकण्ठान्तिकाभ्यर्णा इत्यमरः। श्रा। क्षीरादिपाके वाच्ये श्रा इत्यस्य श्रृतं साधु। क्षीरं दुग्धम् आदिपदेन घृतादेर्ग्रहणम्। श्रा इत्यस्येति श्रा पाके अदादिः श्रै पाके भ्वादिर्द्वयोरेव ग्रहणम्। पाके क्षीराज्यपयसां श्रृतमित्यमरः। आज्यं घृतं, पयो जलम्। क्षीरादिपाकादन्यत्र श्राणा यवागूः। दरिमित्रयूगित्यादिना विष्णुनिष्ठातस्य नः णत्वम्। यवागूरुष्णिका श्राणेत्यमरः। परि। अधिपे वाच्ये वृहि वृद्धावित्यस्य परिवृढ़ः साधुः। अधिपः प्रभुः। परिवृढ़ोऽधिप इत्यमरः। निपातादिड्भावो नरामहरश्च। अन्यत्र परिवृंहित इति। ण्यन्त। अध्ययनेऽर्थे वर्त्तमानस्य ण्यन्तस्य वृत्तेर्वृत्तम्। साधु। वृत्तमिति वृतु वर्त्तने णेर्हरः सिध्यत्येव, किन्तु गोविन्दनिवृत्तिरिड्निवृत्तिश्च निपातफलम्। घुष्ट। अविशब्दनेऽर्थे वर्त्तमानस्य घुषधातोर्घुष्टं साधु। घुषिर् धातुर्भ्वादिश्चुरादिश्च भ्वादिः शब्दार्थः चुरादिर्विशब्दनार्थः। विशब्दनं शब्देन स्वाभिमताविस्करणम्। सूत्रे लिङ्गवचनमतन्त्रमित्याह घुष्टा रज्जुरिति। अत्र घुषधातुर्घर्षणमर्थः। घुषितमिति चुरादित्वेऽपि णेरभावः अनित्यत्वात्। प्रकटितेति प्रकटितोऽभिप्रायः यत्रेति विग्रहः॥

५८। दान्त। दमु शमु उपशमे पूरी आप्यायने छद अपवारणे इत्येषां ज्ञपेर्दसु उपक्षये स्पर्श बाधनस्पर्शनयोः इत्येतयोश्च णौ दान्तादयो वा निपात्यन्ये। ज्ञपिर्हेतुण्यन्तः। दन्त इति इड्निवृत्तिर्निपातफलम् इड्निवृत्त्यनन्तरं हरिवेण्वन्तोद्धवस्य त्रिविक्रमः। कौ कंसारिवैष्णवे चेति उद्धवस्य त्रिविक्रमः मस्य विष्णुचक्रं विष्णुचक्रस्य हरिवेणुः। एवं शान्त इति पूर्ण इति इड्निवृत्त्यनन्तरं विष्णुनिष्ठातस्य नः। छन्न इति इड्निवृत्त्यनन्तरं विष्णुनिष्ठातस्य दस्य च नः। ज्ञप्त इति निपातादिड्निवृत्तिः। दस्त इति। निपातादिड्-

पक्षे, दमितमित्यादि। तथा दसु दासितः स्पश स्पाशितः॥

५९। रुष्यम-त्वर-संघुषास्वनेभ्यो वेड् विष्णुनिष्ठायाम्॥

रुष्टः रुषितः। अमगतौ हरिवेण्वन्तेत्यादि दीर्घः। आन्तः अमितः, वान्त वमितः। छ्वस्य श इत्यादौ ज्वरत्वरश्रिवाव-मवान्तु ससर्व्वेश्वरस्य। तूर्णः त्वरितः। संघुष्टः संघुषितः। आस्वान्तः आस्वनितः॥

६०। हृष्ट-हृषितौ विस्मये प्रतिघाते लोम्नो हर्षे च, अपचितापचायितौ पूजायां निपात्यन्ते॥

जलकेलौ हृष्टस्य कृष्णस्य हृष्टं लोम विस्मितस्य प्रतिहतस्य

---

निवृत्तिर्वृष्णीन्द्रनिवृत्तिश्च। एवं स्पष्ट इति। दमित इति। घटादित्वादुद्धवस्य वामनः। इत्यादीत्यादिपदेन शमितः ज्ञपित इति शमित-च्छदित-ज्ञपितेषु घटादित्वाद्वामनः॥

५९। रुष्य। विष्णुनिष्ठायां परस्यां रुष्यादिभ्य उत्तरे इड् वा भवति। रुष्ट इति रोषे। इषु-सह-लुभ-रुष-रिष इड् वा ते इति विकल्पितेट्त्वम् अतो विष्णुनिष्ठायामिड्निषेधे प्राप्ते विभाषा। हरीति। अनेन उद्धवस्य त्रिविक्रमः। आन्त इति अत्रापि नित्यमिटि प्राप्ते विभाषा। ज्वरत्वरेति अनेन ससर्व्वेश्वरस्य वस्य ऊट्। तूर्ण इति ञि त्वरा सम्भ्रमे आरामानुबन्धत्वादिड्निषेधे प्राप्ते विभाषा। संघुष्ट इति घुषिर् धातुः शब्दार्थो विशब्दनार्थश्च अत्रापि नित्यमिटि प्राप्ते विभाषा। आस्वान्त इति स्वनशब्दे उद्धवस्य त्रिविक्रमः अत्रापि नित्यमिटि प्राप्ते विभाषा॥

६०। हृष्ट। विस्मये प्रतिघाते लोम्नो हर्षे च वर्त्तमानस्य हृष तुष्टावित्यस्य हृष्टहृषितौ साधू। हृष् अलीके इत्यस्य ग्रहणमिति केचित् पक्षे इड़भाव एव निपातफलम्। अप। पूजायामर्थे वर्त्तमानस्य चायृधातोपचितापचायितौ साधू। अपचायित इति सिध्यत्येव निपातादपचित इत्यपि भवतीति। हृष्टस्येत्यर्थमाह विस्मितस्येति। प्रतिहतस्येति स्वकर्त्तृकजलसेकानन्तरं गोपीकर्त्तृकजलसेकेन पराभूतस्येत्यर्थः। हृषितस्येत्यादि वेति जलकेलौ हृषितस्य

(१४) रक्षिवर्गस्त्वनीकस्थो-(१५) ऽथाध्यक्षाऽधिकृतौ समौ ॥
(१६) स्थायुकोऽधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु ।
भौरिकः कनकाध्यक्षो रूप्याध्यक्षस्तु नैष्किकः ॥
अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः ।
(१७) सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥
(१८) शण्ढो वर्षवरस्तुल्याः ॥

---

रेति। द्वयं शिकदार इति ख्याते, राजाङ्गरक्षकगणे। रक्षिवर्गस्तु यो राज्ञः सोऽनीकस्थोऽभिधीयते" इत्यमरमाला। अनीकेन वृन्देन तिष्ठति कः ॥१४

अध्येति। यो यत्राधिकृतस्तस्मिन्। अधिगतोऽक्षेण, अक्षान् व्यवहारान् अधिगत इति वा। अधिकमक्ष्णोति अध्यक्षः। अधिक्रियते नियुज्यते इति क्तः ॥१५

स्थेति। एकस्मिन् ग्रामेऽधिकृतः स्थायुकः। श्रृकमगमेत्यादिना उकञ्। बहुषु ग्रामेष्वधिकृतो गोपः। ग्रामेष्वधिकृतो गोपो गोष्ठाध्यक्षेऽपि वल्लभ" इति रुद्रः। भौरीति। द्वयं स्वर्णाध्यक्षे। भूरि प्राचुर्य्यस्वर्णयोरिति रुद्रः। तत्र नियुक्त इकण्। "रूप्यं निष्के रूपयुक्ते" इति रुद्रः। निष्के नियुक्त इकण्। वंशस्य गृहस्यान्तर्म्मध्यं अन्तर्वंशः तत्र भव इकण्। गृह-सन्तानयोर्व्वंश इति तारपालः ॥१६

सौवीति। चतुष्कं खोजा इति ख्याते। सुष्ठु विदन्ति कलच् लस्य द्वित्वं निपातनात् स्वार्थेऽण्। कञ्चुकयोगादिन्। स्थपतिः कञ्चुकी स्वार्थे यण्। सुविदन्ति स्वार्थेऽण् ॥१७

शण्ढ इति। द्वयं कृत्रिमान्तःपुरस्थे खोजा इति ख्याते। शाम्यति इति ढः। वर्षमन्तःपुरे वर्ष इति रुद्रः। वर्षं वृणोत्यच्। ये त्वल्पसत्त्वाः प्रथमाः क्लीबाश्च स्त्रीस्वभाविनः। जात्या न दुष्टाः कार्य्येषु ते वै वर्षवराः स्मृताः"। षड़ेकार्था हि इति भगीरथः। तुल्यास्तुल्यार्थाः ॥१८

(१९) सेवकाऽर्थ्यनुजीविनः ।

(२०) विषयानन्तरो राजा शत्रुर्मित्रमतःपरम् ॥

उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः ।

(२१) रिपौ वैरि-सपत्नाऽरि-द्विषद्द्वेषण-दुर्हृदः ॥

द्विड्-विपक्षाऽहिताऽमित्र-दस्यु-शात्रव-शत्रवः ।

अभिघातिपराऽराति-प्रत्यर्थि-परिपन्थिनः ॥

(२२) वयस्यः स्निग्धः सवया ॥

---

सेवेति। त्रयं सेवके, सेवृ सेवने वुण्। अर्थनमर्थस्तद्योगादिन्। प्रभोरनु पश्चाज्जीवति णिनिः ॥१९

स्वभूम्यव्यवहितो राजा शत्रुरेकार्थाभिनिवेशात्। स्वभूम्यन्तरितो मित्रम् एकार्थानभिनिवेशात्। बलाधिकोऽपि यो न विकरोति स उदासीनः। परतरो नोपकारी नापकारी, उदास्ते ई तस्यासः। शत्रुमभि युञ्जानस्य जेतुमिच्छोर्यः शत्रुहिताय पार्ष्णिं गृह्णाति पृष्ठतो वर्त्तते स पार्ष्णिग्राहः ॥२०

रिपाविति। परिपन्थिपर्य्यन्तम् ऊनविंशतिः शत्रुसामान्ये। रपति हन्तुं शशरपोरिच्चेति कुः। वैरं विरोधोऽस्तीति इन्। सपत्नीव इवार्थेऽन्। इयर्त्ति हन्तुम् इः। द्वेष्टि शन्तृङ्यू। दुर्निन्दितं हृदस्य। द्वेष्टि क्विप्। विरुद्धः पक्षः। न हितः अहितः न विद्यते हितमस्मदित्यपि रायः। अम गतौ इत्रन्। दस्यति जनिमनिदसिभ्यः कुयः। रायमते युः। शातयति शतिलजीत्यादिना रुः। शत्रुरेव शत्रवः प्रज्ञाद्यण्। अभिमुखं हन्ति आवश्यके णिनिः। अभियातीति पाठे यती प्रयत्ने इत्यस्य रूपम्। पृङोऽच्। न राति सुखम् अरातिः बाहुलकात् तिः। प्रतिकूलार्थेन योगादिन्। परिपन्थयोगादिन् ॥२१

वेति। त्रयं वयस्ये। वयसा तुल्यः यत्। स्निह्यतीति क्तः। समानं वयोऽस्य, रूपादौ वेति समानस्य सभावः। 'अमात्यपुत्रैः सवयोभिरन्वित' इति रघुः ॥२२

  

(२३) अथ मित्रं सखा सुहृत् ।

(२४) सख्यं साप्तपदीनं स्या-(२५) दनुरोधोऽनुवर्त्तनम् ।

(२६) यथार्हवर्णः प्रणिधिरपसर्पश्चरःस्पशः ।

चारश्च गूढ़पुरुष-(२७) श्चाप्तः प्रत्ययितस्त्रिषु ॥

(२८) सांवत्सरो ज्योतिषिको दैवज्ञ-गणकावपि ।

स्युर्म्मौहूर्त्तिक-मौहूर्त्त-ज्ञानि-कार्त्तान्तिका अपि ॥

(२९) तान्त्रिको ज्ञातसिद्धान्तः ॥

---

मीति। त्रयं मित्रे। मेद्यति स्निह्यति त्रक्। इदमाविष्टलिङ्गं यथा इयं मित्रमयं मित्रमिति। सह खिद्यते इति डिः। शोभनं हृदस्य ॥२३

सेति। द्वयं मैत्र्याम्। सख्युर्भावो यत्। सप्तभिः पदैराप्यते ईनण् ॥२४

अन्विति। द्वयमनुवृत्तौ। भावे घञ्युटौ ॥२५

यथेति। सप्तचरे। यथार्हं वर्णयत्यच्। प्रणिधीयते ज्ञाप्यमस्मिन् कर्म्मण्यधिकरणे चेति किः। नेर्नद-गदेत्यादिना णत्वम्। अपकृष्टं द्यण् इत्येके। चरति जानाति परमन्त्रम्। स्पश बाधनेऽच्। प्रज्ञाद्यणि चरः। गूढ़ आवृतः पुरुषः ॥२६

आप्त इति। द्वयमात्मीये। आप्यते क्तः। "रागद्वेषविनिर्म्मुक्त आप्त इत्यभिधीयते" इति। प्रत्ययो विश्वासः स जातोऽस्य इत्यच्, द्वयं त्रिषु ॥२७

सामिति। अष्टौ दैवज्ञे। संवत्सरं वेत्ति अण्। ज्योतिषं वेत्ति इकण्। दैवं जानाति कः। गणयति वुण्। मुहूर्त्तं वेत्ति इकणणौ। ज्ञानयोगादिन। कृतान्तं दैवं वेत्ति इकण् ॥२८

तेति। द्वयं कस्यचिच्छास्त्रस्य तत्त्वज्ञे। तन्त्रं वेत्ति। ज्ञातः सिद्धान्तो येन ॥२९

(३०) सत्री गृहपतिः समौ ।
(३१) लिपिकरोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके ॥
(३२) लिखिताऽक्षरसंस्थाने लिपिर्लिपिरुभे स्त्रियौ ।
(३३) स्यात् सन्देशहरो दूतो (३४) दूत्यं तद्भावकर्म्मणि ॥
(३५) अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ।
(३६) स्वाम्यमात्य-सुहृत्-कोष-राष्ट्र-दुर्ग-बलानि च ॥

---

सेति। द्वयं सदा दानशीले। "सत्रमाहुः सदादाने छादनावश्ययोरपी"ति धरणिः ॥३०

लिपीति। चतुष्कं लेखके। लिपिं करोति तदाद्येत्यादिना टः। अक्षरेण ख्यातः। ख्यातेश्चुञ्चुचणौ। चणो मूर्द्धन्यान्तः। दन्त्यान्त इत्यन्ये ॥३१

लीति। द्वयमक्षरलिखनसंस्थाने। लिखिताक्षरस्य संस्थानमाकृतिः। केचिच्चतुष्कमेकपर्य्यायमाहुः। लिपेः किः, पृषोदरादित्वात् पस्य वा बत्वम्। लेखनीपर्य्यायो रभसे—"लेखनी कर्णतूली स्याद्वर्णाङ्काक्षरतूलिका। वर्णतूलः स्वस्तिमुखो लेखे वाचिकहारक" इति प्रसङ्गादुक्तम् ॥३२

सन्देशेति। द्वयं दूते। सन्देशं वाक्यं हरति। दूयतेऽनेन क्तः ॥३३

दूतस्य भावः कर्म्म वा दूत्यं, यणि दौत्यमपि ॥३४

अध्वेति। पञ्च पथिके। अध्वनि साधुः ईन्यतौ। अध्वानं गच्छतीति डः। पन्थानं गच्छतीत्यण्, संज्ञात्वान्नलोपाभावः। अन्यत्र इकण् अस्त्यर्थे इको वा ॥३५

स्वामीति। परस्परकार्य्यकारित्वादेतानि राज्याङ्गानि प्रकृतय उच्यन्ते। प्रकृष्टमुपकुर्व्वन्ति राज्यं तदुक्तं कामन्दकीये।—"स्वाम्यमात्यः स्वराष्ट्रञ्च दुर्गं कोषो बलं सुहृत्। परस्परोपकारित्वात् सप्ताङ्गं राज्यमुच्यते। अमात्यराष्ट्रदुर्गाणि कोषो दण्डश्च पञ्चमः। एताः प्रकृतय-

राज्याङ्गानि (३७) प्रकृतयः पौराणां श्रेणयोऽपि च ।
(३८) सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ।
(३९) षड् गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः ॥
(४०) क्षयः स्थानञ्च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ।
(४१) स प्रतापः प्रभावश्च यत्तेजः कोष-दण्डजम् ॥

---

स्तजज्ञैर्विजिगीषोरुदाहृताः। एताः पञ्च तथा मित्रं सप्तमः पृथिवीपतिः सप्तप्रकृतिकं राज्यमित्युवाच बृहस्पतिः॥" प्रसङ्गादनेकार्थतां दर्शयति ॥३६

पौराणां श्रेणयोऽपि प्रकृतय उच्यन्ते ॥३७

सन्ध्यादयो राज्ञः षड् गुणाः। सन्धिः कोषभूमिप्रदान-हेतुकः प्रणयबन्धः। उपसर्गे घः किः। विग्रहो युद्धं, ग्रहेरण्। अरिं प्रति यात्रा यानम्। विग्रहादिनिवृत्तिरासनम्। एकेन सन्धिः कलहः परेणेति द्विप्रकारं द्वैधम्। अशक्त्या बलवदाश्रयणमेव आश्रयः ॥३८

शक्तय इति। एतास्तिस्रः शक्तयः। प्रभोरयं प्रभावः। कोष दण्डौ प्रभुशक्तिः। तदुक्तं—कोषदण्डबलं प्रभुशक्तिरिति। बलवती विक्रमचेष्टा उत्साहशक्तिः। तदुक्तं—विक्रमबलमुत्साहशक्तिरिति मन्त्राज्जाता ॥३९

क्षयादिर्नीतिवेदिनां त्रिवर्गः। अन्येषां धर्म्मार्थकामाः। यस्मिन् गुणे स्थितः स्वकर्म्मणामुपघातं पश्यति नेतरस्य स क्षयः। यस्मिन् स्वरूपेणावस्थितिर्वृद्धिश्च भवति ॥४०

प्रेति। द्वयं कोषदण्डजाते तेजसि। प्रतपत्यनेन घञ्। प्रकृष्टो भावः प्रभावः ॥४१

(४२) भेदो दण्डः साम दानमित्युपायचतुष्टयम् ।
(४३) साहसन्तु दमो दण्डः (४४) साम सान्त्वमथो समौ ॥
(४५) भेदोपजापा-(४६) वुपधा धर्म्माद्यैर्यत् परीक्षणम् ।
(४७) पञ्च त्रिष्वऽषड़क्षीणो यस्तृतीयाद्यगोचरः ॥
(४८) विविक्त-विजन-च्छन्न-निःशलाकास्तथा रहः ।

---

भेदादि चतुष्टयमुपायः । परस्माद्विश्लेषो भेदः । जयश्च त्रिविधः 'स्नेहरागापनयनमसर्षोत्पादनं तथा । सन्तर्ज्जनञ्च भेदज्ञैर्भेदस्तु त्रिविधः स्मृतः" । वधार्थग्रहणक्लेशाः दण्डाः । "वधोऽर्थग्रहणञ्चैव परिक्लेशस्तथैव च । इति दण्डविधानज्ञैर्दण्डोऽपि त्रिविधः स्मृतः" इति राजधर्म्मे । परिक्लेशो बद्धताड़नादिः । साम सान्त्वनम् । "परस्परोपकाराणां दर्शनं गुणकीर्त्तनम् । सम्बन्धस्य समाख्यानमायत्याः संप्रकाशनम् । वाचा पेशलया साधु तवाहमिति भाषणम् । इति सामविधानज्ञैः साम पञ्चविधं स्मृतम् ॥" इति रत्नाकरः । अनुकम्पादिभिर्द्रव्यसमर्पणं दानम् । "साम चोपप्रदानञ्च भेददण्डौ तथा परा"विति रत्नकोषः ॥४२

इदानीं नाममात्रेण भेदादीनुक्त्वा तत्पर्य्यायमाह । तत्र सेति । त्रयं दण्डे । सहो बलं तत्र भवं शेषेऽण् । दमनं दमः । दण्डनं दण्डः । दण्ड दण्डनिपातने इति चुरादौ ॥४३

सेति । द्वयं सामनि । साम सान्त्वप्रयोगे कन् । सान्त्वमुक्तं प्राक् ॥४४

भेद इति । द्वयं भेद । भेदनमुपजपनमिति घञ् ॥४५

धर्म्मार्थकामभयै राज्ञोऽमात्यादीनां परीक्षणमुपधा । उपेत्य धीयते कर्म्मसु नियुज्यतेऽनया, आतश्चोपसर्गेऽङ् ॥४६

निःशलाकान्ताः पञ्च त्रिषु । द्वाभ्यां यो मन्त्रादिः क्रियतेऽसावषड़-क्षीणः । न विद्यन्ते षट् अक्षीण्यस्मिन् ईनस्तद्धितः ॥४७

वीति । उपांशुपर्य्यन्तं सप्त विजने । विचेः क्तः । विगतो जनोऽस्मात् । दान्तशान्तेत्यादिना निपातितश्छन्नः । निर्गता शलाका

रहश्चोपांशु (४९) चालिङ्गे रहस्यं तद्भवे त्रिषु ॥
(५०) समौ विस्रम्भ-विश्वासौ (५१) भ्रेषो भ्रंशो यथोचितात् ।
(५२) अभ्रेष-न्याय-कल्पास्तु देशरूपं समञ्जसम् ॥
(५३) युक्तमौपयिकं लभ्यं भजमानाऽभिनीतवत् ।
न्याय्यञ्च त्रिषु षट् (५४) संप्रधारणा तु समर्थनम् ॥

---

अस्मात्। शल्यं श्वाविच्छलाका स्यादिति तालव्यादौ शभेदः। त्यक्तमन्यैरिति रहेरतीतेऽसुन्। द्वितीयरहःशब्दः उपांशुशब्दश्चालिङ्गौ अव्ययावित्यर्थः। अंशुसुपगतम् ॥४८

रहोभवे रहस्यं दिगादित्वात् यत् ॥४९

वीति। द्वयं विश्वासे। स्रन्भ विश्वासे दन्त्यादिः। श्वस प्राणने तालव्यादिः घञ्। "विस्रम्भः केलिकलहे विश्वासे प्रणयेऽपि चे"ति रुद्रः ॥५०

यथोचितात् भ्रंशः पतनं, भ्रेषृ चलने मूर्द्धन्यान्तात् घञ् ॥५१

अभ्र इति। पञ्चकमुचितादचलने। न भ्रेषोऽभ्रेषः। नि विशेषेणायनम्। परिन्योर्नीणोर्द्युताभ्रेषयोरिति घञ्। "कल्पः शास्त्रविधौ न्याये सङ्कल्पे ब्रह्मणो दिन"इति रुद्रः। देशयोग्यं रूपप्रत्ययः। सम्यगञ्जसा तत्त्वमस्त्यत्र अर्शआदित्वादत्। "समञ्जसं समाख्यातमभ्यस्तोचितयोरपी"ति दन्त्यादावजयः ॥५२

युक्तमिति। षड्न्याय्ये। युजेः क्तः। उपायेन निर्वृत्तमुपायाद्ध्रस्वश्चेतीकण्ह्रस्वश्च। लभ्यम्म्। भज्यते शानश्। अभिनीयते क्तः "अभिनीतं संस्कृते च न्याय्ये चामर्षिणि त्रिष्वि"ति रुद्रः। न्यायादनपेतं यत्। ते षट् त्रिषु ॥५३

संप्रेति। द्वयं सुदृढीकरणे। इदमुचितं न वेति निश्चयः संप्रधारणा संपूर्वधारेर्युः ॥५४

(५५) अववादस्तु निर्देशो निदेशः शासनञ्च सः ।
शिष्टिश्चाज्ञा च (५६) संस्था तु मर्य्यादा धारणा स्थितिः ॥
(५७) आगोऽपराधो मन्तुश्च (५८) समे तूद्दानबन्धने ।
(५९) द्विपाद्यो द्विगुणो दण्डो (६०) भागधेयः करो बलिः ॥
(६१) घट्टादि-देयं शुल्कोऽस्त्री (६२) प्राभृतन्तु प्रदेशनम् ।

---

अवेति। षट्कमाज्ञायां घञ्। शासेर्युट् क्तिश्च। शास्तिरिति पाठे बाहुलकात् तिः। आतश्चोपसर्ग इत्यङ् ॥५५

संस्थेति। चतुष्कं न्यायपथस्थितौ। आयश्चोपसर्ग इत्यङ्। मर्य्यादा पृषोदरादिः। धारयति धर्म्ममावर्या युः। तिष्ठत्यनया क्तिः ॥५६

आग इति त्रयमपराधे। अपयन्त्यनेन पृषोदरादिः द्वयच्कमप्य-सुन्नन्तमिति क्लीबत्वम्। "शतमागांसि सोढ़ा" इति माघः। अपराधेर्घञ्। मसिजनिमनिभ्यस्तुः ॥५७

उदिति। द्वयं बन्धने। उद्यतेर्बन्धेश्च युट् ॥५८

यथोचितात् द्विगुणो दण्डो द्विपाद्याख्यः। द्वौ पादौ परिमाणमस्य ॥५९

भेति। त्रयं राजग्राह्ये। नाम भागाभ्यां धेयट्। किरतेरल्। बलतेरिः। करसाहचर्य्याद्बलिना ॥६०

घट्टादिदेये शुल्कः पृषोदरादिः। आदिना गुल्मप्रतोल्यादिः, तत्र यद्दीयते स शुल्कः। "घट्टादिदेये शुल्कोऽस्त्री यौतुकाद्यधनेऽपि चे"ति तालव्यादौ रभसः ॥६१

प्रेति पट् उत्कोचे। भेट इति ख्याते। स्वार्थसिद्ध्यर्थमयाचित-द्रव्यसमर्पणे। प्रभ्रियते क्तः, प्रदिश्यते युट्।

# प्रणव-पारिजातः

( संस्कृत-मासिकपत्रम् )

त्रयोदशवर्षम् , दशमसंख्या ]          [ ज्यैष्ठमासः १८६२ शकाब्दः ]

## साम्यसागरकल्लोलम्

निबन्धकः—श्रीश्रीजीवन्यायतीर्थः

॥ द्वितीय-मुखसन्धिः ॥

( पूर्वतोऽनुवृत्तम् )

आपणिकः । महोदयाः ! गृहस्थधर्ममनुपालयता मया प्रत्यहं गृहमागतेभ्यो याचकेभ्यो दीयते यथाशक्ति तण्डुलो गोधूमचूर्णं गुड़श्च। वैशाखे मासि प्रतिदिनम् आर्द्रचणकगुड़जलानि ददामि श्रमिक-कर्षकादिभ्यः पथश्रान्तेभ्यो दीनद्विजेभ्योऽपि ।

सैनिकाः । ( समस्वरम् ) द्विजेभ्योऽपि वदन् न लज्जसे ? ते वञ्चका धर्मकञ्चुकधारिणो वर्ज्याः शिखा-तिलकलाञ्छना अलीकभगवद्विश्वासवादिनो देशस्य कुसंस्कारहेतवः । भिक्षावृत्तिः निरोद्धव्या ।

गणनाथः । बहुकालं यावद् वाणिज्यव्यपदेशेन ग्रामवासिनो वञ्चयमानस्त्वं धनसञ्चयं करोति। इदानीं देहि शतमुद्रा अस्माकं साम्यवादिगणसङ्घाय । प्रतिमासं त्वयास्मभ्यं शतमुद्रा नियमेन दातव्याः, अन्यथा मुण्डं ते—

आपणिकः । क्षमध्वं माम् । प्रतिमासं शतमुद्रादानशक्तिर्मे नास्ति । स्वल्पायकरोऽयम् आपणः । दरिद्राणां ग्रामवासिनां नास्ति तादृशी क्रयशक्तिः । ममापि नास्ति तथा मूलधनं येन बहु-द्रव्यवाणिज्यं साधयामि ।

गणनाथः। छलपूर्णं वचनमिदम्। सङ्घसैनिका आपणिकं धृत्वा बध्नीत। ततो धनतण्डुलादिकं लुण्ठयत।

यावदापणिकं धर्त्तुं परिक्रामन्ति सैनिकाः, तावत् अन्तरः प्रविशति आपणिकपत्नी शिशुसहिता।

आपणिकः पलायते।

[ आपणिकस्त्री गलदेशात् प्रथमो गणसैनिकः सुवर्णहारमाच्छिनत्ति। स्त्रीपुत्रौ क्रन्दतः ]

[ ततः प्रविशति आरक्षसहित आपणिकः ]

आपणिकः। आरक्ष-पुरुष! पश्य ममोपरि कृतां दस्युवृत्तिम्। रक्ष मां मदीयपरिजनञ्च।

आरक्षः। अधिकारो नास्ति नः किञ्चिदपि कर्त्तुम्। तव रक्षणार्थं यतमानोऽहं किमधुना प्रहृतः पश्चाच्च कर्मच्युतो भवेयम्?

गणनाथः। अरे आपणिकः! किं करोतु तवारक्षपुरुषः। मादृशां दर्शनेनैव स निष्क्रियो निःशब्दश्च तिष्ठेत्।

आपणिकः। तर्हि भवानेव रक्षतु मां शरणागतम्। प्रत्यर्पयतु मम भार्यायाः कण्ठाभरणम्।

गणनाथः। अरे दुष्टवणिक्! न लज्जसे पुनर्मां त्राणं याचमानः। आरक्षाह्वानं यतस्त्वया कृतं तदर्थं ते निष्कृतिर्नास्ति। भोः सुहृदः! ध्नीत दुष्टवणिजमेनम्। रक्ष तं वृक्षेण सह बद्ध्वा। लुण्ठितधने च तदापणे क्रियतामग्निसंयोगः। शिशुपुत्रञ्च क्षिपत तदग्नौ।

द्वि: ग: सै:। (मातृक्रोडात् शिशुमाच्छिद्य गणसैनिकैः सह निष्क्रान्तः)

पत्नी (सोरस्ताड़म्) भोः सैनिकाः, मामपि निक्षिपत तत्रैव हा! हा! म्रियेऽहम्। (इति धावन्ती निष्क्रान्ता)

वृद्ध आपणिकः (साक्रन्दः) भोः प्रतिवेशिनः रक्षत रक्षत माम्।

[ प्रविशन्ति ग्रामीणां केचन ]

[ नेपथ्ये बम स्फोटनशब्दः धूमोद्गारश्च ]

[ ग्रामवासिनो भयं नाटयन्तः पलायन्ते ]

प्रः गः सैः । ( लुण्ठिततण्डुलं गुड़ञ्च वस्त्राञ्चलेन गृहीत्वा भारिणः सकाशमागम्य ) भो भारिन् ! भ्रातः ! गृहाण तण्डुलं गुड़ञ्च । पूरय त्वमनशनक्लिष्टं जठरम् ।

भारवाही । ( तूष्णीं शयानो मुखव्यादानं नाटयति )

प्रः गः सैः । ( हस्तनाड़ीं परीक्ष्य ) अधुनापि मृदुस्पन्दमनुभूयते । मूर्च्छापन्नोऽयमचिरेण मरिष्यतीति मन्ये ।

गणनाथः । तर्हि त्वमेव तण्डुलान् गृहीत्वा ( तृतीयसैनिकं प्रति ) शूल्कजन्याहृणादेनं मोचय । तवापि न धनक्षतिः, अस्य च ऋणमोचनम् । गणसङ्घस्य चावशिष्टार्थेन पुष्टिर्भवतु ।

( नेपथ्ये आपणगृहदाहजनितो धूमोद्गारः । आपणिकभार्य्याया आक्रन्दः )

आपणिकः । अहो अत्याहितम् ! मुषितोऽस्मि ! मुमूर्षुरस्मि । निरागसो मम सर्वस्वलुण्ठनं गृहदाहः पुत्रविनाशश्च युगपत् सम्पन्नाः । हा भाग्यम् ? क यामि किं करोमि । हा विधातः !

पञ्च सैनः । ( तृतीयगणसैनिकः आपणिकं बन्धनान्मोचयति । स च निष्क्रान्तः )

सैनिकाः । ( गायन्ति ) जय जय विप्लव ! जय विद्रोह !

बुध्यतु भारतजनगणमोहः ।
श्रमिकजनानां कुरु संघटनम् ।
कर्षकहर्षक-परभूहरणं
मारय धनिनः करधृतलोहः ।

[ प्रविशति कश्चिन् तरुणो ग्रामवासी ]

ग्रामवासी । भो महोदयः ! अयं दरिद्रो भारवाही भवतां शरणमापन्नो मन्ये मुमूर्षुर्मृतो वा । तस्य संकारः केन क्रियताम् ?

गणनाथः। आपणदाहसमये तत्र निक्षिप्तस्य शवस्य सत्कारः सुकरोऽभविष्यत्। कथं न तदा वयमुद्बोधिताः ?

ग्रामवासी। किं मृतदेहं पटोल-वार्त्ताकुतुल्यं मन्यते भवान्।

गणनाथः। अरे मूर्ख! दाहस्तु कुसंस्कारद्योतकः। भूगर्भे निधीयतां शवः। ग्रामवासिभिरेव ग्रामस्य शवः सत्कर्त्तव्यः। गच्छत रे सैनिकाः गच्छत।

सैनिकाः। जय जय विप्लव! जय विद्रोह—

इत्यादि गायन्ति

निष्क्रान्ताः सर्वे।

इति द्वितीय मुखसन्धिः

—०—

## श्रीमद्भगवद्गीतायां भक्ति-कर्म्मवादौ

( निबन्धकः—अध्यापकः श्रीरवीन्द्रकुमारसिद्धान्तशास्त्री )

( पूर्वतोऽनुवृत्तम् )

"अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥" इति

लौकिकानां देवतानां पूजनेऽपि भगवत्पूजनमेव भवति! तेन च तस्य प्रीतिः पूजकस्य सिद्धिश्च जायते, इत्याह—

"येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः।
तेऽपि मामेव कौन्तेय! यजन्त्यविधिपूर्व्वकम्॥" इति

पुनर्भक्तस्य भगवत्-सारूप्यलाभमुद्घोषयन्नाह—

"यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम्॥"

इति।

भगवान् केवलं भक्त्या प्रदत्तं द्रव्यजातमेव सादरं गृह्णाति। अभक्तिप्रदत्तं

राज्यभोगमपि विहाय स दरिद्रस्य भक्तिप्रदत्तं क्षुद्रान्नमेव सादरं जग्राहेति वार्त्ता पुराणादिभ्योऽवगम्यते। गीतायामप्युक्तम्—

"पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः॥" इति

भगवान् खलु सर्व्वेषामेव जनकः। अतो यथा कश्चित् समदर्शी पिता स्वकीयान् पुत्रान् सर्व्वानेव समभावेन पश्यति, तथैव भगवानपि सर्व्वानेव विश्ववासिनः प्रति समभावेनैव स्नेहवान्। अतो देश-काल पात्र-नैरपेक्षेण केवलं भक्तिमेव सोऽभिलषति। विद्यते यस्य भक्तिः, स एव तद्बलेन भगवतः प्रीतिमुत्पादयितुं शक्नोति। भक्तेर्विद्यमानताऽविद्यमानता चैव भगवतः प्रीतेरप्रीतेश्च जनन्यौ। अत्रोक्तम्—

"समोऽहं सर्व्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्॥" इति

सततं पापमाचरन्नपि कश्चिद् दुर्व्वृत्तश्चेद् भक्तिपरायणो भवेत्तदा तया भक्त्या सोऽपि मुक्तिमेव लब्धुमर्हेत्। महादस्युः रत्नाकरोऽपि केवलेन भक्तिबलेन वाल्मीकित्वं लेभे! जगाइ-माधाइ-नामानौ दुर्व्वृत्तावपि पश्चाद् भक्तिबलेनैव महापुरुषत्वं लेभाते। एवमन्यान्यपि भक्तिमाहात्म्य-प्रख्यापकानि विवरणानि पुराणेतिहासादिभ्यो ज्ञायन्ते। अतो भगवताप्युक्तम्—

"अपि चेत् सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः॥" इति

ननु पापात्मा कथं मुक्तिं लभेतेत्यपि संशयं निराकुर्व्वन्नाह—

"क्षिप्रं भवति धर्म्मात्मा शश्वच्छान्तिं निगच्छति!
कौन्तेय! प्रतिजानीहि न मे भक्तः प्रणश्यति॥" इति

एतेन भक्तिबलेन तस्य पापानि विनाशं गच्छन्ति, तदनन्तरञ्च भक्ति-वशाद्धर्म्माचरणनात् स धार्म्मिक एव भूत्वा मुक्तिं लभत इति विज्ञाप्य कथमपि भक्तस्य विनाशो भवितुं नार्हतीत्यपि निगदितम्।

यद्यपि वेदादिशास्त्रेषु तपस्यादिषु च स्त्री-शूद्रादीनामनधिकारः

श्रूयते, तद्यपि भक्तिमार्गे सर्व्वेषामेवाधिकारोऽस्ति। तेन भक्तिमाश्रित्य स्त्रीशूद्रादयोऽपि मुक्तिं लब्धुमर्हन्ति। एतदेव भगवान् श्लोकेनाह—

"मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।

स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्॥" इति

एतावद्भिरुपदेशैर्बोधयन्नपि पुनराग्रहातिशय्येन भगवान् भक्तिलाभाय समुपदिष्टवानर्ज्जुनम्—

"मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।

मामेवैष्यसि युक्त्वैवमात्मानं मत्-परायणः॥" इत्यनेन।

भगवानेव सर्व्वेषामुत्पादयिता। तस्मादेवैतदखिलं सचराचरं विश्वं जायत इति प्रकृतार्थं ज्ञात्वा मानवा भक्तिपरायणा भवितुमर्हन्तीत्युक्तं—

"अहं सर्व्वस्य प्रभवो मत्तः सर्व्वं प्रवर्त्तते।

इति मत्वा भजन्ते मां बुधा भावसमन्विताः॥" इति

अत्रोक्तं माण्डुक्योपनिषदि—

"यथोर्णनाभिः सृजते गृह्णते च

यथा पृथिव्यामोषधयः सम्भवन्ति।

यथा सतः पुरुषात् केशलोमानि

तथाक्षयात् सम्भवतीह विश्वम्॥" इति

एवं ज्ञात्वा ये चित्तं संयम्य भक्तिभावेन भगवन्तं भजन्ति, भगवान् प्रीतः सन् तेभ्यो बुद्धिं प्रयच्छति। बुद्धिरेव ज्ञानमतो तथा ज्ञानं लब्ध्वा ते मुक्तिमार्गेषु प्रधावन्ति। ज्ञाने जाते सर्व्वमेवाज्ञानं दोपेनान्धकार-नाश इव विनाशं याति। अत्रोक्तम्—

"तेषां सततयुक्तानां भजतां प्रीतिपूर्व्वकम्।

ददामि बुद्धियोगं तां येन मामुपयान्ति ते॥" इति

"तेषामेवानुकम्पार्थमहमज्ञानजं तमः।

नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥" इति च।

वस्तुतो भक्तिहीनो जनश्चेत् कपटया भक्त्या भगवन्तमाराधयति, तदा तादृशेनाराधनेन तस्य प्रीतिर्न जायते। तेन भगवत्प्रीत्यर्थमकपटा

भक्तिरेवाश्यकी। प्रकृतिः गुणैः कर्म्म कारयतीति प्रागुक्तम्। भक्तस्य जनस्य भक्तियोगेन गुणविरामात् प्रकृतिरपि तेनावैधं कर्म्म कारयितुं न शक्नोति। अत्रोक्तं—

"माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते॥" इति

वस्तुतो 'भावमिच्छन्ति देवताः' इति सर्व्ववादिसम्मतोक्तिः। तेनैव गीताशास्त्रेऽपि भक्तेरेवम्विधं माहात्म्यं वर्णितम्। अस्मद्देशे वैदिक-कर्म्मसु प्रवृत्ता अपि मानवाः प्रायशो भक्तिहीना दृश्यन्ते। तेषां गुरवः पुरोहिताश्चापि प्रायशः ते इव भक्तिहीनाः, केवलं जीविकायै तत्तद्-वैधकर्म्मसु प्रवर्त्तन्ते च। तेनैव तैः सम्पादितानि तेषां वेदादि-शास्त्रोक्ता-न्यपि कर्म्माणि निष्फलान्येव भवन्ति। मूर्खाश्च ते शास्त्रोक्तानां कर्म्मणां फलमेव न विद्यत इति विघोष्य स्वस्य परेषाञ्च विपदमाकर्षन्ति। भक्तियोगेन यथाविधि शास्त्रीयं कर्म्म यदि पवित्रतामाश्रित्य क्रियते, तदा तादृशस्य सुफलं स्वयं ब्रह्मा, रुद्रो यमश्चापि वा हर्त्तुं न शक्नोति; का कथाऽपरेषाम्। तेनैव गुरुपुरोहितादिनियोजनविषये तत्पुत्राणां शिक्षा-विषये च शास्त्रकारैरेव विविधा नियमाः प्रवर्त्तिताः। दाम्भिकैः साम्प्रतिकैर्ज्ञानदुर्बलैर्म्मानवैस्ते न पालयन्त इत्येवास्माकं दुःखहेतुः।

यद्यपि भक्तिलाभे मानवा गुणातीता भवन्तीति कथितं, तथापि तद्विधानं सस्पृहनिकृष्टगुणविषय एव ज्ञातव्यम्। केचन सुगुणास्तु तेषु जायन्त एव। त एव च मोक्षजनकतायाः सहायकाः। अतः स्वकीयं प्रियजनमाख्यातुं भगवान् भक्तिलक्षणमुखेन अनेकगुणान् कथयति—

"अद्वेष्टा सर्व्वभूतानां मैत्रः करुण एव च।
निर्म्ममो निरहङ्कारः समदुःखसुखः क्षमी॥
सन्तुष्टः सततं योगी यतात्मा दृढ़निश्चयः।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः॥
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः॥

अनपेक्षः शुचिदक्ष उदासीनो गतव्यथः।
सर्व्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः॥
समः शत्रौ च मित्रे च तथा मानापमानयोः।
शीतोष्ण-सुखदुःखेषु समः सङ्गविवर्जितः॥
तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित्।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः॥
ये तु धर्म्मामृतमिदं यथोक्तं पर्य्युपासते।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः॥" इति

भक्तियोगेनैव मानवाः परमं पदं लब्धुं शक्नुवन्तीति न केवलं गीताशास्त्रस्यैवाभिप्रायः। श्रीमद्भगवतादिष्टप्येवमेव विधानं दृश्यते।

'भक्तियोगेन मन्निष्ठो मद्भावायोपपद्यते।' इति
'मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति।'

इत्यादीनि च वचनानि श्रीमद्भागवतेऽपि पश्यामः।

सम्प्रति सनातनेऽस्मिन् हिन्दुधर्म्मे यथा ग्लानिरायाता, सर्व्वैरेव तज्ज्ञायते। एतस्याः दूरीकरणाय च नास्ति देशहितैषिणां दुश्चिन्तायाः परमावधिः। अस्मन्मतेन तु भक्तिविहीनतैव तादृश्या ग्लानेर्ज्जननी।

"चातुर्व्वर्ण्यं मया सृष्टं गुणकर्म्मविभागशः।"

इति गीतावचनमाकर्ण्य बहव एव भ्रान्ता भ्रान्तिवशेन केवलं ब्राह्मणोचितकर्म्ममात्र-सम्पादनेनैव ब्राह्मण्यं लब्धुमिच्छन्ति। गुणलाभस्यापरिहार्य्यप्रयोजनविषये तैरणुमात्रापि चिन्ता न क्रियते। तेषामनधिकारिणामपि तादृश्यधिकारस्पृहा ज्ञानिभिः समाजपतिभिर्न समर्थ्यते। तेन च ते दुर्व्वृत्ताः क्लेशसाध्यान् गुणान् लब्धुमनिच्छन्तः सनातनोऽस्मिन् धर्म्मे विप्लवमुत्पादयितुं यतन्ते। एतेषाञ्चेत् शास्त्रवाक्येषु विश्वासः, भगवति भक्तिः, यथार्थज्ञानलाभो वा स्यात्, तदा ग्लानिदूरीकरणाय भक्तिरेव प्रभूतफलशालिनी भवेत्। ये तु मूर्खाः स्वसामर्थ्यमननुभवन्तोऽनाचरणीयेषु कर्म्मसु प्रवृत्ता भवन्ति, अज्ञातसन्तरणस्य गभीरे समुद्रे लम्फप्रदानमिव तेषां तत्कार्य्यजातं स्वविनाशायैव स्यात्। भक्तिमार्गे तु

नास्ति दाम्भिकताया लेशोऽपि। तेनैवात्र तादृशोऽनर्थपातोऽपि न भवेत्। अनधिकारिभिः सम्पादितानि कर्म्माणि कीदृशं फलं प्रयच्छन्तीत्याह—

"आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः॥
अनेकचित्तविभ्रान्ता मोहजालसमावृताः।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ॥" इत्यादि

भगवान् स्वयमपि पुनरेतान् दुर्वृत्तान् दण्डयतीत्याह—

"तानहं द्विषतः क्रूरान् संसारेषु नराधमान्।
क्षिपाम्यजस्रमस्य भानासुरीष्वेव योनिषु॥" इत्यादि

अल्पबुद्धयो मानवा जटिलविषयानधिगन्तुं न शक्नुवन्ति। तेन तेषामुपकाराय शास्त्रवाक्यान्येव प्रमाणत्वेन ग्राह्याणि। ये यथाशास्त्रं कर्म्माणि कुर्व्वन्ति, तेषां सर्व्वथैव कुशलं स्यात्। 'अहमेव बुद्धिमान्' इति ज्ञात्वा ये दाम्भिकाः शास्त्रविगर्हितानि कर्म्माणि कुर्व्वन्ति; चार्व्वाका इव च 'त्रयो वेदस्य कर्त्तारो भण्डधूर्त्तनिशाचराः' इत्येवं वक्तुं न लज्जन्ते, त एव विनाशं गच्छन्ति। अत्रोक्तं भगवता—

"यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥" इति

तेनैव भगवान् भक्तश्रेष्ठमप्यर्ज्जुनं शास्त्रविधानानुसारेण कर्म्म कर्त्तुमुपदिदेश; यथा—

"तस्माच्छास्त्रं प्रमाणन्ते कार्य्याकार्य्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म्म कर्त्तुमिहार्हसि॥" इति

भक्तिश्च परा, अपरा चेति द्विविधा। तत्र प्रवर्त्तनाविषयिणी या भक्तिः सैवापरा, निवर्त्तनाविषयिणी च परेति कथ्यते। प्राक्तैः कर्म्मभिः सत्कार्य्येषु प्रवर्त्तनार्थं याभगवद्विषयिणी भक्तिर्जायते, सैवात्रापराभक्तिरूपेण विज्ञातव्या। तदनन्तरं मुक्तिलाभाय या भगवद्भक्तिरुत्पद्यते उत्कृष्टतमा सैव परा।

भक्त्यापि कर्म्मिणो ब्रह्मसायुज्यं लब्धुमर्हन्तीत्याह—

"बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च।
शब्दादीन् विषयांस्त्यक्त्वा राग-द्वेषौ व्युदस्य च॥
विविक्तसेवी लघ्वाशी यतवाक्-कायमानसः।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः॥
अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम्।
विमुच्य निर्म्ममः शान्तो ब्रह्मभूयाय कल्पते॥" इति

एवं ब्रह्मत्वलाभे सुखदुःखयोः सर्व्वभूतेषु च समज्ञानं जायते; तादृशेन च समज्ञानेन पराभक्तिरुत्पद्यत इत्याह—

"ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति।
समः सर्व्वेषु भूतेषु मद्भक्तिं लभते पराम्॥ इति

एवं क्रमेण जाता सेयं परा भक्तिर्यथार्थभगवत्स्वरूपावधारणे समर्थयति मानवम्। तेन च स भगवत्स्वरूपमवगम्य तस्मिन्नेव विलीनो भवेदिति श्लोकेनाह—

"भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥" इति

भगवद्भक्तियुक्तो जनः सर्व्वाणि कर्म्माणि कुर्व्वन्नपि तत्र निर्लिप्त एव भवति। तेन च भगवदनुग्रहेणाक्षरं मोक्षयोगं लभते। एकाग्रेण चेतसा चेद् भगवति सर्व्वाणि कर्म्मफलानि समर्प्यन्ते, तदैव तादृशस्य मोक्षलाभस्य सम्भवः; न तु केवलं बाह्यिक-समर्पणेन बाह्यिकभक्ति-प्रदर्शनेन वा। भगवांस्तु प्राणिनां हृदये तिष्ठन् तेषां सर्व्वानेवाभिप्रायान् विजानाति। 'भावमिच्छन्ति देवताः' इति शास्त्रवाक्येन प्रागेवैतत् प्रतिपादितम्। उक्तिरियं भगवद्वाक्येन यथा—

"सर्वकर्म्माण्यपि सदा कुर्व्वाणो मद्व्यपाश्रयः।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्॥
चेतसा सर्व्वकर्म्माणि मयि सन्न्यस्य मत्परः।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव॥" इति

भगवद्भक्तस्य न केवलं मोक्षलाभ एव स्यात्, तदीयया भक्त्या परमपरितुष्टो भगवान् सर्व्वाभ्य एव विपद्भ्यस्तं तारयति। तेनार्ज्जुनश्चेत्तदुपदेशेन भक्त्या कर्म्मणि प्रवर्त्तते, तदा तस्य सर्व्वाभीष्ट-सिद्धिर्भविष्यति, अन्यथाकारे तु तस्य सर्व्वनाश एव स्यादित्युपदिशति भगवान्—

"मच्चित्तः सर्व्वदुर्गाणि मत्प्रसादात्तरिष्यसि।
अथ चेत् त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि॥" इति

इत्येवं भक्तिकर्म्मविषयकं समग्रं गीतार्थमालोक्य भक्तियुक्तस्य कर्म्मणः सम्पादनमेव श्रीभगवत उपदेश इत्युपलब्धम्। लौकिके शास्त्रीये च कर्म्मणि सर्व्वत्रैव भक्तेर्योगो विद्यते। भक्तेर्लक्षणन्तु ग्रन्थारम्भे एव प्रदर्शितम्। मोक्षमार्गे भक्तेर्विलसनं व्याख्यातमेव। साम्प्रतं पुनर्लौकिके कर्म्मण्यपि भक्तेः प्रवेशं प्रतिपादयिष्ये। भक्तियुक्तं कर्म्म कदापि नैवासाधु भवितुमर्हति। चौर्य्यादिषु कर्म्मसु भक्तेरभावादेव तेषामसाधुतां नापनीयते। यदा तु कश्चिच्चौरोऽपि भक्तिं लभते, तदा तस्य सर्व्वमेव कालुष्यं झटित्येवापनुद्यते।

साम्प्रतं परिवर्त्तनशीलेऽस्मिन् जगति भिन्नधर्म्मावलम्बिनां परित्यक्तस्वधर्म्माणाञ्च दानवप्रतिमानां दुर्व्वृत्तानामत्याचारेण भृशं निपीड़ितान् नितान्तनिरीहान् सनातनधर्म्मावलम्बिनः स्वजनान् विलोक्य तेषां रक्षणाय सर्व्वैरेव सहृदयैर्यतितव्यम्। एतेषां रक्षणाय यानि कर्म्माणि कर्त्तव्यानि स्युस्तेषु सर्व्वेष्वेव भक्तेः स्थितिरावश्यकी। प्रसङ्गतोऽत्र ऐहिकमङ्गलकामनया काचिदपरापि भक्तिरुत्पद्यते। दुर्व्वृत्तानां दमनं सज्जनानां रक्षणञ्च जगतां हितायैव भवत इत्यत्र नास्ति संशयावकाशः। तेषु तु जगद्धिताय प्रवृत्तेषु कर्म्मसु व्यष्टिगतविषय-वासनायाः अभावान्निरीहानां सज्जनानां रक्षायै चित्तैकाग्र्यस्य विद्यमानतया तेषां रक्षणार्थं साधनीयेषु कार्येषु सेवायाश्च प्रवृत्तेस्तत्र भक्तेरस्तित्वमङ्गीकार्य्यमेव। एवञ्चेत् कश्चित् सज्जनः सज्जनसङ्घो वा दुर्व्वृत्तेभ्यः साधून् रक्षन्ति, तदा तस्य तादृशं कार्य्यमिहलोके अतीव

प्रशंसनीयं जगदुपकारकं सत्कार्य्यप्रवृत्तेः साधकं दुर्नीतिविनाशस्य च सहायं भविष्यतीति सर्व्व एव मनीषिणः अङ्गीकरिष्यन्तीत्यत्र नास्ति मे संशयलेशः।

दुर्व्वृत्तान् दमयित्वा धर्म्मराज्यसंस्थापनार्थमेव धनञ्जयो युद्धाय प्ररोचितः प्रवर्त्तितश्च। धर्म्मराज्यसंस्थापको भगवान् श्रीकृष्णः विविधज्ञानोपदेशमुखेन यथा दुर्नीतिसंहारोपायं प्रदर्शितवान्, सर्व्वैरेवास्माभिर्द्दिनेऽस्मिन् तदेव स्मर्त्तव्यम् मन्तव्यं साधयितव्यञ्च। न केवलं दैवोपरि दोषं संस्थाप्य क्लीववत् वर्त्तितव्यम्।

"दैवे पुरुषकारे च कर्म्मसिद्धिर्व्यवस्थिता।
तत्र दैवमभिव्यक्तं पौरुषं पौर्व्वदेहिकम्॥"

इति येषां धर्म्ममतं गीताशास्त्रञ्च येषां धर्म्मग्रन्थस्त एव हिन्दवः सम्प्रति हीनस्वभावैर्दस्युभिराक्रान्ताः केवलं विलपन्ति, असहाया इव म्रियन्ते च।

—( क्रमशः )

## हरिनामामृतम्

नाम नाटकम् ( प्रथमो भागः )।

अध्यापक-स्वर्गत-अमियनाथ चक्रवर्त्ति एम्-ए, काव्यतीर्थेन विरचितम्

( पूर्वतोऽनुवृत्तम् )

॥ प्रथमोऽङ्कः ॥

। सप्तमं दृश्यम्।

[ अद्वैताचार्यस्य गृहम्। भक्तवेष्टित आचार्यपादस्तुलसीमूले श्रीमद्भागवतव्याख्यां करोति। मुकुन्द-मुरारि-सदाशिवाः शृण्वन्ति। ]

अद्वैतः। अहो माधुर्यं श्रीनन्दनन्दन श्रीभगवतो रूपसौभाग्यस्य—

श्यामं हिरण्यपरिधिं वनमाल्यबर्ह
धातु-प्रवाल-नटवेशमनुव्रतांसे।
विन्यस्तहस्तमितरेण धुनानमब्जं
कर्णोत्पलालक-कपोल-मुखाब्जहासम्॥

—(१०।२३।२२)

सदाशिवः। इममेव श्लोकं पठ्यमानं श्रुत्वा तस्मिन् दिने श्रीगौराङ्गो मूर्च्छामगच्छत्।

मुकुन्दः। आश्चर्यम्—विद्रूपकारिणो वैष्णवनिन्दुका अपि श्रीगौराङ्गस्य सम्मुखे मुहूर्तेन भक्तियुक्ता भवन्ति।

मुरारिः। यो गौराङ्गपण्डित एकदा पाण्डित्येन कमपि न गणयामास, परन्तु भक्तं वैष्णवं वा दृष्ट्वा परिहासमकरोत्, सोऽद्य दीनहीनो भिक्षुकवद् आचरति। निपुणं दृष्ट्वा जनास्तं पुनर्मनुष्यं न मन्यन्ते।

अद्वैतः। (गद्गदभावेन) इदानीं तर्हि वदामि—गतरात्रिशेषे स्वप्नेऽहं दृष्टवान्—स्वयं श्रीभगवान् विश्वम्भररूपेण कथयति—इदानीं श्रीकृष्णनामकीर्तनमारब्धं भविष्यति, उद्धारं प्राप्स्यन्ति च जीवगणा इति। तत आरभ्य पुलकितानि ममाङ्गानि।

मुकुन्दः। महाभाग्यं, तर्हि महाभाग्यमस्माकम्।

अद्वैतः। सत्यमेव महाभाग्यमद्य वैष्णवानाम्। विश्वम्भरः स्वयमद्य दिग्विजयी पण्डितः। एतादृशो महत्तमजनो यदि वैष्णवो भवति—तदा का सा चिन्ता वैष्णवानाम्?

सदाशिवः। जीवानामुद्धारार्थं तेन श्रीहरिनामसंकीर्तनं समारब्धम्।

अद्वैतः। इदानीं पापमलिनाः सर्वे जनाः। कः करिष्यत्येषां पातकिनामुद्धारम्?

मुरारिः। नामग्रहणेन यद्युद्धारः स्यात्।

अद्वैतः। (सहसा आवेशेनोत्थाय सर्वं बाहू प्रसार्य्य हुङ्कारैः)

आगच्छ, आगच्छ—प्रभो, श्रीभगवन्, त्वमाविर्भूय तव जीवानुद्धारय। कः उद्धारयेदेतांस्त्वां विना? महत्यद्य धर्मस्य ग्लानिः सञ्जाता। अविलम्बमत्र सम्भूय धर्मसंस्थापनं कुरु। तवैव घोषणासीत्—"सम्भवामि युगे युगे" इति। तच्च युगमद्य समागतम्। आगच्छ प्रभो! (विरम्य) अस्ति मां प्रति तव प्रतिश्रुतिः। सत्यं यदि श्रीगौराङ्ग एव श्रीभगवानसि स्वयं, तर्हि प्रतिश्रुत्यनुसारेण मम सम्मुखे तवागमनमवश्यमेव भविष्यति। आगच्छ, आगच्छ प्रभो।

[ गदाधरेण सह गौराङ्गः प्रविशति। गौराङ्गस्तुलसीमूले श्रीमदद्वैताचार्यं समालोक्य भावावेशेन मूर्च्छितः पतति। गदाधरस्तं धरति, अन्ये चोपागम्य शुश्रूषन्ते। "हरे कृष्ण हरे कृष्ण" इत्यादीनि चोच्चारितानि। ]

अद्वैतः। (अपलकनेत्राभ्यां गौराङ्गवदनं प्रति बद्धदृष्टिः) किम्, अपूर्वसुन्दरं तव वदनमण्डलम्! सहस्राणि वर्षाणां यावत् तपांसि कृत्वा यं खलु नरा ज्ञातुमपि न शक्नुवन्ति, सोऽयं त्वं स्वयमत्रास्माकं सम्मुखे उपस्थितः। किन्तु कथमिदं ते गौरं रूपं, न कृष्णम्? (उच्चैः) परमः शुभोऽद्य मे दिवसः। (नृत्यन्) आगतः, आगतः श्रीभगवान् भो भो, माङ्गलिकानि वादयत—स्वयं श्रीभगवान् अद्यात्र सम्मुखे वर्त्तते।

सर्वे। "हरे कृष्ण हरे कृष्ण"—( इत्यादिः )

[ शङ्खघण्टादीनि माङ्गलिकानि वादितानि। भागवतस्थानात् गङ्गाजलपुष्पादीन्यानीय अद्वैतोऽञ्जलिं दत्त्वा प्रणमति। ]

अद्वैतः। नमो ब्रह्मण्यदेवाय गो-ब्राह्मणहिताय च।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः॥

गौराङ्गः। ( पुनर्ज्ञानं लब्ध्वा श्रीमदद्वैतं पादतले दृष्ट्वातीवं व्याकुलः सन्नविलम्बेन तस्य पदतले पतित्वा ) आचार्य ! भवसागरे निमज्जितं मां दयया उद्धारय। अपवित्रो मम देहः, मम मस्तके तव चरणपातेन देहमिमं पवित्रं विधेहि। भाग्येन तव श्रीचरणदर्शनं जातम्।

अद्वैतः। अह-ह, ( स्वयमपि प्रणतः सन् )
ज्ञातं तावदस्माभिस्त्वत्स्वरूपम्। पापिनामस्माकमुद्धाराय त्वयि सम्भूता पूर्णा श्रीकृष्णकरुणा। कृतार्था वयं सर्वे मिलिताः सन्तस्त्वया आरब्धं श्रीहरिसंकीर्तनं करवाम।

सर्वे। ( नृत्यन्तो गायन्ति )

हरिहरये नमः
कृष्ण-यादवाय नमः।
यादवाय माधवाय केशवाय नमः॥

गौराङ्गः। ( भावावेशेन क्रन्दन् )

हरेर्नाम हरेर्नाम हरेर्नामैव केवलम्।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा॥

( भावावेशेन हसन् )

अहो कृष्ण ! वेणुविमोहन मधुर कृष्ण !!

( भावावेशेन नृत्यन् )

( गीतम् )

हरिहरये नमः
कृष्ण-यादवाय नमः।
यादवाय माधवाय केशवाय नमः॥

सर्वे। ( सर्वे च तेन सह नृत्यन्तो गायन्ति )

हरिहरये—इत्यादिकम्।

गौराङ्गः। ( सहसा व्याकुलमुच्चैरार्त्तनादं कुर्वन् )

अरुणाम् अरुणाम् !!

अद्वैतः । किं भगवन् ?

गौराङ्गः । परमो मे कृष्णभक्तः कठोरं ताड्यते, अतिकठोरं ताड्यते । अहो ! अहो ! अहो !!

[ मूर्च्छां नाटयति । सर्वे शुश्रूषन्ते । ]

मुकुन्दः । ( नाम उच्चारयति अन्यैः सह )

हरे कृष्ण हरे कृष्ण—( इत्यादिकम् )

गौराङ्गः । ( बाह्यज्ञानं क्रमशो लब्ध्वा )

अहो मे भक्त ! [ प्रविशति विमर्षभावेन श्रीवासः ]

श्रीवासः । निपुणमन्वेषणं कृत्वापि नगरमध्ये कुत्रापि महापुरुषस्य सन्धानं न प्राप्तम् ।

गौराङ्गः । न प्राप्तम् ! आचार्यौ ! भ्रातरश्च ! चलामः सर्वे संकीर्तनं कुर्वाणा एव । भक्तस्योद्धारं कृत्वा तस्य महापुरुषस्यानुसन्धानं करिष्यामः ।

सर्वे । ( एकत्र कीर्तनं कुर्वन्तश्चलन्ति )

हरे कृष्ण, हरे कृष्ण—( इत्यादिकम् )

हरिहरये नमः

कृष्ण-यादवाय नमः ।

यादवाय माधवाय केशवाय नमः ॥

( निष्क्रान्ताः सर्वे )

( दृश्यावसानम् )

—( क्रमशः )

वेत्यर्थः। हृषितस्य इत्यादि वा। चाय् गोपीभिरपचितः कृष्णः। अपचायितो वा ॥

६१। अध्यारूढ़स्याधिको वा साधुः ॥

६२। प्यायः पीर्विष्णुनिष्ठायाम् ॥

पीनं मुखम्। स्वाङ्गादन्यत्र वा, प्यानः पीनः स्वेदः। सोपेन्द्रस्य नः, प्रप्यानः ॥

६३। आङ्पूर्व्वस्यान्धूधसोः स्यादेव ॥

आपीनोऽन्धुः, आपीनमुधः ॥

६४। ह्लादेर्वामनः क्ति-विष्णुनिष्ठयोः ॥

ह्लन्नम् ॥

---

कृष्णस्य हृषितं लोमेति वेत्यर्थः। चाय् इति चायृपूजानिशायनयोः। अपचित इति पूजित इत्यर्थः ॥

६१। अध्या। अध्याङ्पूर्व्वस्य रुह जनी प्रादुर्भावे इत्यस्य रुहधातोः क्त-प्रत्ययसिद्धस्य अध्यारूढ़स्याधिको वा साधुः। विस्तरमते अध्यारूढ़स्याधिकादेश इति विष्णुभक्तयर्थप्रकरणे उक्तम्। अतो विस्तरमतानुसारेणैवैतत् सूत्रं कृतमिति ज्ञेयम् ॥

६२। प्यायः। विष्णुनिष्ठायां परस्यां प्यायः स्थाने पीर्भवति। पीनमिति ओ प्यायी वृद्धौ ओरामेत्वाद्विष्णुनिष्ठातस्य नः। एवं पीनो बाहुरिति पीनपिव्नी तु स्थूलपीवरे इत्यमरः। स्वाङ्गा। स्वाङ्गादन्यत्र वाच्ये प्यायः स्थाने पीर्वा भवति। प्यान इति यवयोर्हरो वल इति यलुक्। स्वेदो घर्म्मः। घर्म्मो निदाघः स्वेदः स्यादित्यमरः। स्वाङ्गलक्षणे विना द्रवविकारजे इत्युक्तम्। अतः स्वेदस्य द्रवरूपत्वान्न स्वाङ्गता। सोपे। सोपेन्द्रस्य प्यायः स्थाने पीर्न भवति। प्रप्यान इति यलुक् ॥

६३। आङ्। अन्धूधसोर्वाच्ययोः आङ् पूर्व्वस्य प्यायः स्थाने पीः स्यादेव। अन्धुः कूपः। पुंस्येवान्धुः प्रही कूप इत्यमरः। ऊधः स्त्रीगवीस्तनः। ऊधस्तु क्लीबमापीनमित्यमरः ॥

६४। ह्लादेः। क्ति-विष्णुनिष्ठयोः परयो र्ह्लादेर्वामनो भवति। ह्लादम् इति ह्लादी मुदे ईरामानुबन्धत्वान्नेट्। विष्णुनिष्ठातस्य च नः ॥

६५। द्यति-स्यति-मा-स्थामिः, शाछोर्वा, दधातेर्हिः, दामोदरस्य दो दद्, उपेन्द्रसर्व्वेश्वरात्त्वारामहरः, चतुःसनोपेन्द्रस्य च त्रिविक्रमः कपिल-तरामे ॥

दितः, सितः, मितः, स्थितः, शितः, शातः, छितः, छातः ॥

६६। श्यतेः संशितं व्रते वाच्यम् ॥

हितः दत्तः प्रत्तः नीत्तः सूत्तः। सुविन्यवानुभ्य आरामहरः क्ते वेति केचित्। सूत्तम् सुदत्तम्। अपेरादीति। पिनद्धम् अपिनद्धम्।

---

६५। द्यति। कपिल-तरामे परे द्यतिस्यतिमास्थामन्त इरामो भवति। मेति माङ् माने मा माने मेङ् प्रणिदाने त्रयाणामेवात्र ग्रहणम्। शा। शो तनुकरणे छो छेदने इत्येतयोः कपिलतरामे परे अन्त इरामो वा भवति। दधा। कपिलतरामे परे दधातेः स्थाने हिर्भवति। दधातेरिति निर्देशात् धेट् पान इत्यस्य अग्रहणम्। दामो। कपिलतरामे परे दामोदरस्य दस्य स्थाने दद्भवति। दामोदरस्येत्यनेन दान दाङ् देङां ग्रहणं ददादेशो दरामान्तः। अतएव रदाभ्यामित्यादौ दां विनेत्युक्तं, पूर्व्वाचार्य्यैर्ददादेशस्य दान्तत्व-मुक्तमतो ग्रन्थकारैरपि ददादेशस्य दान्तत्वमभिप्रेत्य दां विनेत्युक्तम्। क्रमदी-श्वरादिभिस्तु ददादेशस्य तान्तत्वमुक्तमतः प्रयोजनाभावात् दावर्जनमपि तैर्न कृतमिति ज्ञेयम्। उपे। उपेन्द्रसर्व्वेश्वरादुत्तरस्य दामोदरस्य दस्तु कपिल-तरामे परे आरामहरो भवति। चतुः। कपिलतरामे परे चतुःसनान्तस्य उपेन्द्रस्य त्रिविक्रमश्च भवति। दित इति दो अवखण्डने। सित इति सो अन्त-कर्म्मणि। स्थित इति ष्ठा गतिनिवृत्तौ ॥

६६। श्यतेः संपूर्व्वस्य शो तनुकरणे इत्यस्य व्रते गम्ये संशितं वाच्यम्। हित इति डु धाञ् धारण-पोषणयोः। दत्त इति डु दाञ् दाने। प्रत्त इति आरामहरे कृते यादवमात्रे हरिकमलमिति दरामस्य तरामः। नीत्तः सूत्त इति आरामहरस्त्रिविक्रमश्च। सुवीति। सु वि नि अव अनु इत्येतेभ्य उत्तरस्य दामोदरस्य दः क्ते परे आरामहरो वा भवतीति केचित्। सूत्रमिति आराम-हरपक्षे त्रिविक्रमः। आरामहराभावपक्षे सुदत्तमिति। अपेरिति। अनेन

धेट्—दामोदरमास्थे तीत्वम्, धीतं गीतं पीतम्। जनखनसनामित्यादि जातं खातं सातम् ॥

६७। अदो जग्धिः कपिल तरामेऽपि च ॥

इराम इत्, जग्धम् ॥

६८। अन्नमोदने साधु ॥

६९। गतर्थाकर्म्म-श्लिष-शीङ्-स्थास-वस-जन-रुह-दीर्य्यतिभ्यः क्तः कर्त्तरि च ॥

मथुरां गतः, मथुरां प्राप्तः। यमुनायां स्नातोऽसौ। गोपीमाश्लिष्टः कृष्णः। गोवर्द्धनमधिशयितः, वृन्दावनमधिष्ठितः, गा उपासितः,

---

अपेरादिहरः। पिनद्धमिति नह बन्धने सहजानिट् नहो धः इति हस्य धः। गीतमिति गै शब्दे ईत्वम्। पीतमिति वा पाने। जनेति अनेन नरामस्याराम:। जातमिति जनी प्रादुर्भावे ईरामानुबन्धत्वान्नेट्। खातमिति खनु अवदारणे उरामेत्वान्नेट्। सातमिति षनु दाने ॥

६७। अदो। कपिलतरामे यपि च परे अदः स्थाने जग्धिर्भवति। जग्धमिति अद भक्षणे सहजानिट् तरामस्य धरामे कृते 'विष्णुजनाद् विष्णुदासस्यादर्शनं सवर्गे विष्णुदासे' इति धस्य लुक्।

६८। अन्नम्। ओदने वाच्ये अन्नं साधु। ओदने वाच्ये जग्धिर्न भवतीति भावः ॥

६९। गत्य। गत्यर्थादकर्म्मकात् श्लिषादिभ्यश्चोत्तरे कर्त्तरि च वाच्ये क्तो भवति। कर्त्तरि चेति भावकर्म्मणोः कर्त्तरि चेत्यर्थः। शीङादीनामकर्म्मणां पुनरुपादानम् उपेन्द्रसम्बन्धेन सकर्म्मकत्वे क्तविधानार्थम् अकर्म्मकत्वे तु अकर्म्मकादेव क्तः सिध्यति। गत इति गमॢ गतौ सहजानिट् हरिवेणुहरः। प्राप्त इति आपॢ व्याप्तौ सहजानिट्। स्नात इति स्ना शौचे अकर्म्मकः। आश्लिष्ट इति श्लिष आलिङ्गने सहजानिट्। गोवर्द्धनमधिशयित इति शीङ् स्वप्ने अधि शीङ्स्थासामाधारः कर्म्मेति गोवर्द्धनस्य कर्म्मत्वम्। एवं वृन्दावनमधिष्ठित इत्यत्र च। अधिष्ठित इति ष्ठा गतिनिवृत्तौ। द्यतिस्यतिमास्थासामिति

तद्भोजनमुपोषितः, राममनुजातः, कदम्बमारूढः, कालीयविप-मनुजीर्णः ॥

७० । क्वचिदन्यत्रापि ।

यथा भुक्ताः पीताः विभक्ताः वैष्णवा व्यवसिताः प्रतिपन्ना आश्रिता इत्यादयः । पक्षे, मथुरागत इत्यादि ॥

७१ । अकर्म्मक-गति-भोजनार्थेभ्यः क्तोऽधिकरणे च ।

---

आरामस्येरामः उपेन्द्रात् सुवतेः षत्वमित्यादिना षत्वम् । उपासित इति आस उपवेशने उपपूर्व्व आसधातुः सेवार्थः । तदभोजनमुपोषित इति वस निवासे वचिस्वपीत्यादिना सङ्कर्षणः । वसतिक्षुधिभ्यामिट् न क्त्वा विष्णुनिष्ठयो-रितीट् । उपान्वध्याङ्भ्यो वस आधारकर्म्मेति कर्म्मत्वम् गवामभोजनकाले उपोषित इत्यर्थः । अनुजात इति जनी प्रादुर्भावे वैष्णवाद्योः कंसारिसनो-र्नित्यमिति नरामस्यारामः जननेनानुगत इत्यर्थः । आरूढ इति रुह जन्मनि प्रादुर्भावे च सहजानिट् हस्य ढः, तस्य धः, धस्य ढः, ढस्य हरः पूर्व्वस्य त्रिविक्रमश्च । अजीर्ण इति । जॄ ष वयोहानौ ऋरामस्येर् त्रिविक्रमः । श्रिञो जागृवर्जेत्यादिना इड्निषेधः विष्णुनिष्ठातस्य नः णत्व, आरित-वानित्यर्थः ॥

७० । क्वचित् उक्तेभ्योऽन्यस्मिन्नपि धातौ कर्त्तरि च क्तो भवति । भुक्ता इति भुज पालनाभ्यवहारयोः सहजानिट् । पीता इति पा पाने ईत्वम् । विभक्ता इति भज सेवायां सहजानिट् । व्यवसिता इति सोऽन्तकर्म्मणि द्यतिस्यतीत्या-दिना आरामस्येरामः । प्रतिपन्ना इति पद गतौ सहजानिट् । अत्र गत्यर्थता नास्तीति उक्तेभ्योऽन्यत्वम् । आश्रिता इति श्रिञ् सेवायां श्रिञ इत्यादिना इड्निषेधः । पक्षे इति कर्म्मणि भावे चेत्यर्थः । सकर्म्मकाणां कर्म्मणि अकर्म्मकस्य भावे । इत्यादीत्यादिपदेन मथुरा प्राप्ता यमुनायां स्नातयमुना गोपी । आश्लिष्टा कृष्णेन गोवर्द्धनोऽधिशायित इत्यादि ॥

७१ । अक । अकर्म्मकात् गत्यर्थात् भोजनार्थाच्च उत्तरेऽधिकरणे च वाच्ये क्तो भवति । आसितं गतं भुक्तमिति आस्यते गम्यते भुज्यते यत्रेति

कृष्णस्यासितं गतं भुक्तं वृन्दावनम् ॥

७२। ञिरामेतो बुद्धीच्छापूजार्थेभ्यश्च क्तो वर्त्तमाने च।

ञि क्ष्विदा क्ष्विण्णः, ञि इन्धी इद्धः, वैष्णवानां बुद्धः मतः

ज्ञातः इष्टः वाञ्छितः पूजित अर्च्चितः ॥

चादनुक्तादपि।

शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि।

रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि।

प्रक्रान्तः शयितो गुप्तस्तृप्त इत्यादयः स्मृताः।

---

अधिकरणं वृन्दावनमुक्तम्। कृष्णस्येति अधिकरणवाचि-क्तस्य योगे कर्त्तरि कर्म्मणि च वाच्ये षष्ठीति कर्त्तरि षष्ठी ॥

७२। ञिरा। ञिरामानुबन्धात् बुद्ध्यर्थात् इच्छार्थात् पूजार्थाच्च उत्तरे वर्त्तमाने काले क्तो भवति। ञि क्ष्विदेति ञि क्ष्विदा मोचने। क्ष्विण्ण इति आरामानुबन्धत्वान्नेट्। ञि इन्धीति ञि इन्धी दीप्तौ। इद्ध इति उद्धव-नरामहरः। वैष्णवानामिति वैष्णवैर्बुध्यते मन्यते ज्ञायतेऽयमित्यर्थः। वर्त्तमाने भावे च क्तस्य योगे कर्त्तरि षष्ठी वेति कर्त्तरि षष्ठी। बुद्ध इति बुध अवगमने सहजानिट्। मत इति मन ज्ञाने सहजानिट् हरिवेणुहरः। ज्ञात ज्ञा अवबोधने। इष्ट इति इषु इच्छायां विकल्पितेट्त्वान्नेट्। वाञ्छित इति वाछि इच्छायाम् इष्यते वाञ्छ्यते इत्यर्थः। पूजित इति पूजा पूजायां पूज्यते अर्च्च्यते इत्यर्थः ॥

चादिति। चशब्दोपादानात् अनुक्तादपि धातोरुत्तरे वर्त्तमाने क्तो भवति। शीलित इति शील समाधौ। रक्षित इति रक्ष पालने। क्षान्त इति क्षमु सहने ऊरामेत्वाद्विकल्पितेट्त्वं, ततो नेट् त्रिविक्रमः। आक्रुष्ट इति क्रुश आह्वाने सहजानिट्। जुष्ट इति जुषी प्रीति-सेवनयोः ईरामानुबन्धत्वान्नेट्। रुष्ट रुषित इति रुष रोषे। रुष्यमवमत्वरसंघुषास्वनेभ्यो वेट् विष्णुनिष्ठाया-मिति वेट्। अभिव्याहृत इति हृञ् हरणे। प्रक्रान्त इति क्रमु पादविक्षेपे ऊरामेत्वान्नेट् त्रिविक्रमः। शयित इति शीङ् स्वप्ने। गुप्त इति गुपू रक्षणे ऊरामेत्वाद्विकल्पितेट्त्वम्, अतो नेट्। तृप प्रीणने सहजानिट् ॥

७३। अलं-खल्वोः प्रतिषेधार्थयोर्योगे क्त्वा वा भावे। क्त्वा मान्तश्च कृदव्ययम्।

अत्र यथाह पुरुषोत्तमः। तुमर्थ इत्यनुवर्त्तते यदव्ययविधाने तुमश्च भाव इत्युक्तम्। अलं कृत्वा खलु कृत्वा न कर्त्तव्यमित्यर्थः। भावेऽपि हि प्रत्येये सकर्म्मकाद्धातोः कर्म्मसम्बन्धो भवत्येव। खलूक्त्वा खलु वाचिकमिति। तदेवमप्युदाह्रियते। दामोदरस्य दो दद्। अवैष्णवाय विष्णुनिर्म्माल्यमलं दत्त्वा दत्त्वालं, खलु दत्त्वा दत्त्वा खलु, तस्य दानं न कर्त्तव्यमित्यर्थः। अवैष्णवगृहे अलं भुक्त्वा वैष्णवेन खलु भुक्त्वा वा तत्र वैष्णवस्य भोजनेन न भवितव्यमित्यर्थः। पक्षे तस्य दानेनालं दानेन खल्वित्यादि॥

---

७३। अलं। प्रतिषेधार्थयोरलं-खल्वोर्योगे भावे वाच्ये क्त्वा वा भवति। क इत्। क्त्वा मान्तश्च कृदव्ययं भवति ; भावे इत्युक्त्वा पुरुषोत्तमोक्तमुदाहरण-रूपेण दर्शयन् तदेव द्रढ़यति अत्र यथाह पुरुषोत्तम इति। पुरुषोत्तमोक्तमाह तुमर्थ इत्यनुवर्त्तते इति। एतेन भावे भवतीति सिद्धम्। ननु तुमर्थ इत्यनेन भावे भवतीति कथं लभ्यते इति चेत्तत्राह यदिति। यद्यस्मात् अव्ययविधाने अव्ययार्थविधाने तुमश्च भावे अर्थ इति शेषः। इत्युक्तमिति पुरुषोत्तमेनेत्यर्थः। तुमर्थं इत्यनन्तरम् इति शब्दप्रयोग उचित इति ज्ञेयं। कृत्वेति डु कृञ् करणे। भावे हीति सकर्म्मकाद्धातोरुत्तरे भावे प्रत्यये कृते सति चेद्यदि कर्म्मापेक्षा भवति, तदा सकर्म्मकस्य धातोः कर्म्मसम्बन्धो भवत्येवेति। हिशब्दोऽत्र वाक्यालङ्कारे। अतः खलुक्त्वा खलुवाचिकमिति अवाचिकं न वक्तव्यमित्यर्थः। सन्देशवाग्वाचिकं स्यादित्यमरः। तदेति। तत्तस्मात् एवमिति खलूक्त्वा खलु वाचिकमितिवदित्यर्थः। दामोदर इति दामोदरस्य दो ददित्यस्योल्लेखः। पूर्व्वत्र परत्र वा अलं-खल्वोर्योगे सति क्त्वा वा भवतीति न नियमः। अतएव अलं दत्त्वा दत्वालं खलु दत्त्वा दत्त्वा खल्विति। तस्येति। अवैष्णवाय विष्णुनिर्म्माल्यस्य अदानेन भवितव्यमित्यर्थः। प्रतिषेधार्थयोरिति किम् ? अलङ्कारः भावे घण्। अत्रालंशब्दो भूषणार्थः॥

७४। एककर्त्तृकयोः क्रिययोः पूर्व्वकालस्थधातोः क्त्वा।

हरिवेण्वन्तेत्यादि। कृष्णं नत्वा स्तौति वैष्णवः। द्वित्वमेकत्वं वा न तन्त्रम्। नत्वा स्तुत्वा भजति। कथं यदयं तुलसीं गृह्णाति तस्मात् कृष्णं पूजयिष्यतीति न क्त्वा। हेतुप्रयोगेणैव पूर्व्वकाल-प्रतीतेः॥

७५। परावरत्वे गम्ये च

बाल्यमतिक्रम्य हरेः पौगण्डं ततः परमित्यर्थः। क्त्वो यप्

---

७४। एक। एककर्त्तृकयोः क्रिययोः प्रयोगे अथवा एककर्त्तृकयोः क्रिययोः सत्योः पूर्व्वकालस्थधातोरुत्तरे क्त्वा भवति। हरीति अनेन हरिवेणु-हरः। नत्वेति नम प्रभावे शब्दे च सहजानिट्। द्वित्वमिति क्रिययोरित्यस्ये-त्यर्थः। एकत्वमिति पूर्व्वकालस्थधातोरित्यस्येत्यर्थः। न तन्त्रमिति न नियतमित्यर्थः, तेन नत्वा स्तुत्वा भजतीति। अत्र तिसृणां एककर्त्तृकत्व, अतः पूर्व्वकालस्थधातुद्वयात् क्त्वा। भजनापेक्षया स्तवस्त पूर्व्वत्वम्, अतः स्तुधातोः पूर्व्वकालस्थत्वम्। स्तुत्वेति ष्टुञ् स्तुतौ। कथमिति यद्यस्मात् गृह्णातीति चिनोतीत्यर्थः। सिद्धान्तमाह हेतुप्रयोगेणैवेति। पूर्व्वकालत्व-प्रतीतेरिति क्त्वा न भवतीति शेषः। उक्तार्थानामप्रयोग इति न्यायात् न भवतीति भावः। एककर्त्तृकयोरिति किम्? गते अवैष्णवे भुङ्क्ते वैष्णवः। पूर्व्वकालस्थेति किं नमति स्तौति च॥

७५। परा। परत्वे अवरत्वे च गम्ये धातोरुत्तरे क्त्वा भवति; पूर्व्व-सूत्रेणाप्राप्ते विधानम्। बाल्यमिति बाल्यं कौमारम्। कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधीति। अतिक्रम्येति क्रमु पादविक्षेपे क्त्वा क्त्वो यप्। क्त्वो बाल्यात् क्त्वो यप् वक्ष्यत इति; क्त्वो यबनञ्पूर्व्वसमास इत्यनेनेति शेषः। अलब्ध्वेति नञ्पूर्व्वलभः क्त्वा नञोऽरामशेषसर्व्वेश्वरेषु नुट् च समास इति नञोऽरामशेषः। अत्र असिद्धरूपं न त्याज्यमिति प्रतिज्ञाया व्यभिचारो जात इति ज्ञेयम्। अथवा अशब्दोऽयं निषेधार्थ इति। अवरेति पश्चादित्यर्थः; ननु स्वृत्वा धृत्वेत्यत्र स्वरति षुति सूयति धूञ्दित इड्वेत्यनेन पक्षे इट् कथं

वक्ष्यते । अलब्ध्वा गिरिं गङ्गा गिरेरवरेत्यर्थः । श्रिञो जागृवर्जेत्यस्य परत्वाद्विशेषत्वाच्च नित्यमिड्भावः । स्मृत्वा धृत्वा ॥

७६ । तत्कालेऽपि क्त्वा क्वचित् ।
मुखं प्रकाश्य हसति हरिः ॥

७७ । व्यतिहारार्थान्मेङोऽपूर्वकालेऽपि वा क्त्वा ।

पूर्वं याचते ततोऽपमयते अपमित्य याचते याचित्वा अपमयते वा ॥

७८ । स्कन्द-स्यन्दयोर्नरामहरो न क्त्वि ।
स्कन्त्वा स्यन्त्वा वा स्यन्दित्वा ॥

७९ । सेट्क्त्वा न कपिलो मृड्मृदकुषक्लिशवदवसो विना ।

---

न स्यादिति चेत्तत्राह श्रिञ इति । श्रिञो जागृवर्जेत्यस्य कपिल एव विषय इति विशेषत्वम् ॥

७६ । तत् । क्वचित्तत्कालेऽपि क्त्वा भवति । मुखमिति काशृ दीप्तौ दिवादिरात्मपदी क्त्वा क्त्वो यप् । अत्र प्रकाशस्य न पूर्वकालीनत्वप्रतीतिः । किन्तु यत्र काले हासस्तत्रैव मुखप्रकाश इति ॥

७७ । व्यतीति । व्यतिहारः परिवर्त्तस्तदर्थान्मेङ उत्तरे अपूर्वकालेऽपि क्त्वा भवति । अपमित्येति मेङ् प्रतीदाने क्त्वा क्त्वो यप् । त्रियखिविक्रमो मयतेरिरामो वा यपीति वक्ष्यमाणसूत्रेण आरामस्येरामः वामनात्तुक्पृथाविति तुक् अत्रापि असिद्धरूपं न त्याज्यमिति प्रतिज्ञाव्यभिचारो जातः । अपमायेति वा पाठः । याचित्वा अपमयते वेति एककर्त्तृकयोरित्यादिना याच्धातोः क्त्वा ॥

७८ । स्कन्द । क्त्विपरस्मिन् स्कन्दस्यन्दयोर्नरामहरो न भवति । स्कन्त्वेति स्कन्दिर् गतिशोषणयोः सहजानिट् । स्यन्त्वेति स्यन्दू श्रवणे पक्षे उदित्वात् स्वरतीत्यादिनेट् स्यन्दित्वेति ॥

७९ । सेट् । मृड् सुखने तुदादिः क्र्यादिश्च मृद क्षोदे कुष निष्कर्षे क्लिशू विबाधने क्र्यादिः क्लिश उपतापे दिवादिर्द्वयोरेव ग्रहणं वद व्यक्तायां वाचि वस निवासे इत्येतान् विना क्त्वा कपिलो भवति । [illegible]त्वेति कपिलत्वाभा-

उपायनमुपग्राह्यमुपहारस्तथोपदा ॥

(६३) यौतुकादि तु यद्देयं स दायो हरणञ्च तत् ।

(६४) तत्कालस्तु तदात्वं स्या-(६५) दुत्तरः काल आयतिः ॥

(६६) सांदृष्टिकं फलं सद्य उदर्कः फलमुत्तरम् ॥

(६७) अदृष्टं वह्नितोयादि दृष्टं स्वपरचक्रजम् ॥

(६७-क) महीभुजामहिभयं स्वपक्षप्रभवं भयम् ।

---

उपायते युट्। उपगृह्यते ण्यण्। उपह्रियते घञ्। उपदीयतेऽङ्। "उपायनमुपग्राह्यं प्राभृतञ्चोपदा स्त्रिया"मित्यमरमाला। अन्यस्तु प्राभृतादिद्वयं सन्देश-लड्डुकादौ, उपायनादि चतुष्कमुपहारमात्रे प्राह। उत्कोचस्तूपादानमिति त्रिकाण्डशेषः ॥६२

यौतुकादीति। द्वयं यौतुकादिदेये। आदिना व्रतभिक्षादेर्ग्रहणम्। दीयते ह्रियते इति कर्म्मणि घञ्युटौ। यौतुकं यौतकञ्च तदिति वाचस्पतिः ॥६३

तदिति। द्वयं तत्काले। तस्मिन् काले भवस्तदात्वम् ॥६४

आगामिकाल आयतिः स्त्रियाम्। आङ्पूर्व्वाद्यमेः क्तिः। 'आयत्यां सुखमुद्दिश्य भवेत् कर्म्मणि पण्डितः' इति प्रयोगः। "अपथ्यमायत्तो लोभादामनन्त्यनुजीविनः" इति भट्टिः ॥६५

सद्यस्तत्कालिकं फलं सांदृष्टिकम्। संदृष्टौ भवमिकण्। भावि फलम् उदर्कः। ऊर्ध्वमर्च्च्यते घञ् ॥६६

वह्नितोयादिभयमदृष्टम्। भयहेतुत्वात् वक्ष्यमाणं भयं सर्व्वत्र योज्यम्। आदिशब्देन व्याधिदुर्भिक्षमरणादेर्ग्रहणम्। स्वबलात् परबलाच्च जातं भयं मनुष्यकृतत्वात् दृष्टमुच्यते ॥६७। महीभुजां स्वपक्षप्रभवं भयमहिभयम्। अहेरिव भयम्, अहिभयेनैव महीभुजां सम्बन्धो न तु दृष्टादृष्टाभ्यां, यतस्ते अन्यस्यापि भवतः ॥६७-क

(६८) प्रक्रिया त्वधिकारः स्या-(६९)च्चामरन्तु प्रकीर्णकम् ॥
(७०) नृपासनं यत्तद्भद्रासनं (७१) सिंहासनन्तु तत् ।
हैमं (७२) छत्रं त्वातपत्रं (७३) राज्ञस्तु नृपलक्ष्म तत् ॥
(७४) भद्रकुम्भः पूर्णकुम्भो (७५) भृङ्गारः कनकालुका ।
(७६) निवेशः शिबिरं शण्ढे (७७) सज्जनन्तूपरक्षणम् ॥
(७८) हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ।

---

प्रेति। द्वयं नृपादीनां चामरोद्धूननादिप्रतिपत्तौ, कृञः शयचौ ॥६८

चेति। द्वयं चामरे। चरममृगस्येदमित्यण्। "चमरं चामरं लोम गुत्सकं चारचूलक"मिति शेषः। प्रकीर्य्यत इति क्तः, कः स्वार्थे ॥६९

नृपेति। द्वयं राजासनमात्रे ॥७०

तदेव हैमञ्चेत् तदा सिंहासनम् ॥७१

छत्रमिति। द्वयं छत्रे। छाद्यतेऽनेन त्रन् छादेर्घ इति ह्रस्वः संज्ञात्वादिडभावः। आतपात् त्रायते कः ॥७२

तत् छत्रं राज्ञश्चेत् नृपलक्ष्म उच्यते ॥७३

भेति। द्वयं पूर्णकुम्भे ॥७४

भृङ्गेति। द्वयं स्वल्पगाडुकविशेषे। भृङ्गं जलमियर्त्त्यनेन घञ्। "भृङ्गं नपुंसकं तोये भ्रमरे पुंस्त्रियोः स्मृत"मिति। कनकस्य आलुः कर्करी। स्वार्थे कः। अन्यत्रोपचारात् ॥७५

नीति। द्वयमागन्तुकसैन्यावासे। निविशन्तेऽस्मिन्निति घञ्। शव गतौ तालव्यादि, स्थिरादित्वात् किरच् अत इत्वञ्च। शिबिरं षण्ढ नपुंसकमित्यर्थः ॥७६

सेति। द्वयं सैन्यरक्षणे। सञ्जेरुपरक्षेर्ल्युट्। "सज्जनं कथितं क्लीवे चोपारक्षणघट्टयो"रिति रुद्रः। गुल्मोऽप्यत्र ॥७७

हस्त्यादि चतुष्कं श्वेताङ्गमुच्यते। सेनाङ्गानाञ्चेति समाहारः। पदातेः समूहेऽण् ॥७८

(७९) दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः ॥
मतङ्गजो गजो नागः कुञ्जरो वारणः करी ।
इभः स्तम्बेरमः पद्मी (८०) यूथनाथस्तु यूथपः ॥
(८१) मदोत्कटो मदकलः (८२) करभः करिशावकः ।
(८३) प्रभिन्नो गर्जितो मत्तः (८४) समावुद्वान्त-निर्मदौ ॥
(८५) हास्तिकं गजता वृन्दे (८६) करिणी धेनुका वशा ।

---

दन्तीति । पद्मिपर्यन्तं पञ्चदश हस्तिनि । प्रशस्तदन्तहस्तकरयोगादिन् । एवम् अस्त्यर्थे दन्ताद्वलच् तस्मिन् दीर्घः । द्वौ रदौ दन्तावस्य । मुखेन करेण च पिबति अनेकपः । एवं द्विपः कः । मतङ्गाद्दर्पेजातः डः । गजति अच् । नग इव दृश्यतेऽण् । कौ जीर्य्यते कुञ्जरः । पृषोदरादिः । वारयति परबलं युः । एति परं भक् । स्तम्बे तृणगुच्छे रमते स्तम्बेरमः । पद्मं बिन्दुजालकं तद्‌योगादिन् ॥७६

यूथेति । द्वयं यूथाधिपे । यूथं पाति कः ॥८०

मदेति । अभिनवोत्पन्नमदे । मदेन उत्कटः । मदं करोति सच् लत्वं कपिलिकादित्वात् ॥८१

कलेति । द्वयं हस्तिशिशौ । पञ्चवर्षाणि यावत् कलभः । कृ-गृ-गर्देरभः । बालत्वम् । स्त्रियां करभी ॥८२

प्रेति । त्रयं क्षरन्मदे हस्तिनि । भिदिगर्जिमदिभ्यः क्तः ॥८३

उदिति । द्वयं गलितमदे हस्तिनि । टुवम क्तः । मदान्निर्गतः ॥८४

हेति । द्वयं हस्तिसमूहे । हस्तिनां समूहे इकण् । ग्रामजनगजेत्यादिना तल् समूहे ॥८५

करिणीति । त्रयं हस्तिन्याम् । धेनुरिव धेनुका । वश कान्तौ अच् ॥८६

(८७) गण्डः कटो (८८) मदो दानं
(८९) वमथुः करशीकरः ॥
(९०) कुम्भौ तु पिण्डौ शिरसस्तयोर्मध्ये विदुः पुमान् ।
(९१) अवग्रहो ललाटं स्या-(९२) दिषीका त्वक्षिकूटकम् ॥
(९३) अपाङ्गदेशो निर्याणं (९४) कर्णमूलन्तु चूलिका ।
(९५) अधः कुम्भस्य वाहित्थं (९६) प्रतिमानमधोऽस्य यत् ॥

---

गेति । द्वयं गजगण्डे । गण्डेः कटेश्च अच् ।।८७

मेति । द्वयं हस्तिमदजले । माद्यति अनेन मदः अल् । द्यति खण्डयति अनेन दानम् । द्यतेर्ल्युट् ॥८८

करस्य शीकरोऽम्बुकणो वमथुः । टु वम अथुः । शिरसः पिण्डौ कुम्भौ कुम्भाविव ॥८९

कुम्भयोर्मध्ये विदुः । विदेः कुः ॥९०

अवेति । द्वयं हस्तिनो ललाटे । अवगृह्यतेऽस्मिन् अल् । गजालिके वृष्टिरोधे प्रतिबन्धेऽप्यवग्रह इति रुद्रः ॥९१

अक्षिकूटकमक्षिगोलकमिषीका । इषु इच्छायां कीकन् दीर्घमध्या । "शरत् समयमिव रोचमानेषीकं जयमङ्गलनामानं द्विरदवरमारोढुं कामयति" इत्याचार्य्यमञ्जरी । शरत्पक्षे इषीकाः काशाः । गोवर्द्धनस्तु ईश उञ्छे इत्यनेन साधितवान्, तन्मते दीर्घादिः ॥९२

अपाङ्गदेशौ नेत्रान्तभागौ निर्य्याणम् । निर्य्यात्यनेन दूषिकादि ॥९३

चूलेः किः कः स्वार्थे दीर्घवच्चवर्गादिर्दन्त्यमध्या । चूष आपणइत्यस्येति केचित् । तूलिकेत्यन्ये ॥९४

वहिः स्थितं वाहित्थं पृषोदरादिः । वाहित्थं करिकुम्भाध इति भागुरिः ॥९५

वाहित्थादधः प्रतिमानम् ॥९६

(९७) आसनं स्कन्धदेशः स्यात् (९८) पद्मकं बिन्दुजालकम् ।
(९९) पक्षभागः पार्श्वभागो (१००) दन्तभागस्तु योऽग्रतः ॥
(१०१) द्वौ पूर्वपश्चाज्जङ्घादि-देशौ गात्राऽवरे क्रमात् ।
(१०२) तोत्रं वैणुक-(१०३) मालानं बन्धस्तम्भे-
(१०४) ऽथ शृङ्खले ॥

---

स्कन्धदेश आसनम् । आस्यतेऽस्मिन् ॥९७

मूर्द्धनि बिन्दुसमूहः पद्मकं कः स्वार्थे ॥९८

पेति । हस्तिनः पार्श्वभाग उच्यते ॥९९

अग्रतो यो भागः दन्तसन्निहितः स दन्तभागः ॥१००

गजानां । पूर्व्वजङ्घादिभागो गात्रं । 'गजानामग्रजङ्घायां गात्र-मङ्गशरीरयो'रिति व्याडिः । पश्चाज्जङ्घादिभागोऽवरम् । रूपभेदात् क्लीबे ॥१०१

तोत्रमिति । द्वयं हस्तिताड़ननिमित्तकलोहमुखदण्डे । तुद्यतेऽनेन त्रन् । वेणुना निर्म्मितं कण् वेणुकं वेणुकञ्च । आदिलोप उकारलोपश्च पत्ते दृश्यते ॥१०२

आलानमिति । बन्धनस्तम्भे बन्धने चालानम् । आलान्ति अस्मिन् ल्युट् । बन्धश्च स्तम्भश्चेति समाहारे बन्धने स्तम्भे च । तथाच—गजालानपरिक्लिष्टैरिति । तद्गजालानताप्राप्तैः सहकला-गुरुद्रुमैरिति च रघुः ॥१०३

शृङ्खे ति । त्रयं दाडुकइति ख्याते । शिञ्जानाः स्खलन्त्यनेन पृषोदरादिः । "शृङ्खलापुंस्कटीवस्त्रबन्धे च निगड़े त्रिष्वि"ति मेदिनी । "स्त्रीकटीवस्त्रबन्धेऽपि निगड़े शृङ्खलं त्रिष्वि"ति तालव्यादौ रभसः । अति अदि बन्धने । वङ्क्वादित्यात् कुः । कः स्वार्थे । गड़ेरच् ॥१०४

अन्दुको निगड़ोऽस्त्री स्या-

(१०५) दङ्कुशोऽस्त्री शृणिः स्त्रियाम् ॥

(१०६) चूषा कक्ष्या वरत्रा स्यात् (१०७) कल्पना सज्जना समे ॥

(१०८) प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः ।

(१०९) वीतं त्वसारं हस्त्यश्वं (११०) वारी तु गजबन्धनी ॥

---

अङ्किति। द्वयमङ्कुशे। अङ्क्यतेऽनेन, अङ्केरुशः। काशाकाश-कुशाङ्कुशमिति तालव्ये शिङ्भिदः। शृणात्यनेन पाष्ण्यादित्वान्नि-र्गुणाभावः। शृ गतावित्यस्येति सर्व्वानन्द इति सुभूः। "अरक्षलग्नम-परस्य शृणिं शिताग्रमेकः पलायति भयेन कृतार्त्तनादः" इति माघे शृणिः पुंस्यपि। अतएव शृणिर्द्वयोरिति पाठः। स्त्रियामिति क्वचित् पाठः। तथाप्येकशेषेण स्त्रीपुंसमुदायो लक्ष्यते इति सुभूः ॥१०५

चूषेति। त्रयं कक्षा चर्म्मरज्जौ। चूष पानेऽच् चवर्गादिः। सर्व्वा-नन्दस्तु वृषु सेचने इत्यस्य वृषेत्याह। कक्षे विद्यमाना यत्। वृञोऽत्रच् ॥१०६

कल्पेति। द्वयं नायकस्यारोहणार्थं सज्जीकरणे। कल्पयतेर्युः। 'सज्जना कल्पनायां स्त्री कुलीने सज्जने त्रिषु' इति दन्त्यादौ रभसः ॥१०७

प्रेति। पञ्च आस्तरणाय चित्रकम्बले। प्रवेण्युक्ता। आस्तीर्य्यते अनेन युट्। वृञो नः क्व वृतृस्वपिमिद्रुहो मन्। परिस्तौतेर्म्नः। उपसर्गप्रतिरूपकत्वान्न षत्वम्। कुथेर्नाम्युपधात् कः, स्त्रियामाप्रत्ययः। "नपुंसकमास्तरणं स्त्री प्रवेणी कुथं त्रिष्विति तु वोपालितः। "कुथा कन्था समाख्याता कुथः स्यात् करिकम्बलः। कुथः कुशः कुथः कीटः प्रातःस्नायी नरः कुथः ॥" इति नानार्थध्वनिमञ्जरी ॥१०८

वीतमिति। असारं युद्धाक्षमं हस्त्यश्वं वीतं, विगतमितं गमनमस्य ॥१०९

त्वसारमिति। यत्र भूमौ विश्वस्य वनगजा ध्रियन्ते सा वारी "कटगड़ी" वा गजबन्धनी च ॥११०

(१११) घोटके पीति-तुरग-तुरङ्गाऽश्व-तुरङ्गमाः ।
वाजिबाहाऽर्व्वगन्धर्व्वहयसैन्धवसप्तयः ॥

(११२) आजानेयाः कुलीनाः स्यु-
(११३) र्व्विनीताः साधुवाहिनः ।

(११४) वानायुजाः पारसीकाः काम्बोजा वाह्लिका हयाः ॥

(११५) ययुरश्वोऽश्वमेधीयो जवनस्तु जवाधिकः ।

(११६) पृष्ठ्यः स्थौरी

---

घोटेति। सप्तिपर्य्यन्त त्रयोदश घोटके। घट परिवर्त्तने वुण्। पीङो बाहुलकात्तिः। पाने स्त्री पीतिरश्वे ना इति रुद्रः। तुरेण त्वरेण गच्छति डः। विहङ्गेत्यादिना निपातः। अन्यत्र खश्च। अश्नुते वः। वाजः पक्षस्तद्‌योगादिन्। एषाञ्च पूर्व्वं पक्ष आसीत् स इन्द्रेण लूनः। वहेर्णः। अर्त्तेर्व्वन्। हव गतावच्। सिन्धौ जायतेऽण्। सप समवाये तिः ॥१११

कुलीनाः ये संग्रामे शस्त्रहता अपि स्वामिनं न त्यजन्ति ते आजानेयाः। आ सम्यक् जवेन आरोहणस्थानं नयन्ति पृषोदरादिः ॥११२

साधु शोभनं वहनशीलाः ॥११३

एते हयाः हयविशेषाः। वनायुदेशे जाताः। वृद्धौ वानायुजाश्च पारसीकादयश्च देशविशेषाः ॥११४

अश्वमेधार्होऽश्वो ययुः। यजन्त्यनेन डः पृषोदरादित्वादन्त्यस्यान्त स्यात्वम्। "ययुः पुमानश्वमेधतुरगे च तुरङ्गम" इत्यन्तस्थाद्यन्ते मेदिनी। जवेन वेगेनाधिकः जवनः। स्फुटसरोजवना जवना नदीरिति भारवियमकम् ॥११५

पृष्ठ्य इति। द्वयं यः पृष्ठेन भारं वहति तत्र। पृष्ठेन वहति यः। स्थौरो भारसमूहयोरिति रुद्रः। तद्‌यानादिन् ॥११६

(११७) सितः कर्को रथ्यो वोढ़ा रथस्य यः ॥
(११८) बालः किशोरो (११९) वाम्यश्वा वड़वा
(१२०) वाड़वं गणे ।
(१२१) त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते ॥
(१२२) कश्यन्तु मध्यमश्वानां (१२३) हेषा ह्रेषा च निस्वनः ।
(१२४) निगालस्तु गलोद्देशो (१२५) वृन्दे त्वऽश्वीयमाश्ववत् ॥
(१२६) आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् ।
गतयोऽमूः पञ्चधारा

---

सितः श्वेतोऽश्वः कर्कः। कर्केः सौत्रादच्। रथं वहति यत् ॥११७

वेति। द्वयमश्वशिशौ। अन्यत्रोपचारात्। वलते वर्द्धते णः। किं कुत्सितं शेते पृषोदरादिः। शपथ किशोर पिशङ्गा इति शिड्-भेदः ॥११८

वेति त्रयमश्वायाम्। वमेर्बन्तादीप्रत्ययः ॥११६

वड़वानां समूहो वाड़वं समूहेऽण् ॥१२०

यत् स्थानम् एकेन दिनेनाश्वेन गम्यते तदाश्वीनम्, ईनण् ॥१२१

अश्वादेस्ताड़नो कशा, तामर्हति, यत् ॥१२२

ह्रेषेति। द्वयमश्वशब्दे। हेषृ ह्रेषृ शब्दे, गुरोरः ॥१२३

गलस्थानं निगालः। निगिरत्यनेन घञ् लत्वञ्च ॥१२४

अश्वीति। द्वयमश्वसमूहे। समूहे ईयोऽण् च ॥१२५

आस्कन्दीति। पञ्च अश्वानां गतिविशेषा धाराशब्दवाच्याः। अथाच—"आस्कन्दितं समाना स्यादश्वानां गतिरग्रतः। चक्षुःपातस्य चातुर्य्याद् गतिस्तु धौरितं भवेत्। मण्डलीगमनं यत्तु रेचितं तत् प्रचक्षते। वेगविक्षेपगमनं वल्गितं संप्रचक्षते। लम्फेन त्वरया या तु गतिः स्यात् सा प्लुतं भवेत्"। इति माधवः ॥१२६

# प्रणव-पारिजातः

( संस्कृत-मासिकपत्रम् )

त्रयोदशवर्षस्, एकादशसंख्या ]     [ आषाढ़मासः १८६२ शकाब्दः ]


## काशीमाहात्म्यम्

॥ चतुर्थोऽध्यायः ॥

निबन्धकः—श्रीमद्देशचन्द्र सांख्यतीर्थः

बलदेवः—ततो महर्षिणा किं कृतम् ?

गुरुः—ततस्तपस्विप्रवरो विश्वेश्वरं ध्यात्वा लोपमुद्रामाह—कल्याणि ! किमेतत् समुपस्थितम् ? क्व वा वयं मुनिमार्गानुसारिणः क्व वा तत् कार्य्यम् ? यत्र गोत्रभिदादीनामपि सामर्थ्यं कुण्ठितम् ? येषां दृष्टिमात्रेण चतुर्द्दशभुवनानि विनष्टानि भवन्ति, किं विन्ध्यस्य वृद्धि-वारणाय न ते समर्थाः ? तत् स्मृतं, यत् पुराविद्भिः काशीमुद्दिश्य गीयते—

अविमुक्तं न मोक्तव्यं सर्व्वथैव मुमुक्षुभिः।
किन्तु विघ्ना भविष्यन्ति काश्यां निवसतां सताम् ॥

हे कान्ते ! महान् विघ्नः समुपस्थितः। अन्यथा कर्त्तुं कथमपि न शक्यते। द्विजाशीर्भिर्व्विश्वेश्वरानुग्रहेण च या काशी प्राप्यते, को मुमुक्षुस्तां त्यक्तुमिच्छति ? सुकृतैकराशिः काशी कदाचिदपि न हातव्या। या काशी सर्व्वेषां प्राणिनामाश्रयभूता, या सर्व्वेषां सहाय-स्वरूपा, या च मुक्तिदात्री, सा काशी कथमपि न त्याज्या। उक्तञ्च पौराणिकैः—"श्रीविश्वनाथेन समं न लिङ्गं, पुरी न काशीसदृशी त्रिलोक्याम्"। इति चिन्तयन् स कालभैरवं निकषा गत्वा प्रणम्य च निवेदयामास—प्रभो ! त्वां द्रष्टुकामः समागतोऽस्मि। हे कालराज ! प्रत्यष्टमि, प्रतिचतुर्द्दशि प्रतिकूजं [illegible] दिभिः किं न मया

पूजितस्त्वम् ? निरपराधाय मह्यं कथं क्रुध्यसि ? इति बहु विलप्य दण्डपाणये विज्ञापयामास, हे यक्षराज ! दण्डपाणे ! त्वं तपोजनोचितं दुःखं सम्यग् जानासि । तत् कथं मां काशीतो बहिर्नयसि ? त्वदीयौ सम्भ्रमविभ्रमनामानौ गणौ काशीस्थ-वृत्तान्तविचारकोविदौ सम्भ्रान्तिमुत्पाद्य असाधून् जनान् क्षणाद् दूरीकृतवन्तौ । कथं मामस्मात् क्षेत्राद् बहिःकर्त्तुमुद्यतौ ? हे ढुण्ढि विनायकादयः ! शृणुत मे निवेदनम् । मया कदापि परनिन्दा परापकारश्च न कृतौ ! परस्वापहरणे परदारेषु मे बुद्धिः कदाचिदपि न जाता । त्रिकालं गङ्गास्नानं कृतम् । श्रीश्रीअन्नपूर्णा-विश्वेश्वरौ प्रत्यहं विलोकितौ पूजितौ च । पर्व्वसु यात्राश्च यथाविधि विहिताः । विघ्नस्य मे किं कारणम् ? भो विशालाक्ष्यादयो मातरः ! पुनः पुनर्वः प्रणमामि । देवगणैरभ्यर्थितः परोपकाराय काशीं जहामि न स्वार्थम् ।

स मुनिवरः सस्त्रीक एवं सर्व्वान् मुनीन काशीवासिनो बाल-वृद्ध-युवकान् तृणानि वृक्षान् लताश्च आपृच्छ्य पुरीं परिक्रम्य निर्ययौ । मुनिः पुनराह—काशीं परित्यज्य गच्छन्तं मां धिक् ! पापरहिताः काशीस्था वृक्ष-लता-गुल्मादयोऽपि वरम् । ते काशीं न जहति । ततः स महर्षिः असिमुपस्पृश्य प्रासादमाला दूरीदृश्यमान उवाच—भो नेत्र ! काशीं अवलोकयताम्, क्व च युवां. क्व चेयं मुक्तिदायिनी काशी । प्रान्तस्थिता भूतगणा पुण्यमयीं काशीं विहाय गच्छन्तं मां दृष्ट्वा करतालिकया उपहसन्ति । स मुनिरित्थं बहु विलप्य हा काशि हा काशि ! पुनरेहि, दर्शनं देहि, इति जल्पन् शिव शिव शिव इति च वदन् भार्य्यया सह गोयानमारुह्य क्षणेन समुन्नतमवरुद्धरविमार्गं विन्ध्यमवलोकयामास । स च गिरिवरः सदारं तं मुनिं पुरतो दृष्ट्वा खर्व्वतरो भूत्वा पृथिवीं विविक्षुरिव उवाच—"आज्ञयानुगृहाण माम्" अहं वां दासोऽस्मीति चावदत् । ततो महर्षिराह "भो प्राज्ञ ! विन्ध्य ! साधुरसि ; यावन्मे पुनरागमनं न भवेत्, तावत् खर्व्वतरो भव" इत्युक्त्वा दक्षिणां दिशं गतः । गते च तस्मिन् तापसप्रवरे वेपमानः स

पर्वतोऽचिन्तयत्—अद्याहं पुनर्जातः, सदागस्त्येन मुनिना न शप्तः, अतो धन्योऽस्मीति। समयज्ञोऽरुणोऽपि तदा अश्वान् प्रेरयामास। सूर्य्य-किरणैर्जगत् स्वास्थ्यमवाप।

स मुनिरद्य श्वो वा आगमिष्यतीति चिन्तयन्नवस्थितः विन्ध्यः। असूयापरायणो जन उन्नत्यै यतते चेत् तस्योन्नतिवार्त्ता दूरे आस्तां, प्राग् वृद्धिरपि नश्यति। खलानां मनोरथो न सिध्यति. सिद्धोऽपि ध्रुवं नश्यति।

काशीविरहजः सन्तापो रमणीये पवित्रे गोदावरीतटे।
विचरन्तमपि सदारकं तं मुनिं न जहौ॥

उदीच्या आगतं वायुमालिङ्ग्य काश्या अनामयं पृच्छति अये भद्रे ! वाराणस्याः सौन्दर्य्यमिह जगति कुत्रापि न दृष्टम्। ततः स क्वचिदुपविशन् काशीविरहेण उन्मत्त इव इतस्ततो भ्रमन् कदाचिन्महा-लक्ष्मीं विलोकयामास। सा देवी स्वभासा भानुं विजित्य मुनेस्तपोराशिं निर्व्वापयन्तीव स्थिता। रात्रौ पद्मानां संकोचादमावस्यायाञ्च चन्द्रस्या-दृश्यत्वात् क्षीरोदे मन्दरभयात् सा अत्रैव अवस्थिता। स प्रहृष्टमनास्तां प्रणम्य तुष्टाव। ततः सपत्नीको मुनिवरः पुनरपि तां साष्टाङ्गं प्रणनाम। ततो लक्ष्मीरुवाच—हे मित्रावरुणनन्दन अगस्त्य ! अयि पतिव्रते लोपमुद्रे ! उत्तिष्ठोत्तिष्ठ। स्वस्ति वां भवतु, वरं वृणु, अयि भद्रे राजपुत्रि ! इहोपविश्यताम्, अयि पुण्यशीले ! त्वदीयेन शुभेन अङ्गलक्षणेन अतिपवित्रेण ते व्रतेन च दैत्यानामस्त्रैः सन्तापितानि मे अङ्गानि शीतलीकर्त्तुमिच्छामि' इत्युक्त्वा कमला प्रीत्या तामालिङ्ग्य दिव्यालङ्कारैरलङ्कृतवती। प्राह च पुनर्मुनिं—सन्तापकारणं ते जानामि, काशीविरहजेन शोकानलेन ते ईदृशी अवस्था। यदा पुरा श्रीश्रीभगवान् विश्वेश्वरः काशीं परित्यज्य मन्दरं गतस्तदा तस्यापि एतादृशी दशा-भवत्। स भगवान् काशीवार्त्तां ज्ञातुं ब्रह्माणं विष्णुं गणान् गणपतिम् आदित्यान् योगिनीगणांश्च प्रेरयामास। तेऽपि सर्व्वे काशीगुणैर्मुग्धा अद्यापि काशीं त्यक्तुं न समर्थाः। इति श्रुत्वा श्रियं पुनर्दण्डवत् प्रणम्य

भक्तिगद्गदकण्ठेन प्रत्युवाच—हे मातः! यदि मे वरो देयस्तदा काशीप्राप्तिवरः प्रदीयताम्। लक्ष्मीरपि तं प्रत्युवाच त्वया यत् प्रार्थितं, तद् भवतु। एकोनविंशे द्वापरे त्वं व्यासो भविष्यसि। तदा वाराणसीं प्राप्य सिद्धिं लप्स्यसे। अपरञ्च ते यद् हितं, तद् ब्रवीमि तदपि समाचर। इतः किञ्चिद् गत्वा पुरतः कार्त्तिकेयं द्रक्ष्यसि। ततः शिवोक्तं काशीरहस्यं श्रुत्वा तृप्तो भविष्यसि। सोऽपि वरं प्राप्य महालक्ष्मीं प्रणम्य यत्र शिखिवाहनः कुमारो वर्त्तते, तत्र जगाम। ततः सभार्य्यो मुनिवरः महालक्ष्मीस्पर्शजातानन्दामृतह्रदेऽवगाहमानः परमानन्दमवाप।

परोपकरणं येषां जागर्त्ति हृदये सताम्।
नश्यन्ति विपदस्तेषां सम्पदः स्युः पदे पदे॥
नोपकारात् परो धर्म्मो नापकारादघं परम्॥

—( क्रमशः )

## हरिनामामृतम्

नाम नाटकम् ( प्रथमो भागः )।

अध्यापक-स्वर्गत-अमियनाथ चक्रवर्त्ति एम्-ए, काव्यतीर्थेन विरचितम्

( पूर्वतोऽनुवृत्तम् )

॥ प्रथमोऽङ्कः ॥

। अष्टमं दृश्यम्।

[ पूर्वदृश्यस्य कीर्तनदलं कीर्तनं कुर्वत् चतुष्पथे तत्रागतं, यत्र हरिदासो भृत्यवद् भूमौ निपतित आसीत्। ]

सर्वे : ( कीर्तनम् )

हरे कृष्ण हरे कृष्ण—( इत्यादिकम् )

गौराङ्गः। ( तं दृष्ट्वा धावन्नुपागम्य हरिदासं बलेनोत्तोल्य वक्षसि,

गृह्णाति, तत्क्षणात् तस्य संज्ञा प्रत्यावर्तते, स च सुस्थो दृश्यते )

हा हा कृष्णभक्तो न प्रणश्यति। पश्य मम गात्रेषु त्वां प्रति वेत्राघातानां चिह्नानि।

[ क्रन्दन् वक्षसि दृढ़निबद्धं तं करोति ]

नास्ति भक्तसमो जीवः कृष्णभक्तः सदा सुखी।
भक्तात् कृष्णस्य माहात्म्यं कृष्णाद् भक्तो महत्तरः॥

( सर्वान् प्रति ) आलिङ्गत सर्वे यूयं भक्तश्रेष्ठं हरिदासम्।

[ एकैकशः सर्वे "हरे कृष्ण" इत्युच्चारयन्तो हरिदासमालिङ्गन्ति। हरिदासश्च प्रतिवारं "हरे कृष्ण" इति कथयन् प्रत्यालिङ्गति। प्रत्येकश्च भूमौ पतितः सन् प्रणमति। ]

हरिदासः। ( पश्चात् उल्लम्फनं कुर्वाण उच्चैस्तरं कीर्तनं करोति )

( गानम् )

हरिहरये नमः कृष्ण-यादवाय नमः।
यादवाय माधवाय केशवाय नमः॥

सर्वे। ( हरिदासेन सह सर्वे एकत्र नृत्यन्तः कीर्तनं कुर्वन्ति )

[ अथ सर्वे महापुरुषस्यानुसन्धानाय गौराङ्गमनुसरन्तो निष्क्रान्ताः। ]

( दृश्यावसानम् )

* * *

॥ नवमं दृश्यम् ॥

[ नन्दनाचार्यस्य गृहाभ्यन्तरे चञ्चलो नित्यानन्दप्रभुः क्षणे भूमौ उपविशति, क्षणे च तत्रैव दण्डायते, क्षणे हसति, क्षणे च क्रन्दति "कृष्ण

कृष्ण" इति स हुङ्कारं करोति। नन्दनाचार्यश्च सगद्गदं नित्यानन्देन सह गायति। ]

नित्यानन्द-नन्दनौ।

( गीतम् )

श्रीराधारमण भक्तजन-जीवन
जीवगणोद्धारण गौर!
श्रीहरिकीर्तन गतयामिनीदिन
आगच्छ प्राणधन गौर!
त्वदीय-कृपाकण- लाभाय मम मन
उन्मत्तमसीमसहन गौर!
यदि ते विलम्बन- मतिरस्ति नन्दन
कथमतः सह्यते गौर!!
आगच्छ आगच्छ प्राणधन गौर!!!

[ सहसा गौराङ्गदलस्य कीर्तनध्वनिः श्रूयते। सदलं कीर्तनं कुर्वता नित्यानन्देन श्रूयते। सर्वेषां मिलितकीर्तनं "हरे कृष्ण हरे कृष्ण" इत्यादि। कीर्तयन्तः प्रविशन्ति सर्वे। प्रवेशमात्रञ्च सर्वे गौराङ्गस्य भावविह्वलतां नित्यानन्दञ्च दृष्ट्वा कीर्तनाद् विरतास्तिष्ठन्ति।]

[ नित्यानन्दो नन्दनश्चोद्ग्रीवौ बहिर्दृष्टि दत्तौ, कीर्तनञ्च स्वकीयं कुरुत; तत एकतो नित्यानन्दप्रभुर्हस्तौ उत्तोल्य तिष्ठति, अन्यतश्च गौराङ्गप्रभुर्हस्तौ उत्तोल्य अग्रसरो भवति प्रविशंश्च सदलम्। तत्कालं नित्यानन्दप्रभुर्गौराङ्गप्रभुं दृष्ट्वा अपलकनेत्राभ्यां रूपसुधां पिबन्निव जड़वत् स्थितः। अश्रूणि विगलितानि, अवशञ्च शरीरं तस्य। कियत्कालमुभौ परस्परं प्रफुल्लदृष्ट्या अवलोकेते। ]

नित्यानन्दः। अयम्, अयमेव स व्रजगोपाल-कृष्णः!

गौराङ्गः। प्राप्तवान्, प्राप्तवानहं तं महापुरुषम्। (क्षणं विरम्य) इदानीमहमवधारयामि यत्, श्रीकृष्णकर्तृको ममोद्धारो भविष्यति, नचेत् कथं स त्वत्सदृशं भक्तमानीय मह्यं ददाति ? शुभोऽद्य मे दिवसः, यस्मिन् श्रीचरणौ ते प्रत्यक्षीकरोमि।

नित्यानन्दः। हरे कृष्ण, हरे कृष्ण !

गौराङ्गः। त्वयि वर्तते श्रीकृष्णस्य पूर्णा शक्तिः, इच्छामात्रमेव त्वं चतुर्दशभुवनानि पवित्राणि कर्तुं पारयसि। अमूल्यः खलु तवाश्रयः, यस्तव शरणं गृह्णाति, नास्ति तस्य कदापि कापि विपत्। अहं ते कृपाप्रार्थी, कृपया तव दयामयत्वं प्रदर्शय।

[ नित्यानन्दपादयोः पतति। नित्यानन्दोऽपि लज्जया मस्तकमवनतं कृत्वा गौराङ्गस्य पादयोः पतति। ]

नित्यानन्दः। (उत्थाय) स्वयं श्रीकृष्ण इदानीं पुनर्भुवि सम्भूय श्रीहरिनामकीर्तनेन पातकिनामुद्धारं विदधातीति ध्यानचक्षुषा दृष्ट्वा महाजनमुखाच्च श्रुत्वा भाग्यपरीक्षार्थमत्रागतोऽहं नित्यानन्दः।

गौराङ्गः। श्रीपाद ! महदस्माकं भाग्यं यतस्ते जाता नवद्वीपं प्रति करुणा। धन्योऽस्मि त्वां प्राप्य।

श्रीमदद्वैतादयः।

(सम्मिलिता गायन्ति)

(गानम्)

जय जय सुन्दर पीतवसनधर
हे व्रजभूषण बङ्किम-लोचन
वेणु-विनोदन मदन-भूपाल ॥
व्रज-वन-वास विविधविलास

मदन-दमन रमण रसाल।
राधाया अङ्गे त्वदङ्ग शोभन
कनकलताभिर्जड़ित-तमाल ॥
युगे युगे जात मधुरावदात
भूभारहरण प्रेमिक दयाल।
जय जय जय जीव-मनोमय
तारय तारण तापितकृपाल ॥

[ गौराङ्ग-नित्यानन्दौ उत्तिष्ठतः, किन्तु तयो विह्वलता न सम्यक् तिरोहिता ]

नित्यानन्दः। ( पश्चाद् अर्द्धज्ञानं लब्ध्वा उभौ विह्वलभावेनैव उत्तिष्ठतः )
अपि त्वं रे मम स कृष्णः केशवः ?
कुत्र तर्हि रे तव चूड़ा ?
कुत्र तर्हि रे वंशीक्रीड़ा ?
अपि त्वं रे मम स कृष्णः केशवः ?

गौराङ्गः। ( नित्यानन्दवत् )
किं पृच्छसि त्वं मम भ्राता ?
व्रजे लीला धावनं वङ्गे लीला (धूलि) लुण्ठनम् ;
व्रजे वंशीवादनं वङ्गे हरिकीर्तनम्,
व्रजे चूड़ा-धारणं वङ्गे वासः कौपिनम्,
सनातनोऽहं जीवत्राता !

[ सहसा चमकित इव वाह्यज्ञानं लब्ध्वा लज्जाकातरं श्रीवासाचार्यं प्रति ]

गौराङ्गः। पण्डित ! किमहं प्रलापान् जल्पामि स्म ?

श्रीवासः। न न, यथापूर्वं त्वं वर्तसे।

गौराङ्गः। ( नतो भूत्वा ) नितान्तमबोधोऽहम्। यदि स्यादपराधः, क्षमध्वं मां यूयं सर्वे।

नित्यानन्दः। हरे कृष्ण, हरे कृष्ण।

गौराङ्गः। अद्य परिपूर्णो नामानन्दः, यत आगतो मम नित्यानन्दः। इदानीमावां सर्वजनेभ्यः श्रीकृष्णप्रेम वितरिष्यावः— श्रीकृष्णनामशक्तिञ्च प्रदर्शयिष्यावः।

हरेर्नाम हरेर्नाम हरेर्नामैव केवलम्।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥

नित्यानन्दः। ( सहसा दण्डं कमण्डलुञ्च दूरे निक्षिप्य )

गौराङ्गः। कथं भ्रातः !

नित्यानन्दः। शुष्क-सन्न्यास-चिह्नमात्राण्येतानि आसन्। यदर्थमेतैः प्रयोजनमासीत्, तस्मिन् त्वयि लब्धे सति नायं सन्न्यासः पुनः प्रयोजनीयो वर्तते। इदानीं स्वयं त्वां श्रीकृष्णं प्राप्तोऽस्मि।

[ आलिङ्गति, अवशश्च पतति ]

गौराङ्गः। ( नित्यानन्दं धृत्वा गात्रे करं परामृश्य ) श्रीनित्यानन्द ! उत्तिष्ठ।

[ नित्यानन्दमुत्थाप्य करौ धृत्वा सानुरोधम्। ]

इदानीं प्रेमदानेन जीवानुद्धारय ; यथेच्छं जीवेभ्यः प्रेम वितर।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा।

नित्यानन्दः। ( गौराङ्गहस्तौ स्वहस्ताभ्यां गृहीत्वा गायति )

( गानम् )

हे प्रेम-निलय जीवेषु सदय
तव प्रेम वितरामि लोके।
पापि-तापि-हित विधानमुदित
जय नारायण जगत्पते !!

( दृश्यावसानम् )

॥ अङ्कावसानम् ॥

—:०:—

# श्रीमद्भगवद्गीतायां भक्ति-कर्म्मवादौ

( निबन्धकः—अध्यापकः श्रीरवीन्द्रकुमारसिद्धान्तशास्त्री )

( पूर्वतोऽनुवृत्तम् )

अहो दुःखमहो दुर्दैवम् ! 'विनाशकाले विपरीतबुद्धि'रिति शास्त्रप्रसिद्धोक्तिः साम्प्रतं हिन्दुष्वेवोदाहरणातागता। तेन दुर्बुद्धयो हिन्दवः सम्प्रति 'सर्व्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज' इति गीतावाक्यस्य प्रथमांशमात्रं प्रमाणत्वेन गृहीत्वा धर्म्मं परित्यजन्ति, न तु वाक्यस्यास्य शेषार्द्धमवलम्ब्य भगवन्तं शरणं व्रजन्ति। यदा दुर्वृत्तैः स्वकीया पत्नी, भगिनी, दुहिता वा ह्रियते, तदापि हिन्दवः स्वकीयं विनाशमभिलषन्त इव—

"सर्व्वधर्मान् परित्यज्य मामेकं शरणं व्रज।" इति

"समोऽहं सर्व्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।"

इति चोच्चार्य्य क्लीबवत्तिष्ठन्ति। न तु,

"क्लैब्यं मास्मगमः पार्थ ! नैतत् त्वय्युपपद्यते।" इति

"हतो वाप्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।"

इति च गीतोपदेशं भ्रमेणापि स्मरन्ति।

परोपकाराय प्रवृद्धं सर्व्वमेव कर्म्मजातं जगदुपकाराय कर्त्तव्यमित्येव गीताशास्त्रोक्तो भगवदभिप्रायः। दुर्वृत्तानां दमनाय या हिंसा साप्यहिंसारूपेणैव गण्यते। वैधहिंसाचरणे दोषो नास्ति; परन्तु तदकरणे एव दोषः। आत्मनो रक्षायै नरहत्यापि दोषाय न भवेत्। क्लीबस्यैवात्मपरित्राणचेष्टाभाव एव दोषः। उक्तञ्च—

"आततायिनमायान्तं हन्यादेवाविचारयन्।

नाततायिवधे दोषो हन्तुर्भवति कश्चन॥" इति

कस्याश्चित् पतिव्रतायाः सतीत्वरक्षार्थं कस्यचिद् वा दुर्बलस्य साधोः रक्षायै, जगदुपकाराय वात्मत्यागोऽपि येन धर्म्मेणोपदिष्टः, कथं तमेव धर्म्ममवलम्ब्य वयं क्लीबा इव [illegible] ? यस्मिन् धर्म्मे स्थिताः

दधीचादयो महामुनयः परोपकृतेर्ज्वलदुदाहरणानि प्रदर्शितवन्तस्तस्मिन्नेव धर्म्मे स्थिता हिन्दवः साम्प्रतं परोपकाराय न प्रवर्त्तन्त इत्येतास्मादधिकः दुःखहेतुः कोऽपि नास्ति क्षितितले ।

स्वधर्मस्य स्वदेशस्य च रक्षार्थे युद्धकार्य्यमपि वैधत्वेन विनिर्णीतं भगवता। तेन च वैदेशिकानां शत्रूणामाक्रमणाद् भारतवर्षं रक्षितुं सर्व्वैरेव यतितव्यमित्यपि वयं गीताशास्त्रीयोपदेशेभ्य एव जानीमः ।

भक्तेः कर्म्मणश्चैवंविधः समन्वयो जगतां महदुपकाराय संस्थापितो विश्वविख्याते सर्व्वेषामादरणीयेऽस्मिन् गीताशास्त्र एव। धन्येयं पुण्यतमा गीतोपनिषत्। धन्याश्च भवन्तु सर्व्वे तदुपदेशामृतपानेन ।

"कर्म्मणश्च तथा भक्तेर्यत्र शुभसमन्वयः।
गीता पुण्यतमा सेयं जयतु नितरां क्षितौ ॥"

इति श्रीहट्टान्तर्गत-काशीपुरग्रामवास्तव्य काव्य-व्यकरणपुराणतीर्थ साहित्य-पुराण-भागवत-सिद्धान्तशास्त्रीत्यादिव्यपदेशयुक्तेन श्रीरवीन्द्र-कुमार शर्म्म-भट्टाचार्य्येण विरचितो गीतानिबन्धः समाप्तः ॥

[ प्रबन्धस्य विरचनकाले १३५२ वङ्गाब्दे अविभक्तमेवासीद् भारतवर्षम्। श्रीहट्टराजकीयसंस्कृतमहाविद्यालयात् शिक्षां समाप्य युवा एष निबन्धकारस्तदानीं करिमगञ्जस्थे राजकीय उच्चइंराजीविद्यालये संस्कृतशिक्षक पदे नियुक्तः। आसीत्तदानीमिदं पदं सर्व्वथैवस्थायि। परस्मिन वर्षे मौनवीकाजारस्थे राष्ट्रिये उच्चइंराजी विद्यालये स स्थायि-भावेन नियुक्तो बभूव। एतस्मिन्नवसरे एव प्रबन्ध-प्रतियोगितायाः फलं विघोषितम्। अहो दुर्दैवम्। तदनन्तरमेव पाकिस्तानसृष्टेः पैतृकाद् वासस्थानात् सम्पत्तेश्च विताड़ितः राजकार्य्याच्च पाकिस्तानराष्ट्र-परिचालकैश्च्यावितः सर्व्वस्वविहीनो निबन्धको नवसृष्टं भारतमागत्य विविधेषु क्लेशेषु निपतितः। केवलं विद्यामेवाधिगम्य पश्चात् स स्थितिं लब्धुं शशाक । ]

॥ शिवमस्तु ॥

# बृहदारण्यकोपनिषद्मितभाष्यम्

निबन्धकः—श्रीचारुकृष्णदर्शनाचार्य्यः

( पूर्वतोऽनुवृत्तम् )

अस्य कर्म्माश्वमेधादिकं न क्षीयते न नश्यति ह्रसति वा ज्ञान-सम्पृक्तत्वेन वीर्य्यवत्तरत्वात् तत्फलस्य मोक्षस्यानन्त्यावसानाभावाच्च। अतः "क्षीयन्ते चास्य कर्म्माणी"त्यस्यापि न विषयो बन्धकत्वाभावात् "न तस्य कर्म्म क्षीयते" इत्यस्य विशेषशास्त्रत्वाच्चेत्यवधेयम्। अनेवं-वित्कृतकर्म्मणः क्षयिष्णुत्ववदेवंवित्कृतकर्म्मणो निन्दाभावाच्च। परेषां तु नित्याभावस्याकिञ्चित्करत्वात्। न चात्र हित्वाऽग्निहोत्रादिकर्म्मात्मान-मेवोपासीतेत्युक्तं श्रुतौ, परं "यावज्जीवमग्निहोत्रं जुहोति" "स खल्वेवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्त्तते" इति यावज्जीवमेवात्राग्निहोत्रादेः कर्त्तव्यत्वमेव प्राप्तम् समुच्चयमार्गे तत्तद्देवता-रूपेणात्मन एवोपास्यत्वात् परेषामेवकारस्य वैयर्थ्याच्च। शीघ्रं ज्ञान-प्राप्तिहेतुत्वाच्च ज्ञानसमुच्चितमेव कर्म्म कार्य्यं, तदुक्तं भगवता—

"योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छतीति"।

आह च योगियाज्ञवाल्क्यः—

ज्ञानेनैव सहैतेन नित्यकर्म्माणि कुर्व्वतः।
निवृत्तफलसङ्गस्य मुक्तिर्गार्गि करे स्थिता॥ इति

यथाह श्रुतिः—

"यदेव विद्यया श्रद्धया चोपनिषदा तद् वीर्य्यवत्तरं भवतीति।"

अतः "प्लवा ह्येते सुदृढा यज्ञरूपाः" "यत् कर्म्मिणो न प्रवेदयन्ती"ति कर्म्मनिन्दा सकामकर्म्मपरैव ज्ञेया "रागात् तेनातुराः क्षीणलोकाश्च्यवन्ते" "नाकस्य पृष्ठेऽनुभूत्वेमं लोकं हीनतमं वा व्रजन्तीत्युत्तरश्रुतिभ्याम्। न हि निष्कामाः कर्म्मिणो व्रजन्ति देवलोकम्, तथा "तद् यथेह कर्म्मचितो लोकः क्षीयते, तस्मादमुत्र पुण्यचितो लोकः क्षीयते" इत्यप्येतत्पदमेव

ज्ञेयम्। तस्मादत्र महतोऽपि कर्म्मणः क्षयिष्णुत्वं सकामकर्म्मपरमेव बोध्यम्। विस्तरस्तु सूत्रभाष्येऽनुसन्धेयः।

सकामं च कर्म्मात्मोपासनमेव कार्य्यं तस्मात् सर्व्वं कामदुघत्वादित्याह अस्माद्ध्येवात्मन इति, अस्मादात्मनो यद्यदेव फलं पुत्रवित्तादि कामयते, लोकस्तत्तदेव फलं सृजते एष आत्मेति शेषः। अतो नास्ति देवतान्तरापेक्षेति भावः। श्रुत्यन्तरं च "एको बहूनां यो विदधाति कामान्" इति ॥ १५

अथो अयं वा आत्मा सर्व्वेषां भूतानां लोकः। स यज् जुहोति यद् यजते तेन देवानां लोकः, अथ यदनुब्रूते तेन ऋषीणाम्, अथ यत् पितृभ्यो निपृणाति, यत् प्रजामिच्छते तेन पितृणाम्, अथ मनुष्यान् वासयते, यदेभ्योऽशनं ददाति तेन मनुष्याणाम्, अथ यत् पशुभ्यस्तृणोदकं विन्दति तेन पशूनाम्, अथ यदस्य गृहेषु श्वापदा वयांसि आपिपीलिकाभ्य उपजीवन्ति तेन तेषां लोकः। यथाह वै स्वाय लोकायारिष्टिमिच्छेदेवं है वैवंविदे सर्व्वाणि भूतानि अरिष्टिमिच्छन्ति। तद् वा एतद् विदितं, मीमांसितं च ॥ १६

न केवलमग्निब्राह्मणयोरेव ब्रह्मत्वज्ञानं कार्य्यं परम् उद्देश्यानां देवतादीनामपि ब्रह्मत्वेन ज्ञानं कार्य्यमित्याह "अथो" इति अथो इति शिष्टवाक्यारम्भे वा इत्यवधारणे, अयं पूर्व्वोक्त आत्मापरमात्मैव सान्निध्यात् प्रकरणाच्च न तु जीवात्मा, सर्व्वेषां भूतानां प्राणिनां ब्रह्मादिस्तम्बान्तानां लोक आत्मा इति सामान्योपदेशं, "आत्मानमेव लोकमुपासीत" "य आत्मानमेव लोकमुपास्ते" इत्यनुपदोक्तश्रुतिभ्यां "स उ लोक एवे"ति कथ्यमानश्रुतेश्च, बह्निस्फुलिङ्गवत् तस्यैवांशत्वाज्जीवानां, "यथा सुदीप्ताद् बह्नेर्विस्फुलिङ्गः सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद् विविधाः सौम्य भावाः प्रजायन्ते" इयि श्रुते "अंशो नानाव्यपदेशादिति सूत्रात् "ममैवांशो जीवलोके जीवभूतः सनातनः" इति भगवदुक्तेश्च। न चात्र लोकपदं भोग्यपरम् अप्रसिद्धेः, न च गृहिणः श्वापद शकुन्तपिपीलिकादीनां भोग्या भवन्ति, परं भोग्यप्रदा एव, न च भोग्यप्रदानां भोग्यत्वं

लोकसिद्धं श्रुतिसिद्धं वा। न खलु उपजीव्या उपजीवकानां भोग्या भवन्ति। तस्मादत्र लोकपदं पूर्वोक्त-परमात्मत्वज्जीवात्मपरमेव वाच्यम्।

यतः परमात्मैव प्राणिमात्रस्यात्मा इतः सः अप्रत्यक्षो यजमानो यज् जुहोति अग्निहोत्रादि कर्म्मसु संस्कृते वह्नौ देवतोद्देशेन हविस्त्यजति यद् यजते देवताभ्यः पत्रपुष्पाद्युत्सृजति तेन कर्म्मणा देवानां लोक आत्मा उपासितो भवति, तेन च फलतः परमात्माऽप्युपासितो भवति तेषामंशित्वात् अंशांशिनोश्च भेदाभेदवत्त्वात्। एवमुत्तरत्र। आह च भगवान्—

"अहं हि सर्व्वयज्ञानां भोक्ता च प्रभुरेव च।"
भोक्तारं यज्ञतपसां सर्व्वलोकमहेश्वरम्॥ इति

अथ स यजमानो यत् अनुब्रूते वेदानधीते तेन वेदाध्ययनेन ऋषीणामात्मा उपासितो भवति, अत्राथशब्दोऽर्थान्तरे, परत्राप्येवम्। अथ यत् पितॄंस्तर्पयति प्रजामिच्छते पुत्रं कामयते पुत्रं जनयतीत्यर्थः, तेन पितॄणामात्मा उपासितो भवति।

"ऋणं यागेन देवानामृषीणां पाठकर्म्मणा।
सन्तत्या पितृलोकानां शोधयित्वा परिव्रजेदि"ति स्मृतेः।

अथ यत् मनुष्यान् अभ्यागतान् वासयते स्थानान्नादिप्रदानेन सेवते तेन तेषामात्मा उपासितो भवति, यच्च पशुभ्यो गवाश्वादिभ्यस्तृणं जलं च विन्दति ददाति तेन तेषामात्मा उपासितो भवति, अस्य गृहस्थस्य गृहेषु श्वापदाः कुक्कुरबिड़ालादयो वयांसि पक्षिणः कपोतशुकचटकादयः पिपीलिकापर्य्यन्ता उपजीवन्ति तण्डुलकणचणकगुड़ादिकमुपजीवन्ति तेन तेषामात्मा उपासितो भवति, तदेवं सर्व्वेष्वपि कर्म्मस्वात्मोपासनप्रकारः कृपया दर्शितः श्रुत्या। आत्मज्ञानसमुच्चितस्य च कर्म्मणः प्राबल्यं श्रुत्यैवोक्तं काठतः—

"यदेव श्रद्धया विद्यया चोपनिषदा तद्वीर्य्यवत्तरं भवती"ति, तदुक्तम्—

"अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैरिति ॥"

ज्ञानसमृद्धं च प्रबलं कर्म सादेन द्रुतं मोक्षदानक्षममिति प्राह श्रीभागवती गीता, तथाहि सन्न्यासकर्म्मणोरेकतरस्य श्रेयस्त्वप्रश्ने सिद्धान्तवाक्यम्—

सन्न्यासः कर्म्मयोगश्च निःश्रेयसकरावुभौ।
तयोस्तु कर्म्मसन्न्यासात् कर्म्मयोगो विशिष्यते ॥" इति

अत्र कर्मयोगस्यैव श्रेष्ठत्वं काठतः प्रोक्तं, तत्रादौ सन्न्यासकर्म्मयोगयोः साम्यं प्रदर्श्य पश्चाज्ज्ञानसमुच्चितकर्म्मयोगस्य श्रेष्ठत्वे अचिरेण ब्रह्मदर्शनात् क्षिप्रं मोक्षप्रदत्वमेव हेतुरुक्तो भगवता यथा—

"सन्न्यासस्तु महाबाहो दुःखमाप्तुमयोगतः।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छती"ति ॥

अत्रत्यब्रह्मपदस्य परमात्मपरत्वं मधुसूदनेनाप्युक्तम्, किन्तु महता प्रयासेनाहृत्य कथञ्चिदप्रसिद्धार्थप्रदर्शनं विप्लवकृतां दुराकृत प्रसुतमेव। एवञ्च विचारमुखेनैव कर्म्मणः श्रैष्ठ्यप्रतिपादनाद् विवक्षित मेवैतदिति बुध्यते स्पष्टम्, अतोऽस्यापि स्तुतिपरतया व्याख्यानं शास्त्रार्था पलाप एव द्वेषात्। मनुनाऽप्युक्ता नैष्ठिकब्रह्मचारिणोऽनायासं मोक्षस्येति यथा—

"आ समाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम्।
स गच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतम् ॥ इति
एवं चरति यो विप्रो ब्रह्मचर्य्यमविप्लुतः।
स गच्छत्युत्तमस्थानं न चेहजायते पुनरिति च ॥"

सपरिकरब्रह्मणा साङ्गकर्म्मणामभेदं वदन्ती श्रुतिर्गुण कर्म्मणोः समुच्चयमेव दर्शितवती, यथा—"स आगच्छति विकलानामनन्दो बृहद्रथान्तरे सामनी पूर्व्वौ पादौ, श्यैतनोधसे चापरौ पादावि"त्यादि, व्याख्या चास्याः द्वितीयसूत्रभाष्ये द्रष्टव्या। आह च स्मृतिः—

"कर्त्ता क्रियाणां स च इज्यते क्रतुः, स एव तत्कर्म्मफलं च यस्य यत्।
स्तु वादि तत्साधनमप्यशेषतो हरेर्न किञ्चिद्व्यतिरिक्तमस्ति वै ॥" इति

श्रीभगवद्गीता च—

"अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधम्।
तथा—मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतमि"ति ॥
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्मसमाधिना ॥" इति

श्रीमद्भागवते च भगवन्तं प्रति युधिष्ठिरवाक्यं—

"क्रतुराजेन गोविन्द राजसूयेन पावनीः।
यथा विभूतीर्भवतस्तं सम्पादय नः प्रभो ॥" इति

अन्यत्र—

"देशः कालः पृथग्द्रव्यं मन्त्र-तन्त्रर्त्विजोऽग्नयः।
देवता यजमानश्च क्रतुर्धर्म्मश्च यन्मयः।
स एव भगवान् साक्षाद् विष्णुर्योगेश्वरेश्वरः।
जातो यदुष्वित्यशृन्म अपि मूढ़ा न विद्महे ॥" इति

"स्वाय लोकाय" स्वात्मने, "अरिष्टिमि"ति, रिष्टिरशुभं तद्भिन्नामरिष्टिं शुभमिच्छन्ति, 'एवंविदे' जीवात्मनामुपासने परमात्मैवोपासितो भवतीत्येवं विद्यावन्तं प्रति सर्व्वाणि भूतानि सर्व्वे प्राणिनः अरिष्टिं शुभं कामयन्ते इत्यर्थः। तदेतत् तच्चैवं जीवसेवा परमात्मोपासनं भवतीत्येतत् कर्त्तव्यमित्येवं रूपं विदितं ज्ञातं मीमांसितं विचारितं चेत्यर्थः ॥

कर्म्म ज्ञानसमुच्चितं वितनुते श्रेय बलिष्ठं ध्रुवम्,
लोके राजसमाश्रितो हि बलिनं स्पर्द्धेत साधारणः।
क्षिप्रं संसृतिबन्धनक्षपणकृत् प्रोवाच विष्णुः स्वयम्
प्राहुर्योगविदोऽपि तत् श्रुतिहृतं कर्म्मैव कार्य्यं बुधैः ॥
राजर्षयो ये च महर्षयो वा व्यासादयः पान्डुसुतादयश्च।
चक्रुः प्रयत्नाद् भवबन्धमुक्त्यै कर्म्मैव विज्ञानबलोर्जितं च ॥

इति शम्

—( क्रमशः )

शयित्वा मृड़ित्वा। गुधमपि पठन्ति गुधित्वा। रुद-वेत्तीति कपिलः; रुदित्वा॥

८०। नरामोद्भवादेव थ-फान्तात् सेट्क्त्वा कपिलो वा, वञ्चि-लुञ्च्यृति-तृषि-मृषि-। कृशेश्च।

श्रथित्वा श्रन्थित्वा, गुफित्वा गुम्फित्वा, वचित्वा वञ्चित्वा, ऋतित्वा अर्त्तित्वा। कृश तनुकरणे कृशित्वा कर्शित्वा। नियमोऽयम्। ततो नरामोद्भवत्वाभावे तु, यववर्जित-विष्णुजनान्तादिति पक्षेऽपि न कपिलः। कुथ पूतीभावे कोथित्वा। रिफ-हिंसादौ रेफित्वा। थ-फान्तादेव नियमादन्यत्र तु सेट्त्वा न कपिल इति प्रवर्त्तते। स्रंसित्वा

---

वाद् गोविन्दः। मृड़ित्वेति कपिलत्वाद् गोविन्दाभावः। गुधमपि पठन्तीति वर्जन इति शेषः। गुधित्वेति गुध परिवेष्टने। रुद-वेत्तीति। रुदवेत्ति-मुषग्रहिष्वपि प्रच्छः क्त्वा सनौ कपिलाविति सूत्रम्॥

८०। नरा। नराम उद्भवो यस्य तस्मादेव थ-फान्ताद्धातोरुत्तरे सेट् त्वा प्रत्ययः कपिलो वा भवति। नियमोऽयम्। वञ्चि। वञ्चु गतौ लुञ्च अपनयने ऋत घृणायां सौत्रा धातवः। ञितृषा पिपासायां मृष क्षमायां इत्येतेभ्यः कृशेश्च उत्तरः सेट्क्त्वाप्रत्ययः कपिलो वा भवति। सेट्क्त्वा न कपिल इत्यादिना निषेधे प्राप्ते विभाषा। श्रथित्वेति श्रन्थ मोचने कपिलत्वान्नरामहरः। श्रन्थित्वेति कपिलत्वाभान्नरामहराभावः। गुम्फित्वेति गुम्फ ग्रन्थे पूर्ववत्। वचित्वा वञ्चित्वेति धातूनामनेकार्थत्वात् प्रलम्भनमत्रार्थः। ऋतित्वेति आय ईयङ् कमेर्णिङ् च रामधातुके वेति सूत्रमस्ति, अतः ऋतेरीयङ् इति पक्षे न ईयङ् कपिलत्वाद् गोविन्दाभावः; पक्षे गोविन्दः। अर्त्तित्वेति। एवं कृशित्वा कर्शित्वा इति। यववर्जितेति। यववर्जितविष्णुजनान्ताच्चतुःसनोद्भवाद्विष्णु-जनादेः सेट्क्त्वा सनौ कपिलौ वेति सूत्रम्। पूतीभावे पवित्रीभवने। कोथित्वेति कपिलत्वाभावाद् गोविन्दः। एवं रेफित्वेति। स्रंसित्वेति स्रंसु अधःपतने कपिलत्वाभावान्नरामहराभावः। विकल्प एवेति थफान्तत्वाभावादिति शेषः। द्योतित्वा द्युतित्वेति द्युत दीप्तौ। वसतीति अनेनेट्। वसति-

इह तु यववर्जितेति विकल्प एव। क्षोतित्वा। वसति-क्षुधिभ्यामित्यादि। क्षोधित्वा क्षुधित्वा इत्यादि॥

८१। जॄव्रश्चिभ्यामिट्क्त्वि।

जरित्वा। ॠरामवृभ्य इटस्त्रिविक्रमो वा न तु परपदसौकामपालाधोक्षजयोश्च इति, जरीत्वा। व्रश्चित्वा॥

८२। उरामेतो वेट्क्त्वि।

शमित्वा। हरिवेणवन्तोद्धवस्य त्रिविक्रमः कौ कंसारिवैष्णवे च क्त्वि तु क्रमो वा, शान्त्वा। क्रान्त्वा क्रन्त्वा क्रमित्वा। क्लिश-पूङ्भ्यां वेति वेट्। क्लिष्ट्वा क्लिशित्वा। पूत्वा पवित्वा॥

८३। जान्तनशोरुद्धव-नरामहरो वा वैष्णवादिक्त्वि।

अक्त्वा अङ्क्त्वा, भक्त्वा भङ्क्त्वा, नष्ट्वा नंष्ट्वा। वैष्णवादीति

---

क्षुधिभ्यामित्यादीत्यादिपदेन लुभादीनां ग्रहणम्। क्षोधित्वेति क्षुध बुभुक्षायाम्॥

८१। जॄ। क्त्वि परस्मिन् जॄव्रश्चिभ्यामुत्तरे इट् स्यात्। जरित्वेति जॄष वयोहानौ श्रिञो जागृवर्जेत्यादिना निषेधे प्राप्ते विधानम्। ॠरामेति अनेन पक्षे इटस्त्रिविक्रमः जरीत्वेति। व्रश्चित्वेति ओव्रश्च् छेदने उरामेत्त्वादिटि विकल्पे प्राप्ते नित्यार्थं वचनम्। सेट् क्त्वा न कपिलो मृड्मृदकुषक्लिशवदवसो विनेति कपिलत्वनिषेधः, अतो ग्रहिज्येत्यादिना न सङ्कर्षणः। वृश्चित्वेति पाठः क्वचि दृश्यते, स त्वपाठ एव॥

८२। उरा। क्त्वि परस्मिन् उरामोद्धातोरुत्तरे इड् वा भवति। शमित्वेति शमु उपशमे। शान्त्वेति इड्भावपक्षे। क्रन्त्वा क्रान्त्वेति क्रमु पादविक्षेपे क्त्वि क्रमो वेति पाक्षिकस्त्रिविक्रमः। क्रमित्वेति इट् पक्षे। क्लिशित्वेति सेट्क्त्वा न कपिल इत्यादौ क्लिशो वर्जनमुक्तमतो न कपिलत्वनिषेधः, अतो न गोविन्दः। पवित्वेति अत्र कपिलत्वनिषेधः; अतो गोविन्दः॥

८३। जान्त। वैष्णवादिक्त्वि परस्मिन् जान्तधातोर्नशधातोश्च उद्धव-नरामहरो वा भवति। अक्त्वेति अञ्जू व्यक्ति-म्रक्षण-गतिषु ऊदित्वाद्विकल्पितेट्। नरामहराभावपक्षे अक्त्वेति भञ्जो आमर्दने सहजानिट्। नष्ट्वेति नश अदर्शने

किम्? अञ्जित्वा। जन-खन-सनासित्यादि। खात्वा खनित्वा। द्यतिस्यतीतीत्वम्। दित्वा। दधातेर्हिः। हित्वा॥

८४। जहातेर्हिः क्त्वि।

हित्वा। अदो जग्धिः, जग्ध्वा॥

८५। क्त्वो यबनञ् पूर्व्वसमासे।

ल्यप् इति पाणिनिः।

अन्तर्भिन्नपदत्वेऽप्येकनामत्वेन योजनं समासः॥

८६। उपेन्द्रोर्य्यादिव्यन्ताजन्तपूर्व्वपदानि कृदन्तेन समस्यन्ते, पूर्व्वपदन्त्वमन्तमेवाव्ययकृदन्तेन।

कृत्सामान्यग्रहणात् पूर्व्वत्रापीदमारोहति। उदाहरणानि तु ज्ञेयानि। अन्तरङ्गस्वादेर्महाहर एकपदत्वारम्भे॥

---

मस्जिनशोर्नुम् वैष्णव इति नुम् नरामहरः। नरामहराभावपक्षे नष्ट्वेति। रधादेरिड् विकल्पितेट्त्वमतो नशित्वेति च। अन्जू धातोरिट्पक्षे अञ्जित्वेति। खात्वेति खनु अवदाणे। इट्पक्षे खनित्वेति। वैष्णवादित्वाभावान्नात्रारामः। दित्वेति दोऽवखण्डने। हित्वेति डु धाञ् धारण-पोषणयोः॥

८४। जहा। क्त्विपरस्मिन् जहातेः स्थाने हिर्भवति। हित्वेति ओ हाक त्यागे। जहातेरिति निर्द्देशः ओ हाङ् गतावित्यस्य निरासार्थः॥

८५। क्त्वो समासे सति अनञ् पूर्व्वधातौ विहितस्य क्त्वास्थाने यव् भवति। नञ्पूर्व्वात्क्त्विति वक्ष्यते, अतो नञ् पूर्व्व इति समास इत्यस्य विशेषणमिति न वाच्यम्। अनञ्पूर्व्वादिति वा पाठः। समासलक्षणमाह अन्तर्भिन्नपदत्वेऽपीति॥

८६। उपे। उपेन्द्रश्च उर्य्यादिश्च व्यन्तश्च अजन्तश्च पूर्व्वपदश्च तानि कृदन्तेन सह समस्यन्ते। पूर्व्व। पूर्व्वपदन्तु अमन्तमेव अव्ययकृदन्तेन समस्यते। नियमोऽयम्। कृदिति। इदं सूत्रं पूर्व्वत्रापि आहरतीति तस्मादुक्तकृत्-प्रत्ययान्तेनापि अनेन समासो भवतीति। उदाहरणानि ज्ञेयानीति। तानि यथा। प्रभवन् पराभवन् प्रकुर्व्वाणः प्रभेजिवान् प्रचक्राणः प्रक्रीड़ितवान् संस्तुतः उरीकुर्व्वन् इत्यादीनि। अन्तरङ्गेति अनेन स्वादेर्महाहरः॥

८७। वामनात्तुक् पृथौ।

उपेन्द्रे प्रकृत्य पराभूय।

उर्य्यादिगणः। उरीकृत्य उररीकृत्य। उरी उररी चाङ्गीकार-विस्तारयोः। अदित्यादयोऽनुकरणशब्दा न चेदितिशब्दपराः। कारिका शास्त्रार्थसमाधानपद्ये। पुरोऽग्रादौ। सदसच्छब्दावानादरादरयोः। अलं भूषणे। हस्ते पाणौ चोपयमने। प्राध्वं बन्धनहेतावानुकूल्ये। जीविकोपनिषदौ तत्सादृश्ये। अदस्तत्पूर्व्वं यदि परं प्रति न ज्ञाप्यते नोच्यते वा। अस्तमदर्शनार्थम्। एतत्सर्व्वं कृञि ; कृञि परे सति उर्य्यादिः। अन्तर्हन्तौ न तु परिग्रहे। कणे-मनसी हन्तौ तृप्त्याम्। अच्छेत्याभिमुख्यवचनमभिशब्दार्थं वा गत्यर्थे वदे च।

---

८७। वाम। पित् पृथुस्तस्मिन् परे वामनादुत्तरे तुक् भवति। उकावितौ। क्रमेण उदाहरणानि दर्शयति उपेन्द्र इत्यादिना। पराभूयेति भू सत्तायाम्। उरीकृत्य उररीकृत्येति डु कृञ् करणे। उरीति। उरी उररी च अङ्गीकार-विस्तारयोर्वर्त्तते। अदिति। अदित्यादयोऽनुकरणशब्दा उर्य्यादयो भवन्ति चेद्यति इतिशब्दपरा न स्युः। कारि। शास्त्रार्थस्य समाधानं यस्मात् तादृश-पद्ये वर्त्तमानः कारिकाशब्दं उर्य्यादिर्भवति। पद्यं श्लोकः। उदाहरणन्तु कारिकाकृत्येति। यत्र तु कारिकाशब्दः णकप्रत्ययान्तस्तत्र कारिकां कृत्वेति भवति। पुरो। अग्रादौ वर्त्तमानः पुरःशब्दः उर्य्यादिर्भवति। पुरःशब्दः सान्तोऽव्ययम् उदाहरणन्तु पुरस्कृत्येति। पुरस्कृत्येति नमःपुरसोर्गतिसंज्ञयोः कृञीति विष्णुसर्गस्य सः। सद। अभ्यर्हितविषयः प्रीत्या सम्भ्रम आदरस्तत्र वर्त्तमानः सच्छब्द उर्य्यादिर्भवति। अनादरे वर्त्तमानः असच्छब्दश्च उर्य्यादि-र्भवति ; अनादरस्तिरस्कारः। उदाहरणन्तु सत्कृत्य असत्कृत्येति। सच्छब्दस्य आदरार्थत्वाभावे तु सत्कृत्वा काष्ठं गत इति शोभनं विद्यमानं वा कृत्वेत्यर्थः। अलं,—भूषणेऽर्थे वर्त्तमानोऽलंशब्द उर्य्यादिर्भवति। उदाहरणन्तु अलङ्कृत्येति। भूषण इति किम्? अलं भुक्त्वा न भोक्तव्यमित्यर्थः। हस्ते। उपयमने वाच्ये हस्ते पाणौ च उर्य्यादिर्भवति। उपयमनं विवाहः। विवाहो-

तिरोऽन्तर्द्धिवचनं कृञि तु वा। इतः कृञि विकल्पः, कृञि परे एतेषां वक्ष्यमाणानाम् अनञ्पूर्व्वसमासो वा स्यात्। उपाजे अन्वाजे च सामर्थ्याधाने। साक्षान्मिथ्यालवर्ण वशे प्रादुर् आविस् नमश्च प्रसिद्धार्थाः। उरसि मनसी अन्तःकरणे। मध्ये पदे न तु स्पर्शे। निवचने वचनाभावे इति।

एते उपेन्द्रवदाख्याते कृति च धातोः प्राक् प्रयोज्या गतिसंज्ञाः।

तत्र दुर्गमोदाहरणानि। अदिति, अतृकृत्य स्नितृकृत्य नेह अदिति

---

पयमौ समाविस्नमरः। हस्ते पाणौ इत्येतौ सप्तम्यन्तौ विवाहानुकृतौ सप्तम्यन्तानुकरणसामर्थ्यात् समासे कृते न खादिमहाहरः। एतावव्ययौ इति केचित्। उदाहरणन्तु हस्तेकृत्य पाणौकृत्येति विवाहं कृत्वेत्यर्थः। स्वीकारमात्र इति तु क्रमदीश्वरादयः। हस्तेकृत्य महास्त्राणीति भट्टिरपि। उपयमन इति किम्? हस्ते कृत्वा परस्य मालां वर्त्तते। प्राध्वं। बन्धनहेतावानुकूल्ये वर्त्तमानः प्राध्वंशब्द उर्य्यादिर्भवति। बन्धनहेताविति बन्धनस्य हेतुरिति विग्रहः। प्राध्वमिति मरामान्तमव्ययम्। जीवि। तत्सादृश्ये विषये जीविकोपनिषदौ उर्य्यादी भवतः। जीविका जीवनोपायः, उपनिषत् तत्त्वज्ञानहेतुर्विद्या। जीविकाशब्दोदाहरणं वक्ष्यते। उपनिषच्छब्दोदाहरणं यथा उपनिषत्कृत्य उपनिषदमिव कृत्वेत्यर्थः। तत्सादृश्य इति किम्? जीविकां कृत्वा व्याधो गतः। अदः। अदःशब्द उर्य्यादिर्भवति। यदि तत्पूर्व्वकं परं प्रति नो ज्ञाप्यते नोच्यते वा। अदःशब्दः सर्व्वादिगणस्थः। अस्तं। अदर्शनार्थोऽस्तंशब्द उर्य्यादिर्भवति। अस्तंशब्दोऽव्ययः। उदाहरणन्तु अस्तं कृत्येति। एतत्। एतत् सर्व्वं कृञि कृञ्धातौ परे वर्त्तमानं सत् उर्य्यादि भवति। परिभाषा-सूत्रमेतत्; कृञीत्युपलक्षणं, तेन पुरोऽग्रादाविति धातोरपि प्रवर्त्तते। अतएव दुरोसाहं पुरोधाय धाम स्वायम्भुवं ययुरिति कालिदासः। अन्त। हन्वौ हनधातौ परे अन्तःशब्द उर्य्यादिर्भवति। परिग्रहेऽर्थे तु सति न भवति। कणे। तृष्त्यां गम्यमानायां हन्तौ परे कणेशब्दो मनःशब्दश्च उर्य्यादिर्भवति।

कृत्वा। प्राध्वमिति प्राध्वङ्कृत्य स्थितो रामः। सर्व्वानुत्तरकोशलाम् आनुकूल्येन बद्ध्वा इत्यर्थः।

जीविकाकृत्य जीविकामिव कृत्वेत्यर्थः। अदःकृत्य गच्छति। नेह अदः कृत्वा गच्छ त्वम्, अदः कृत्वा गच्छतीति वा परं प्रतिवक्ति। अन्तेहत्य मध्ये हत्येत्यर्थः। नेह अन्तर्हत्वा परिगृह्य इत्यर्थः। कणेहत्य कृष्णं पश्यति मनोहत्य कृष्णं पश्यति तृप्तिं यावदित्यर्थः। उरसि कृत्य कृत्वा वा निश्चित्य इत्यर्थः। एव मनसि। श्रुतिं मध्येकृत्य गीतां व्याचष्टे कृत्वा वा। एवं श्रीकृष्णस्य पदेकृत्य मनः शेते। नेह हस्तं मध्ये पदे वाकृत्वा कृष्णं भूषयति। एवं निवचनेकृत्येति।

---

अच्छे। गत्यर्थे वदधातौ च परे आभिमुख्यवचनम् अभिशब्दार्थं वा अच्छेति उर्य्यादिर्भवति। उदाहरणन्तु अच्छगत्य अच्छसृत्येति अभिमुखं गत्वेत्यर्थः। अच्छोद्येति च अभिमुखमुदित्वेत्यर्थः॥

तिरो। अन्तर्द्धिवचनस्तिरःशब्द उर्य्यादिर्भवति। उदाहरणन्तु तिरोभूयेति व्यवहितो भूत्वेत्यर्थः। अन्तर्द्धिवचनमिति किम् तिरोभूत्वा गतः वक्रो भूत्वेत्यर्थः।

कृञि। कृञि तु परे अन्तर्द्धिवचनस्तिरःशब्दः उर्य्यादिर्वा भवति। उदाहरणन्तु तिरस्कृत्य तिरस्कृत्वा इति। तिरसस्त्वगतौ च वेति विष्णुसर्गस्य सः। इतः। इतः परं कृञि परे विकल्पो भवति उर्य्यादित्वस्येति शेषः। उपा। सामर्थ्याधाने वर्त्तमाने उपाजेशब्दः अन्वाजेशब्दश्च कृञि परे उर्य्यादी वा भवतः। अर्थाभिव्यक्तये सामर्थ्याधानम् इत्युक्तम्, न त्वर्थान्तरनिवृत्तये अनयोरर्थान्तराभावात्। उदाहरणन्तु उपाजेकृत्य उपाजेकृत्वा अन्वाजेकृत्य अन्वाजेकृत्वेति। साक्षा। प्रसिद्धार्थाः साक्षादादयः शब्दाः कृञि परे उर्य्यादयो वा भवन्ति। उदाहरणन्तु साक्षात् कृत्वेत्यादि। उरसि अन्तःकरणे वर्त्तमानौ उरसि-मनसिशब्दौ कृञि परे उर्य्यादी वा भवतः। मध्य। मध्येशब्दः पदेशब्दश्च कृञि परे उर्य्यादिर्वा भवति। स्पर्शार्थे तु न भवति। निव। वचनाभावे वर्त्तमानो निवचनेशब्दः कृञि परे उर्य्यादिर्वा भवति।

अथ व्याख्यौ तद्धितौ। अवैष्णवं वैष्णवं कृत्वेत्यर्थे विः, कृभ्वनु-प्रयोगः। वेर्ईरः। पूर्व्वारामस्य ईरामः। वैष्णवीकृत्य। आच, सत्याकृत्य। पूर्व्वपदं वक्ष्यते॥

८८। मिलित्वादेशः परवत्तुकि।

अधीत्य प्रेत्य। नञ् पूर्व्वात्तु—

---

एत इति। एते उर्य्यादयः शब्दाः। दुर्गमोदाहरणानीति दर्श्यन्ते इति शेषः। अदितीति सूत्रोल्लेखः। नेहेतीति शब्दपरत्वादिति शेषः। प्राध्व-ङ्कृत्येति। रामः श्रीरघुनन्दनः। उत्तरकोशलान् अयोध्यावासिनः। प्राध्वङ्कृत्ये-त्यस्यार्थमाह आनुकूल्येनेति। अदः कृत्वा गच्छेति। अत्र पर प्रति ज्ञापना भूता, अतो नोर्य्यादित्वम् एतदेवाह परं प्रति वक्तीति। कृत्वा वा उरसि कृत्वा वा। अन्तःकरण इति किम्? उरसि कृत्वा हस्तं शेते हस्तो वक्षसि कृत्वेत्यर्थः। श्रुति स्वयं व्याचष्टे कथयति कृत्वा वा श्रीकृष्णस्येति शेषः। निवचनेकृत्येत्युक्तं निवचने कृत्वेति च ज्ञेयं वचनं नियम्येत्यर्थः। अथेति। इत्यर्थे विरिति। अभूत-तद्भावे कृभ्वस्तियोगे विरित्यनेनेति शेषः। कृभ्वस्तीनां योगं विना विप्रत्ययो न भवति। अतोऽवैष्णवं कृत्वेति कृञो योग उक्तः। कृञोऽनु-प्रयोग इति यदुक्तं, तन्नावकलितम् अनुप्रयोगस्य प्रसङ्गाभावात्। वेर्ईर इति केवलस्य प्रत्ययस्य वेर्ईर इत्यनेनेति शेषः। किन्तु तद्धितप्रकरणे विः सर्व्व इदिति वक्ष्यते। अतोऽत्रापि विः सर्व्व इदिति पाठ उचितः। पूर्व्वारामस्य इराम इति अद्वयस्य वा वीराम इत्यनेनेति शेषः। सत्याकृत्येति सत्यादशपथ इत्यनेनाच् मयैतद्ग्रहीतव्यमिति निश्चित्येत्यर्थः॥

८८। मिलि। तुकि विषये मिलित्वादेशः परवद्भवति। अधीत्येति। इङ् अध्ययने। मिलित्वादेशस्य ईरामस्य इरामवत्त्वम् अतस्तुक्। प्रेत्येति। इन् गतौ मिलित्वादेशस्य एरामस्य इरामवत्त्वात् तुक्। ननु अधीत्य प्रेत्येत्यादौ तुकि कृते पश्चान्मिलित्वादेशः करणीयः किमनेन सूत्रेणेति चेत्तयोच्यते मिलित्वा-देशे कृते निमित्तापाये नैमित्तिकस्याप्यपाय इति न्यायेन तु भिन्नवृत्ति-र्भवतीत्याशङ्का स्यात् तन्निरासार्थं वचनम्॥

८९। नञोऽराशेषः सर्व्वेश्वरे तु नुट् च समासे।
आख्याते त्वाक्षेपे।

अकृत्वा अनीक्षित्वा। आख्याते, हरिमभजसि अनेधि त्वम्॥

९०। हरिवेणुहरविधिर्वा यपि नान्तवर्जम्॥

आगत्य आगम्य, प्रणत्य प्रणम्य। मान्तानान्तु नित्यमेव। प्रहत्य वितत्य संमत्य। कथं तृणु वितृत्य, क्षिणु विक्षित्य इति न विकल्पः? ऋद्वये ररामांशसद्भावात् सर्व्वेश्वरादिव्यवधानेऽपि, रषयोर्निमित्तत्वात् "रषाभ्यां टुस्तवर्गजः" इति प्रवर्त्तते। अदो जग्धिः—

---

८९। नञो। समासे सति नञोऽरामशेषो भवति। सर्व्वेश्वरे तु परे सति नुट् च भवति। आख्याते तु आक्षेपे गम्यमाने नञोऽरामशेषः भवति सर्व्वेश्वरे तु नुट् च। अकृत्वेति। नञ इत्यनेन समासः नञ् पूर्व्वत्वात् न क्त्वो यप्। अनीक्षित्वेति नञोऽरामशेषो नुट् च। हरिमभजसि अनेधित्वमिति अत्राक्षेपो गम्यते। हरिं न भजसि, अतः न एधि पृथिव्यां न तिष्ठेत्यर्थः॥

९०। हरि। यपि परे नान्तान् धातून् वर्जयित्वा हरिवेणुहरविधिर्वा भवति। आगत्य आगम्येति। गमऌगतौ अत्र नित्यं प्राप्ते विभाषा। प्रणत्य प्रणम्येति। नम प्रह्वत्वे शब्दे च। मान्तानान्तु नित्यमेवेति हरिवेण्वन्त-सहजानिटामित्यादिनेति शेषः। प्रहत्य वितत्य संयत्येति हन हिंसागत्योः तनु विस्तारे मनु ज्ञाने सर्व्वत्र नरामहरस्तुक् च। कथमिति। वितृत्येति तृणु अदने विक्षित्येति क्षिणु हिंसायाम् अनयोस्तवर्गान्तत्वं न दृश्यते, तर्हि कथं न विकल्प इत्ययमत्र विरोधः। सिद्धान्तमाह ऋद्वय इति। तृणु धातौ ऋत्वये ररामांशसद्भावात् रषाभ्यां टुस्तवर्गज इति प्रवर्त्तते। क्षिणु धातौ सर्व्वेश्वरादि-व्यवधानेऽपि रषाया निमित्तत्वात् रषाभ्यां टुस्तवर्गज इति प्रवर्त्तते। अष्टवर्गा-न्तत्वेऽपि तवर्गान्तत्वमिति नित्यमेव हरिवेणुहरः। तृणु धातौ ऋरामे ररामांशसद्भावात् टवर्गान्तस्य तवर्गान्तजातत्वम्। क्षिणु धातौ सर्व्वेश्वरस्य व्यवधाने षरामस्य णत्वविधौ न निमित्तत्वम्। अदो जग्धिरिति अदो जग्धिः कपिल तरामे यपि चेत्यनेनेति शेषः। कस्मिन् प्रकरणे नामधातुप्रत्ययानामादेशस्य

(१२७) घोणा तु प्रोथमस्त्रियाम् ॥

(१२८) कविका तु खलीनोऽस्त्री (१२९) शफं क्लीवे खुरः पुमान् ।

(१३०) पुच्छोऽस्त्री लूम-लाङ्गूले (१३१) बालहस्तश्च बालधिः ॥

(१३२) त्रिषूपावृत्त लुठितौ परावृत्ते मुहुर्भुवि ।

(१३३) याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः ॥

(१३४) असौ पुष्यरथश्चक्र-यानं न समराय यत् ।

---

अश्वानां घोणा नासा प्रोथम् । प्रोथृ पर्य्याप्तौ, करणे घञ् ॥१२७

कवीति । द्वयं "लागाम" वा "कड़ियालि" इति ख्याते । कीर्य्यते विक्षिप्यतेऽनया अल्, कः स्वार्थे स्त्रियामादा । खलं स्थानं प्रापयति ईनः । कः स्वार्थे ॥१२८

शेति । द्वयं खुरे । शव गतौ पृषोदरादित्वाद्वस्य फत्वम् । खुर विलेखने कः । "द्वितीयस्तु कवर्गस्य गवादीनां खुरे भवे"दिति प्रागुक्तम् ॥१२९

पुच्छ इति त्रयं लाङ्गूलसामान्ये । पुछ प्रमादेऽच् । अस्त्रीत्यनेनैव सम्बन्धः । 'लाङ्गूले पुच्छमस्त्रिया'मित्यमरमालातः । लूयते मक् । नान्त इति कश्चित् । लङ्गेरुलञ् ॥१३०

बालेति । द्वयं लोमयुक्ते लाङ्गूले । बालसमूहो बालहस्तः । बालो धीयतेऽस्मिन् किः । एकपर्य्याय इत्यन्यः ॥१३१

उपेति । द्वयं पुनःपुनर्भूमौ लुठिताश्वे । उपाङ्पूर्व्वाद्वृतेः लुठेरपि कर्त्तरि क्तः ॥१३२

शेति । त्रयं युद्धार्थचक्रयुक्तयाने । शतमङ्गान्यस्य । स्यद्यते गम्यतेऽनेन युट् । रम्यतेऽनेन थः मलोपश्च ॥१३३

यत्र युद्धार्थं चक्रयुक्तयानम् अपि तु क्रीड़ाभ्रमणार्थमसौ पुष्परथो विहारार्थ इति रत्नकोषः । पूर्व्वपदमत्र अन्तस्थयकारान्तं ;"महारथः पुष्यरथः रथाङ्गी, क्षिप्रं क्षपानाथ इवाधिरूढ़ः" इति माघे नक्षत्रवाचिना पुष्यशब्देन सह श्लेषात् ॥१३४

(१३५) कर्णीरथः प्रवहणं हयनञ्च समं त्रयम् ॥
(१३६) क्लीबेऽनः शकटोऽस्त्री स्याद्-
(१३७) गन्त्री कम्बलिवाह्यकम् ।
(१३८) शिविका याप्ययानं स्या-
(१३९) द्दोला प्रेङ्खादिकाः स्त्रियाम् ॥
(१४०) उभौ तु द्वैप-वैयाघ्रौ द्वीपिचर्म्मावृते रथे ।
(१४१) पाण्डुकम्बलसंवीतः स्यन्दनः पाण्डुकम्बली ।
रथे काम्बलवास्त्राद्याः कम्बलादिभिरावृते ॥

केति । त्रयं स्त्रीणां नयनार्थं स्वल्परथे । 'कर्णीरथस्थां रघुवीरपत्नी'-मिति कालिदासः । प्रवहेर्हयतेश्च युट् ॥१३५

अन इति । द्वयं शकटे । अतितेरसुन् । शकेरटन् ॥१३६

सास्ना गलकम्बलस्तद्योगात् कम्बलो गौः, तद्वाह्ये शकटे गन्त्री । गमेष्ट्रन् ङीयामीः । 'प्रवारेऽप्युत्तरासङ्गे सास्नायामपि कम्बल' इति रुद्रः ॥१३७

शिवीति । द्वयं चतुर्दोलाविशेषे । शवगतौ पृषोदरादित्वात्, तालव्यादिः । याप्यं प्रापणीयं यानम् । यद्वा याप्यैरधमैर्यायते नीयते याप्ययानम् । रेफयाप्यावमाधमा इति वक्ष्यते ॥१३८

दोला स्वनामख्याता । दुल उत्क्षेपे चुरादिः, भीषिचिन्तीत्यादिना अङ् । प्रेङ्ख्यते गुरोरः । उद्यानादिषु क्रीड़ार्थवृक्षबद्धकाष्ठादिमयी दुलनीति ख्याता । 'दोला प्रेङ्खः पुमान् प्रेङ्खा निश्रेणिस्त्वधिरोहिणी' इति रत्नकोषः । अतः प्रेङ्खा द्वयोः । आदिना हिल्लोलखट्वा । घटादिवाह्यापि दोला ॥१३९

द्वैपेति । द्वयं व्याघ्रचर्म्मणावृते रथे । द्विपिनो व्याघ्रस्य चर्म्म द्वैपं, वैयाघ्रं, चर्म्म तेनावृतमिति पुनरण् ॥१४०

पाण्डुकम्बलेन संवीतः स्यन्दनो रथः पाण्डुकम्बली इन् कम्बलेनावृतः एवं वस्त्रादिः । द्वैपवैयाघ्रकाम्बलादिषु ॥१४१

त्रिषु द्वैपादयो (१४२) रथ्या रथकड्या रथव्रजे ।
(१४३) धुः स्त्री क्लीबे यानमुखं स्या-(१४४) द्रथाङ्गमपस्करः ॥
(१४५) चक्रं रथाङ्गं
(१४६) तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमान् ।
(१४७) पिण्डिका नाभि-(१४८) रक्षाग्रकीलके तु द्वयोरणिः ॥
(१४९) रथगुप्ति-र्व्वरूथो ना (१५०) कूवरस्तु युगन्धरः ।

---

रेति द्वयं रथसमूहे। समूहे यत् कड्यप्रत्ययौ ॥१४२

धुरिति। द्वयं रथादेः पुरोभागे। धुर्व्वेः क्विपि वह्लोप्याविति वलोपः। यानस्य मुखं पुरोभागः ॥१४३

रथेति। द्वयं रथावयवसामान्ये। अपस्करादयश्चेति साधुः ॥१४४

चेति। द्वयं रथचक्रे। क्रियते पुरोगमनमनेन बाहुलकात् कप्रत्ययो द्विरुक्तश्च। रथस्याङ्गम् ॥१४५

नेमिरिति। द्वयं चक्रान्तभागे। नयति चक्रं मिः, नेमी च। प्रधीयते प्रलीयतेऽनेन उपसर्गे दः किः ॥१४६

पीति। द्वयं रथचक्रमध्ये, यत्र सर्व्वाणि काष्ठानि आसज्यन्ते तत्र। पिण्डिका साहचर्य्यात् नाभिः स्त्री ॥१४७

अक्षः शकटस्तदग्रकीलकेऽणिः। अनितेरिः। "अक्षो विभीतके निम्बे शकट-व्यवहारयोः। रथस्यावयवे। कर्षे पावकेऽप्यक्षमिन्द्रिये" इत्यजयः। आनिरपि।—'सीमाग्राक्षाग्रकीलेषु स्यादानिरनिवद्वयो'रिति रुद्रः। अणरणेति मूर्द्धन्यान्ताद्दण्डकादिप्रत्यये मुर्द्धन्यान्तोऽपि ॥१४८

रथेति द्वयं शत्रुशस्त्रादेरात्मरक्षार्थं रथावरणे। वृहक्वृभ्य ऊथः ॥१४९

कूवेति द्वयं रथस्य युगकाष्ठं यत्रासज्यते तत्र। कुं पृथिवीं वृणोत्याच्छादयति अच् बाहुलकाद्दीर्घः। युगं धारयत्यवस्थापयति नाम्नीत्यादिना खश् ह्रस्वश्च संज्ञात्वात् ॥१५०

(१५१) अनुकर्षो दार्व्वधःस्थं (१५२) प्रासङ्गो ना युगाद् युगः ॥
(१५३) सर्व्वं स्याद्वाहनं यानं युग्यं पत्रञ्च धोरणम् ।
(१५४) परस्पराबाहनं यत्तद्वैनीतकमस्त्रियाम् ॥
(१५४) आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ।
(१५६) नियन्ता प्राजिता यन्ता सूता क्षत्ता च सारथिः ॥
सव्येष्ठृदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः ।
(१५७) रथिनः स्यन्दनारोहा (१५८) अश्वारोहास्तु सादिनः ॥

---

यतोऽधश्चक्रं तद्दारु अनुकर्षः। अनुकर्षति अच् ॥१५१

अनसः शकटसम्बन्धिनो युगात् योऽपरो युगो वत्सानां स्कन्धे दमयितुमासज्यते स प्रासङ्गः। प्राङ्पूर्व्वात् सञ्जेर्घञ् ॥१५२

सर्व्वं हस्त्यश्वादिवाहनं यानादिचतुष्कवाच्यम्। उह्यतेऽनेन युट्। युज्यते युग्यं पत्रमिति निपातः। पतत्यनेन ष्ट्रन्। धोऋृ गतिचातुर्य्ये युट् ॥१५३

यन्न साक्षाद्वाहनं तद्वैनीतकम्। पाल्की चौपाल इत्यादि ख्यातम्। विनीतशब्दादण् कः स्वार्थे ॥१५४

आधोरेति। चतुष्कं माहुत इति ख्याते। आधोरयन्ति नन्द्यादिः। हस्तिनं पान्ति, कः स्वार्थे। हस्तिनमारोहन्ति निषादयन्ति हस्तिन-मुपवेशयन्ति ग्रहादिः, सदेरप्रतेरिति षत्वम् ॥१५५

नीति। अष्टौ रथकुटुम्बिनः सारथेः संज्ञा। नियच्छत्याश्वन्। अज क्षेपणे अज गतावित्यस्य वा तृच्। सूङः क्तः। क्षदेः सौत्रात् तृच्। सर्त्ते रथिण्। सव्ये तिष्ठति पृषोदरादित्वात् साधुः। "सूतः क्षत्ता नियन्ता च यन्ता सव्येष्ठ इत्यपि" इत्यमरमालायामदन्तश्च। "प्राजिता दक्षिणस्थश्च सादी सारथिरुच्यते" इत्यमरदत्तः ॥१५६

रथीति। द्वयं रथारोहे ॥१५७

अश्वेति। द्वयमश्वारोहे। सादी ग्रहादिः ॥१५८

(१५९) भटा योधाश्च योद्धारः (१६०) सेनारक्षास्तु सैनिकाः।
(१६१) सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते ॥
(१६२) बलिनो ये सहस्रेण साहस्रान्ते सहस्रिणः।
(१६३) परिधिस्थः परिचरः (१६४) सेनानीर्वाहिनीपतिः ॥
(१६५) कञ्चुकी वारवाणोऽस्त्री (१६६) यत्तु मध्ये सकञ्चुकाः।
बध्नन्ति तत् सारसनाऽधिकाङ्गे-
(१६७) चाऽथ शीर्षकम् ॥

---

भेति। त्रयं योद्धरि। भटन्ति युध्यन्तेऽच्। युध्यन्ते तृच् ॥१५९

सेनेति। द्वयं सेनारक्षके, प्रहरिकादौ च। सेनां रक्षन्तीतीकण् ॥१६०

सैन्या इति। द्वयं सोनायां ये समवेता आगत्य एकत्रीभूता हस्त्यश्वादयस्तत्र। सेनायां समवैतीति यणिकणौ ॥१६१

सेति। द्वयं ये सहस्रसंख्येन गजादिना बलिनः सैन्यवन्तस्ते साहस्राः सहस्रिणश्च कथ्यन्ते इत्यन्वयः ॥१६२

परीति। द्वयं युद्धे परप्रहारादिभ्यो रथरक्षके। सेनायां राज्ञो दण्डनायके इत्यन्ये। परिधौ तिष्ठति परिचरति ॥१६३

सेनेति। द्वयं सेनापतौ ॥१६४

केति। द्वयं चुलीति ख्याते। कचि गतौ शङ्क्वादित्वात् कुः। वारयतीत्यच्। वाणानां वारो राजदन्तादिः ॥१६५

सकञ्चुका इति। दृढ़ार्थं हृदयमध्ये यद्बध्नन्ति उपवस्त्रं तत्र सेति द्वयम्। "भवेत् सारसनं काञ्च्यामुपवस्त्रे निगद्यत" इति दन्त्यादावजयः। अधिकाङ्गं सारसनमित्यमरमालायामाचार्यपाठादधिकाङ्गं ह्रस्वादि ॥१६६

शीति। त्रयं शिरस्त्रवस्त्रे ( टोप ) इति ख्याते। शीर्षस्य हिते कण्यौ। शिरस्त्रायते कः ॥१६७

[ बध्नन्ति तत्सारसनमधिकाङ्गं चाथ शीर्षकम् । ]

शीर्षण्यञ्च शिरस्त्रेऽथ (१६८) तनुत्रं वर्म्म दंशनम् ।

उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् ॥

(१६९) आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् ।

(१७०) सान्नद्धो वर्म्मितः सज्जो दंशितो व्यूढकङ्कटः ॥

त्रिष्वामुक्तादयो (१७१) वर्म्मभृतां कावचिकं गणे ।

(१७२) पदाति-पत्ति-पद्ग-पादातिक-पदाजयः ॥

पद्गश्च पदिक-(१७३) श्चाऽथ पादातं पत्तिसंहतिः ।

(१७४) शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः ॥

---

तनुमिति। सप्त सन्नाहे। आंगाजिरा इति ख्याते तनुं त्रायते कः। व्रियते कः। व्रियते तदिति मन्। दश्यते व्रियते युट्। उरश्छाद्यतेऽनेनेति घः, चादेर्व इत्यादिना ह्रस्वः। कङ्केरटन्। "जगरः कङ्कटो योगः सन्नाहः स्यादुरश्छद" इति बोपालितः। कमात्मानं वक्ति रक्षति अच् ॥१६८

आमुक्त इति। चतुष्कं परिहिताभरणादिपुरुषे ॥१६९

सन्नेति। पञ्चकं परिहिततनुत्रे पुरुषे। वर्म्मणा सन्नद्ध इनन्तात् क्तः। सज्जति अच्। व्यूढः कङ्कटो येन। आमुक्तादयस्त्रिषु ॥१७०

वर्म्मभृतां समूहे इकण् ॥१७१

पदेति। सप्त पदातौ पादाभ्यामटति पृषोदरादिः। पततीति तिः। पद्भ्यां गच्छति, पादाभ्यां गच्छतीति वा डः। पदातिरेव पदातिकः। पादाभ्यामजति इह स्वश्च। पद्भ्यां गच्छति डेकणौ। "पदातिपत्ति-पादात्तिपादातिकपदाजय" इत्यमरमाला ॥१७२

पेति। द्वयं पदातिसमूहे। पत्तीनां समूहेऽण् ॥१७३

शस्त्रेति। चतुष्कं शस्त्राजीवे। धानुकी टालीति ख्याते। शस्त्रमाजीवोऽस्य। काण्डः स्पृष्टोऽनेन, काण्डः पृष्ठेऽस्येति ठान्तः कापि। आयुधेन जीवति ईयेकणौ ॥१७४

(१७५) कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत् ।
(१७६) अपराद्धपृषत्कोऽसौ लक्ष्याद् यश्च्युतसायकः ॥
(१७७) धन्वी धनुष्मान् धनुष्को निषङ्ग्यस्त्री धनुर्द्धरः ।
(१७८) स्यात् काण्डवांस्तु काण्डीरः
(१७९) शाक्तीकः शक्तिहेतिकः ॥
(१८०) याष्टीक-पारश्वधिकौ यष्टी-परशुहेतिकौ ।
(१८१) नैस्त्रिंशिकोऽसिहेतिः स्यात्
(१८२) समौ प्रासिकौन्तिकौ ॥
(१८३) चर्म्मी फलकपाणिः स्यात् पताकी वैजयन्तिकः ।

---

कृतेति । त्रयं सुशिक्षितशरमोक्षिपुरुषे । कृतोऽभ्यस्तो हस्तः पुङ्खश्च येन । सुप्रयोगो विशिखोऽस्य ॥१७५

लक्ष्याद्वेध्यादपराद्धः पृषत्कोऽस्य ॥१७६

धन्वीति । षट् धनुर्द्धरे । धनुःसमानार्थधनुशब्दादित्, वत्वं संज्ञात्वात् धनुर्विद्यतेऽस्य मन्तुः । धनुषा प्रहरति इकण्, ऋवर्णो-वर्णोसुस्तान्तदोर्भ्य इतिकणादिलोपः । निषङ्ग इषुधिस्तद्योगादिन् । स्याच्चापायुधयोरस्त्रमिति रभसः । अस्त्रयोगादिन् । धनुर्द्धरति धृञः प्रहरणे इत्यादिनाऽच् ॥१७७

केति । द्वयं तिरन्दाज इति ख्याते । काण्ड एव यस्यास्त्रमित्यु-पाधिभेदाद्धनुर्द्धराद्भिन्नः । काण्डयोगाद्वान्त्वीरचौ ॥१७८

शक्त्यादयो हेतिः प्रहरणं येषां ते शाक्तीकादयः । शाक्तीक-याष्टीकाविति इकणि इकारलोपो नास्त्यनभिधानात् ॥१७६-१८०

नैस्त्रिंशः खड्गः प्रहरणमस्येति इकण् ॥१८१

प्रेति । द्वयं कुन्तायुधपुरुषे ॥१८२

चर्म्म स्यात् फलकत्वचोरिति रुद्रः, चर्म्मी ढालीति ख्याते । पेति द्वयं पताकाधारिणि । वैजयन्ती पताका तद्योगादिकण् ॥१८३

(१८४) अनुप्लवः सहायश्चानुचरोऽभिचरः समाः ॥

(१८५) पुरोगाग्रेसर-प्रष्ठागतःसरपुरःसराः ।

पुरोगमः पुरोगामी (१८६) मन्दगामी तु मन्थरः ॥

(१८७) जङ्घालोऽतिजवस्तुल्यौ (१८८) जङ्घाकरिकजाङ्घिकौ ॥

(१८९) तरस्वी त्वरितो वेगी प्रजवी जवनो जवः ॥

(१९०) जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके ।

(१९१) जैत्रस्तु जेता (१९२) यो गच्छत्यलं विद्विषतः प्रति ॥

सोऽभ्यमित्र्योऽभ्यमित्रोऽप्यभ्यमित्रीण इत्यपि ।

---

अन्विति । चतुष्कं सहायमात्रे । अनुश्चापन् प्लवते, सह अयते, सर्व्वत्राच् ॥१८४

पुरोगेति । सप्तकम् अग्रगे । प्रतिष्ठते डः प्रष्ठोऽग्रग इति षत्वम् । पुरोऽग्रतोऽग्रेष्विति सर्त्तेरच् ॥१८५

मेति । द्वयं मन्दगामिनि । मन्थ विलोडनेऽरन् ॥१८६

जेति । द्वयमतिवेगवति । प्रशस्तजङ्घायोगाल्लाच् । अतिशयितो जवो वेगोऽस्य ॥१८७

जेति । द्वयं जङ्घाजीविनि धावके । जंघैव करो यस्य जंघया जीवतीतीकण् ॥१८८

मरेति । षड्वेगवति ॥१८९

जय्य इत्यादि । जेतुमवश्यं शक्यो जय्यः । क्षय्य-जय्यो शक्य इति निपातनात् साधु । जेय इत्यादि । शक्यार्थादन्यत्र योग्यतामात्रेण जयनीयो जेयः ॥१९०

जैत्र इति । द्वयं जेतृमात्रे । जयतेस्तृजन्तात् स्वार्थेऽण् ॥१९१

अभ्येति । त्रयं विपक्षाभिमुखमत्यन्तगन्तरि । अमित्रस्याभिमुखं याति य-ईय-ईन-प्रत्ययाः ॥१९२

# प्रणव-पारिजातः

( संस्कृत-मासिकपत्रम् )

त्रयोदशवर्षम् , द्वादशसंख्या ] [ श्रावणमासः १८६२ शकाब्दः ]

## काशीमाहात्म्य

निबन्धकः—श्रीमहेशचन्द्र सांख्यतीर्थः

( पूर्वतोऽनुवृत्तम् )

॥ चतुर्थोऽध्यायः ॥

महालक्ष्म्या अवलोकनेन तस्य मुनेः काशीविरहजः सन्तापः विनष्टो जातः। यस्या नामोच्चारणेन मानवो महत् पदं प्राप्नोति लक्ष्म्या तां लक्ष्मीं दृष्ट्वा स मुनिः कृतकृत्योऽभवत्। स भार्य्यामाह—हे कान्ते! अतीव रमणीयं शिवलिङ्गमयं श्रीशैलशिखरम् अवलोक्य प्रदक्षिणं कुरु।

बलदेवः—किञ्चिद् विज्ञातुकामोऽस्मि।

गुरुः—निःशङ्कं ब्रूहि।

बलदेवः—श्रीशैलो मुक्तिदश्चेत् किमर्थं काशीष्यते ?

गुरुः—इह जगति बहूनि भौमतीर्थानि मानसतीर्थानि च सन्ति। प्रयागो नैमिषारण्यं कुरुक्षेत्रं गङ्गाद्वारं अयोध्या मथुरा माया काशी काञ्ची अवन्तिका द्वारकेत्यादीनि भौमतीर्थानि।

सत्यं, क्षमा, दया, सारल्यं, दानं, दमः, शमः, सन्तोषः, ब्रह्मचर्य्यं, धृतिः, ज्ञानं, मनःशुद्धिरित्यादीनि मानसतीर्थानि। येषां मानसमलो विद्यते ते सर्व्वतीर्थेष्वपि स्नातो न शुद्धिमाप्नुवन्ति।

शङ्करः—कश्च मानसो मलः ? किं वा चित्तस्य नैर्म्मल्यम् ?

गुरुः—विषयेष्वतिसंरागो मानसमल उच्यते।

तेष्वेव हि विरागश्च नैर्म्मल्यं समुदाहृतम् ॥

शिष्यः—तीर्थस्य पवित्रतायां किं प्रमाणम् ?

गुरुः—प्रभावादद्भुताद् भूमेः सलिलस्य च तेजसः।
परिग्रहान्मुनीनाञ्च तीर्थानां पुण्यता स्मृता ॥
इति काशीमाहात्म्ये चतुर्थोऽध्यायः।

* * *

॥ पञ्चमोऽध्यायः ॥

बलदेवः—तीर्थयात्राकृत्यानि उपदिशतु।

गुरुः—तीर्थयात्रिकः पूर्वदिवसे कृतैकभक्तः तदुत्तरदिने मुण्डनं कृत्वा उपोष्य यथाशक्ति गणेशं ग्रहान् इष्टदेवताञ्च सम्पूज्य कृतवृद्धिश्राद्धः ब्राह्मणान् भोजयेत्। ततः शुभलग्ने यात्रां कुर्य्यात्। तीर्थं गत्वा स्नात्वा स्नानाङ्गं तर्पणं तीर्थप्राप्तिनिमित्तकम् अर्घ्यावाहनवर्जितं पार्वणश्राद्धञ्च कुर्य्यात्। पापिनां तीर्थगमने पापस्य क्षयो भवेत्। श्रद्धावतां यथोक्तं फलं स्यात्। यः परार्थं गच्छति, स षोड़शांशं फलं लभते। प्रसङ्गेन तीर्थं गच्छतः अर्द्धंफलं भवति। तीर्थं गत्वापि मुण्डनं करणीयम्।

अधुना प्रकृतमनुसरामः—

यद्यपि—

काशी काञ्ची च मायाख्या त्वयोध्याद्वारवत्यपि।
मथुरावन्तिका चैताः सप्तपुर्य्यस्तु मोक्षदाः ॥

श्रीशैलकेदारप्रयागादीनि च तीर्थानि मुक्तिप्रदानि, तथापि यथा विमुक्ते काशीक्षेत्रे मोक्षस्तथा नान्यत्र, अन्यानि मुक्तिक्षेत्राणि काशीप्राप्तिकराणि। अन्यत्र मुक्तिक्षेत्रे प्राणान् परित्यज्य परस्मिन् जन्मनि काश्यां देहत्यागेन मुक्तिं लभते।

अत्र शिवशर्म्म-विष्णुगणसंवादम् आगामिनि अनध्यायदिवसे वक्ष्यामि।

इति काशीमाहात्म्ये पञ्चमोऽध्यायः।

—:०:—

## पञ्चानन-पञ्चकम्

निबन्धकः—श्रीक्षितिनाथ आचार्य्यः

१। कल्याणं जगतां करोति सततं कामस्वरूपो हि सः
पुंसे भक्तिजुषे ददाति सकलं ज्ञानञ्च शश्वद् यशः।
धत्ते चाभयपाणिपद्मयुगलं मन्दस्मितैर्भूषितो
वन्दे तं बुधसेवितं पशुपतिं ज्योतिर्म्मयधूर्ज्जटिम् ॥

२। कैलासे वसतिं करोति निरतं भूत्या सदा राजिता
गौरीचारुमुखैः कटाक्षपतनैरापीयमानश्च वा।
सर्वैर्देवगणैरचिन्त्यमहिमा लोकेशबीजञ्च यो
वन्दे तं शिवदायिनं सहगणं सौम्यं शिवं भूतिदम् ॥

३। संस्तूतो मुनिभिः पिनाकधनुषा देदीप्यते दिक्षु यो
हासैर्यस्य दिशो भवन्ति धवलाः शुभ्रैः समन्तात् सृतैः।
नास्त्यं नः प्रददाति यस्य प्रथितं क्षेमं सदा ताण्डवम्
वन्दे तं स्मरमारकं त्रिनयनं शक्त्या तपस्याजया ॥

४। वेदान्तेषु बुधा यमेकपुरुषं व्याचक्षते चानिशं
व्याप्येदं सुविशालविश्वमखिलं संतिष्ठते यश्चिरम्।
कर्त्ता सृष्टिविनाशयोरपिभुवां व्याघ्राजिनैरावृतो
वन्दे शैवलिनी-कृतार्जुनजटं सर्पावतंसं शिवम् ॥

५। पार्वत्या वदनाम्बुजस्तनभरेसम्भोगभावालसो
नित्यं मस्तकचारुचन्द्रकिरणैः प्रोद्भापते यः परम्।
सर्वाभीष्टफलप्रदायिनमहं वन्दे प्रसन्नाकृतिं
तं स्थाणुं स्थिरभक्तियोगसुलभं भक्त्या शिवायानिशम्।

## बृहदारण्यकोपनिषद्मितभाष्यम्

निबन्धकः—श्रीचारुकृष्णदर्शनाचार्य्यः

( पूर्वतोऽनुवृत्तम् )

॥ श्रुतिः ॥

आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यात्, अथ प्रजायेय, अथ वित्तं मे स्यात्, अथ कर्म्म कुर्व्वीयेति। एतावान् वै कामः, नेच्छंश्च नातो भूयो विन्देत्, तस्मादपि एतर्हि एकाकी कामयते जाया मे स्यात् अथ प्रजायेय, अथ वित्तं मे स्यात् अथ कर्म्म कुर्व्वीयेति। स यावदपि एतेषामेकैकं न प्राप्नोति अकृत्स्न एव तावन्मन्यते, तस्यो कृत्स्नता मन एवास्य आत्मा, वाग् जाया प्राणः प्रजा चक्षुर्मानुषं वित्तं, चक्षुषा हि तद् विन्दते, श्रोत्रं दैवं, श्रोत्रेण हि तच्छृणोति, आत्मैवास्य कर्म्म, आत्मना हि कर्म्म करोति। स एष पाङ्क्तो यज्ञः, पाङ्क्तः पशुः, पाङ्क्तः पुरुषः, पाङ्क्तमिदं सर्व्वं यदिदं किञ्च, तदिदं सर्व्वमाप्नोति य एवं वेद ॥१७ इति चतुर्थं ब्राह्मणम् ॥ ४ ॥

बन्धहेतूनां कर्म्मणां कथं मोक्षहेतुत्वमुक्तमिति शङ्कायां शिष्याणां श्रद्धावृद्धये नचिकेतोपाख्यानादिवत् उपाख्यानमुखेनोत्तरमाह आत्मैवेदमिति सदेव सौम्येदमग्र आसीदितिवत् इदं पुरःस्थितं जगत् अग्रे सृष्टेः पूर्व्वम् आत्मैवासीत् नान्यः प्रधानपरमाण्वादिः, सचात्मा एक एवासीन्न पत्नीपुत्रादिसहितः, तस्य प्रकृतोपयोगिप्रवृत्तिमाह सोऽकामयतेति स आत्माऽकामयत ऐषीत् जाया मे स्यादिति, अथानन्तरं प्रजायेय पुत्ररूपेणाहं जन्म लभेयेत्यर्थः। तथाच पुत्रप्राप्त्युपायत्वादेव जाया कामना, न भोगसम्पत्त्यर्थमित्यर्थः। पुत्रकामना च कर्म्माधिकारलाभार्थमेव न गौरवार्थम्। "जातपुत्रः कृष्णकेशोऽग्नीनादधीते"ति श्रुतेः ततः कर्म्मसाधनवित्तकामनामाह अथानन्तरं वित्तं मे स्यादिति अकामयत, वित्तसाध्यसुस्वादुभोज्यपेयकौषेयवासः सुरम्यहर्म्यारामादिव्यावृत्तये ब्रूते कर्म्म कुर्व्वीयेति। कर्म्म चात्र नित्यमग्निहोत्रादि नैमित्तिकं च ग्रहण-

श्राद्धपुत्रेष्टियागाद्येव, न तु देवलोकसाधनाश्वमेधादि वाणिज्यादि वा, तर्हि परत्र मे स्वर्गादिः स्यादिह च राज्यादि स्यादिति एवोपस्थितायां फलकामनायां प्रतिषेधति एतावानिति, एतत् साधनविषयपर्य्यन्त एव कामः कर्त्तव्यो मुमुक्षुणा न तु राज्यस्वर्गादिफलविषयस्तेषां बन्धहेतुत्वादित्याशयः। तथाच कर्म्ममात्रं न बन्धहेतुः किन्तु फलकामयुक्तमेवेति प्राप्तम्। तदुक्तं भगवता—

"तस्मादशक्तं सततं कार्य्यं कर्म्म समाचर।
असक्तो ह्याचरन् कर्म्म परमाप्नोति पूरुषः॥" इति
"यत् सांख्यैः प्राप्यते स्थानं तद् योगैरपि गम्यते।
एकं सांख्यं च योगं च यः पश्यति स पश्यती"ति च॥

तथाच सन्न्यासिप्राप्यमेव स्थानं ब्रह्मलोकाख्यं भगवद्धाम योगैः कर्म्मभिरपि प्राप्यते निष्कामेण कर्म्मणेत्यर्थः। कर्म्मणैव निष्कामेण ज्ञानसमुच्चितेन पूर्व्वोक्तेनात्मदर्शनात् मोक्षप्राप्तेर्न बन्धकत्वशङ्का कार्य्येत्यर्थः। तदत्र कर्म्मफलकामप्रपञ्चप्रचारः कर्म्मद्विषां दुराकृत प्रसूत एव। तस्मात् श्रौतस्मार्त्तकर्म्माधिकारार्थमेवात्र जायापुत्रयोः कामना "सपत्नीको धर्म्ममाचरेत्" जातपुत्रः कृष्णकेशोऽग्नीनादधीतेति स्मृतिश्रुतिभ्याम्।

तर्हि स्वर्गादेः कामसत्त्वे किं न लभ्यते कर्म्मणा? तदाह नेच्छंश्चेति, जायाद्यतिरिक्तं स्वर्गादिकमिच्छंश्च अतो जायादिभ्योभूयोऽधिकं फलं राज्यस्वर्गादिकमिच्छंश्च न लभेतेति न लभेतैवेत्यर्थः। दार्ढ्यार्थं नञ्द्वयं, सर्व्वकामदुःखत्वात् कर्म्मणां शास्त्रीयाणाम्। उक्तंचाधस्तात् "अस्माद्ध्येवात्मनो यद् यत् कामयते तत्तत् सृजते" "एको बहूनां यो विदधाति कामान्" "अन्नादो वसुदानं" लभते च ततः कामान् मयैव विहितान् हितान्" "कामपूरो ह्यहं नृणाम्" इति श्रुतिस्मृतिभ्याम्। तस्मादिति प्राक् सृष्टेरात्मनो जायादि कामनादर्शनात् एतर्हि इदानीमपि कश्चिदेकाकीसन् जायादि कामयते कर्म्मण्यधिकारप्राप्तये इत्यर्थः। जायादेरेकैकस्याप्यलाभे स्वस्यापूर्णत्वं स्यात्

तन्माभूदिति तदपनेतुं युक्तं कर्म्मान्तं सर्व्वं निर्व्वर्त्तयितुम्। तथाच सर्व्वेषामेव लोकानां स्वस्य पूर्णत्वप्राप्तयेऽपि जायादिकामना कर्त्तव्या। तच्च निष्काममेव कार्य्यमुक्तप्रकारेण स्वस्या संसारबन्धापनुत्यैधीमस्तिरिति प्राप्तम्।

कथञ्चिदप्राप्तौ च तस्यापि वाचनिकं कृत्स्नत्वं सम्पादयन्ननुक्रोशति वेद एव तस्योक्तकृत्स्नतेति, उ इति अप्यर्थे, तस्याप्येकं कृत्स्नता स्यादित्यर्थः। देहेन्द्रियसङ्घाते मनस एव प्राधान्या तस्यात्मत्वमित्यर्थः। तदधीनत्वाच्च वाचो जायत्वं वाङ्मनसाभ्यां प्राणक्रियोत्पत्तेः प्राणस्य पुत्रत्वम्, लौकिकविषयदर्शनसाधनत्वात् चाक्षुषो वित्तत्वं, श्रोत्रेण च यज्ञीयालौकिकदेवताज्ञानोत्पत्तेः श्रोत्रस्य देववित्तत्वमित्यर्थं शरीरस्य कर्म्मनिर्व्वाहकत्वात् तस्य कर्म्मत्वम् उपचारः। पाङ्क्तत्वं च पञ्चभिर्निष्पादितत्वं तदेवं पशोर्यज्ञस्यापि पाङ्क्तत्वप्रतिपादनात् स्वस्य पूर्णत्वसम्पादनार्थं कर्त्तव्यमवश्यमेव कर्म्मेत्यभिप्रायः श्रुतेरिति ज्ञेयम्॥

नच फलैषणाऽर्थप्राप्ता तस्या एव प्राधान्याद् वक्तुं युक्तत्वात्, "एषणा हि फलविषया प्रसिद्धैवेति" "सर्व्वा हि साधनेच्छा फलेच्छैव" या वित्तैषणा सा लोकैषणा फलार्थैव सा, सर्व्वः फलार्थप्रयुक्त एव सर्व्वं साधनमुपादत्ते" इत्युपरिष्टात् स्वयमेवोक्तेः। फलस्यैव प्राधान्यात् तद्धेतुत्वादेव कर्म्मणः काम्यत्वं न जायापुत्रादिप्राप्तिहेतुत्वात् जायाः पुत्रादेः कर्म्माधिकारमात्रप्रयोजकत्वात् साधारणत्वात्। अतो वित्तस्य साक्षात् फलं भक्ष्याच्छाद्यमानराज्यादि हित्वा कर्म्म कुर्व्वीयेत्युक्तम्। न वा इति दूरस्थमनुष्यलोकादेः कथञ्चित् फलत्वं काम्यम्।

तस्मान्निष्कामकर्म्मभिर्मोक्षप्राप्तिप्रतिपादनपरमेवेदं प्रकरणं न सकामकर्म्मप्रतिपादनपरमिति प्रागुक्तस्यैव सहायभूतम्। "यज्ञेन दानेन तपसाऽनाशकेनेति श्रुतेः।

"यज्ञो दानं तपश्चैव न त्याज्यं कार्य्यमेव च।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्।
एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च।

कर्त्तव्याणीति मे पार्थ निश्चितं मतमुत्तम ॥" इति
"ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्म्मयोगेन चापरे ॥"

इति स्मृतेश्च । सन्न्यासिनां ध्यानवत् गृहस्थानां कर्म्मणैव चित्तस्य वैशद्यात् ज्ञानोदयाङ्कदत्तं कृच्छ्रतमेन कर्म्मसन्न्यासेन । क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसामि"त्युक्तेरिति दिक् । अतोऽस्य कृच्छ्रात् कथञ्चित् कल्पनाजालैरपव्याख्यया सकामकर्म्मपरत्वप्रयासख्यापनपरेषां दुर्विजृम्भित एव । १७

—:०:—

## ईश्वरः

निबन्धकः—श्रीभूपतिभूषण भट्टाचार्य्य काव्य-व्याकरणतीर्थः

अहो ! सुरम्या विपुला धरित्री
सेव्यास्ति सा नः खलु रक्षयित्री ।
कथं प्रदात्री पृथिवी वसूनां
यस्माद्विना नान्यगतिर्नराणाम् ॥१

तुषारशुभ्राः शिखराः सुतुङ्गाः
सिंहादयः सन्ति मृगा विहङ्गाः ।
नक्षत्रमाला परिवेष्टितो ग्लौ-
स्तमोऽपसारं प्रकरोति रात्रौ ॥२

कस्येङ्गितेन स्व-करं प्रसार्य्य
विभाति पूर्वे समुदीय-सूर्य्यः ।
मन्दः सुशीतः पवनः किमर्थं
तापं विनश्य प्रददाति सौख्यम् ॥३

सन्तापमग्नावनिले च घोरं

नभस्यसीमं वद कस्य दानम् ।

कस्यैव हेतोर्मृदि वृक्षशस्यं
भातीव तद्राक् प्रकृतेः सुहास्यम् ॥४

गुल्मादि-वृक्षः फल-पुष्प-शोभी
विराजतेऽत्राखिल-चित्त-लोभी ।
पुष्पेषु गन्धा ननु केन दत्ता
नीलयालयस्तत्र वसन्ति मत्ताः ॥५

फलानि वृक्षेषु कथं फलन्ति
प्रास्वाद्य सर्वे सुखिनो भवन्ति ।
कथं रसाः सन्ति फलेषु षड्वै
सुखंनिपीयन्त इहैव जीवैः ॥६

षण्णामृतूनां कथमत्र सृष्टि-
र्भवेन्निदाघात्-परमेव वृष्टिः ।
अहो ! विचित्रा रचना विशेषा
जीवेषु भेदाः पुरुषाश्च योषाः ॥७

सुनिर्मितं केन जगद्विशालं
प्रदाय जीवे दृढ़मोहजालम् ।
कालो नु केन प्रणियन्त्रितः स्यात्
कथं विनाशः परमत्र जातात् ॥८

कारुण्य-वर्षा-पतनाच्च कस्य
भूमण्डलेऽस्मिन् वसतिर्नरस्य ।
प्रश्नमयैप क्रियतेऽसमात्र
शक्नोसि चेत्त्वं वद भोः सुपुत्र ! ॥९

स ईश्वरो नाम महामहीयान्

संरक्षति द्राक् सकलांश्च जीवान् ।

सृष्टस्त्रिकालं जगदीश्वरेण
विवर्त्तते तत् सततं क्रमेण ॥१०

घूर्णायमानस्य भवस्य कर्त्ता
सर्वस्वदातापि च संप्रहर्त्ता ।
स पारयत्यत्र समस्त-कार्य्यं
निर्वाद-कार्य्यं विनिहन्ति नित्यम् ॥११

जलस्थलाकाशमयः स एव
चैतन्यरूपी बहुदेहिजीवः ।
सूक्ष्मातिसूक्ष्मः महतामनन्तः
दृश्यः प्रकृत्यां चिरबुद्धमुक्तः ॥१२

पुष्णाति सर्वांश्च यदादरेण
सर्वे तदा सन्ति महासुखेन ।
यदा भवेत्तस्य दयाविकाशः
सर्वैस्तदात्र क्रियते निवासः ॥१३

स एव नित्यः सुकृतं कृपावान्
क्षेमङ्करोऽसौ हरतीह विघ्नान् ।
सन्तीह जीवा यदनुग्रहेण
तस्य स्मरामो नतमस्तकेन ॥१४

एतादृशाय स्वहृदिस्थिताय
सदा नमामो जनमङ्गलाय ।
मूढ़ोऽपि भक्त्या रचति स्म नम्रः
स्मृत्वा गुरून् भूपति-नाम विप्रः ॥१५

—:०:—

# वेदा: वेदाङ्गानि च

निबन्धकः—श्रीनीरदवरण भट्टाचार्य्य वि. ए. अनार्स, काव्यतीर्थः

"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च"

ननु कोऽसौ वेदो नाम यमार्याः पदे पदे उच्चारयन्ति, मन्दिरे मन्दिरे बोधयन्ति, वादे वादे सिद्धान्तयन्ति, वैयाकरणा "निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चे'ति रटन्ति, कान्यकुब्जा गौड़ा मैथिलाः सर्वे खलु औदीच्या दाक्षिणात्याश्च 'वेदा एव नः शरणम्' इति गृणन्ति ?

वेदाः खल्वस्माकं परमं पवित्रञ्च वाङ्मयम्। उद्धव-माधव-सायण प्रभृतयस्तत्रभवन्तो भाष्यकाराः 'विद्' ज्ञाने, 'विद्' सत्तायाम्, 'विद्लृ' लाभे, वेद' विचारणे इति ये धातवः पठितास्ततः 'हलश्च' इति घञ् प्रत्यये कृते विदन्ति जानन्ति, विद्यन्ते भवन्ति, विन्दन्ति विन्दन्ते लभन्ते, विन्दन्ते विचारयन्ति येन यत्र वा स वेदः इति प्राहुः।

वेदः खलु परब्रह्मणो निःश्वासरूपम्, यदुक्तं भगवता याज्ञवल्क्येन—"एतस्य वा अरे महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः"।

[ शतपथे १४-५-४-१० ]

वेदशब्दनिर्वचनं कृष्णयजुर्वेदीयभाष्यभूमिकायां सायणाचार्येणेत्थमकारि—"वेद्यन्ते ज्ञाप्यन्ते धर्मादिपुरुषार्थचतुष्टयोपाया येन स वेदः" इति। "प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते, एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता"। भगवान् मनुरपि प्राह—भूतं भवद् भविष्यच्च सर्वं वेदात् प्रसिध्यति"। श्रीमद्भगवद्गीतायामपि भगवता श्रीकृष्णेन समीरितम् "कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्"।

एतेन सुस्पष्टं प्रतीयते—कियद् गौरवमयं स्थानं वेदस्यास्ति भारतीयानां हृदये! ज्ञानस्वरूपो [illegible] वेद इत्युच्यते। सोऽयं परम्परया प्राप्तश्च। संसारे सर्वतः प्राचीनमत्यन्तमुपयोगि च

साहित्यं वेदः। संसारे सर्वेषु साहित्येषु भारतीयसाहित्यं श्रेष्ठं महनीयमुदात्तञ्च। तत्र प्रधानं कारणं केवलं वेदसाहित्यमेव। आर्याणां सभ्यता-संस्कृति-धर्म-रीति-नीति-प्रभृतीन् विषयान् समवगन्तुं प्रमुखं साधनं वेदसाहित्यमेव। धर्मव्यवस्था, क्रमेणोन्मीलिता ऐतिहासिकी व्यवस्था च, मूलं स्वरूपञ्चार्यभाषाया वेदसाहित्यादेव ज्ञातुं शक्यते।

एवम् भारतीयानां कृते वेदाः प्राणप्रतिष्ठां कुर्वन्ति, विश्वस्य अन्यासां जातीनां च कृते अधिकतरामुपादेयतां प्रकटयन्ति। विण्टर-नित्समहोदयः ( Winternitz ) कथयति—"यो हि असमर्थो वेद-साहित्यबोधे, नासौ भारतीयां संस्कृतिं वेत्तुं समर्थोऽस्ति। समग्रं बौद्धसाहित्यमपि वेदसाहित्यस्यैका धाराऽस्ति। यदि वयं स्वामेव संस्कृतिं तस्याः प्रागवस्थाञ्च जिज्ञासामहे, यदि वा वयं सर्वप्राचीनां भारोपीयां (Indo European) संस्कृतं विविदिषामः तर्हि भारतशरण-ग्रहणमेव अनिवार्यं यत्र भारोपीयाया जातेर्बृहत् सर्वप्राचीनञ्च साहित्यं सुरक्षितं वरीवर्त्ति।"

सोऽयं प्रथितो वेदभागो द्विधा—संहितारूपो ब्राह्मणरूपश्च। मन्त्राणां समुदायात्मको भागः संहिता, व्याख्यानात्मको भागश्च ब्राह्मणग्रन्थः।

वेदविशेषस्य स्तुतौ उपयुक्तो योऽर्थो भावश्च तदुद्बोधसमर्थानि वाक्यानि मन्त्रपदेन प्रोच्यन्ते। एतेषां मन्त्राणां समुच्चय एव संहिता। इयं संहिता पुनश्चतुर्विधा—ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः। यज्ञस्य कर्तव्यतामावश्यकताञ्च हृदि निधाय इदं सङ्कलनं कृतमस्ति।

ब्राह्मणरूपो वेदभागो हि यागस्वरूप-बोधकतया प्रथितः। ब्राह्मणग्रन्थोऽपि त्रिधा विभक्तो भवति—ब्राह्मणम् आरण्यकम्, उपनिषच्च। यज्ञस्वरूपप्रतिपादको ब्राह्मणभागः। अरण्ये पठिता यज्ञस्याध्यात्मिकं रूपं विवेचयन्तो वेदभागा आरण्यकानि। उपनिषदो ब्रह्मबोधिका मोक्षसाधकानि, अयमेव भागो वेदस्यान्तरूपतया वेदान्त इत्युच्यते। ब्राह्मणग्रन्था गृहस्थानां कृते, आरण्यकग्रन्था वानप्रस्थानां कृते आसन्निति

सम्यगनुमीयते। उपनिषदस्तु परा विद्याः, अतएव ता ब्रह्मविद्या इत्युच्यन्ते।

वेदवाचो नित्याः सिद्धाः समीचीना विचित्रपदाश्च, आर्याः स्वतःप्रमाणरूपा इत्यङ्गीकुर्वन्ति। वेदानामानुपूर्वी खलु नित्या। 'अग्निमीड़े पुरोहितम्', 'प्रति त्यं चारुमध्वरम्', 'चित्रं देवानामुदगाद-नीकम्', 'शन्नो देवीरभिष्टये, इषे त्वोर्जे त्वा' इति कृत्वा तत्र भवन्तो वेदमन्त्राः प्रकृताः प्रवृत्ताश्च, नेतः पदात् पदमपि विचालयितुं शक्यते। इयमेव वेदानां वेदता यत्ते नित्येषु कूटस्थेषु अविचालिषु भावेषु वर्त्तन्ते। यदि कोऽपि श्रद्धया तपसा ब्रह्मचर्येण शान्तो दान्त एकान्ते एकमपि मन्त्रं साक्षात्कुरुते स ऋषिपदभाग् भवति। वेदा खलु ऋषितः, देवतायाः, स्वरतः, कालतः, छन्दस्तः तथा निबद्धाः पिनद्धाश्च सन्ति यथा नात्र कश्चन एकमक्षरमपि हीनं कर्तुं वर्द्धयितुं वा समर्थोऽस्ति। प्रतिमन्त्रं तत्र तिलेषु तैलमिव, दध्नि घृतमिव परं ब्रह्मसन्निहितं वर्त्तते यज्ज्ञात्वा जना अशुभात् आत्मानं मोचयन्ति, शुभे च मनो निवेशयन्ति।

सोऽयं वेदः षडङ्गाध्ययनपूर्वकमध्येयः। तत्र शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषञ्चेति वेदस्य षडङ्गानि। एवं साधन-भूतधर्मज्ञानहेतुत्वात्-षडङ्ग सहितानां कर्म्मकाण्डानामपरविद्यात्वम्, परमपुरुषार्थभूतब्रह्मज्ञानहेतुत्वाद् उपनिषदां परविद्यात्वमिति सायणः।

शिक्षा— शिक्षा नाम उदात्तानुदात्तस्वरितप्रचयाख्यस्वर-लोपागमवर्णविकारप्रकृतिभावादिसंस्कारभेदभिन्नवर्णसमुदायात्मकपदपरि-पाटीक्रमेण वेदशिक्षणप्रकारवान् याज्ञवल्क्यादिमहर्षिकृतो ग्रन्थविशेषः। अर्थात् तच्छास्त्रं शिक्षा नाम येन वेदमन्त्राणामुच्चारणं शुद्धं सम्पाद्यते। वेदे स्वरस्य प्राधान्यं सर्वविदितं वर्त्तते, स्वरज्ञानञ्च शिक्षायत्तम्। अत एवेदं शिक्षाशास्त्रं वेदाङ्गं, षडङ्गेषु च तस्य प्राथम्यं सर्ववादिसम्मतम्। मानवशरीरे यथैव नासिकायाः प्राधान्यं तथैव वेदेषु शिक्षाया स्तदुक्तं "शिक्षा घ्राणं तु वेदस्य" इति। "वर्णस्वराद्युच्चारणप्रकारो यत्र उपदिश्यते सा

शिक्षा। शिक्ष्यन्ते वेदनायोपदिश्यन्ते स्वरवर्णादयो यत्रासौ शिक्षा" इति सायणः। शिक्षाशास्त्रप्रयोजनमुक्तं तैत्तिरीयोपनिषदि—"शिक्षां व्याख्यास्यामः। वर्णः, स्वरः, मात्रा, बलं, साम, सन्तान इत्युक्तः शिक्षाध्यायः"। तत्र वर्णोऽकारादिः, स्वर उदात्तादिः—"उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः" (पा. शि. ११), मात्रा ह्रस्वादिः, बलं स्थानप्रयत्नौ, साम निषादादि, सन्तानो विकर्षणादिः। एतदवबोधनमेव शिक्षायाः प्रधानं प्रयोजनम्। शिक्षायाः प्रारम्भे स्वरवर्णादीनां शुद्धिरत्यावश्यकीति प्रतिपादितम्। स्वरवर्णादिविहीनो मन्त्रः स्वार्थमवबोधयितुमक्षमः शुद्धपाठकः स्वाभीष्टान् प्राप्नोति, तद्विपरीतोऽशुद्धपाठकः अनिष्टान्। तथा चोक्तं शिक्षायाम्—

"मन्त्रो हीनः स्वरतो वर्णतो वा, मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोऽपराधात्।" "इन्द्रशत्रुर्वर्धस्व" (तै. सं २।४।१२।१) इति मन्त्रे इन्द्रस्य शत्रुः घातकः इति विवक्षितेऽर्थे तत्पुरुषसमासे 'समासस्य' (पा. ६।१।२२३) इति सूत्रेण तत्पुरुषत्वात् अन्तोदात्तत्वेन भवितव्यम्। आद्युदात्तस्तु प्रयुक्तः, तथा सति पूर्वपदप्रकृतिस्वरत्वेन बहुव्रीहित्वात् इन्द्रो घातको यस्य इत्यर्थः जायते। तस्मात् स्वर-वर्णाद्यपराधपरिहाराय शिक्षाग्रन्थोऽध्येयः।

सम्प्रति त्रिंशत्संख्यकाः शिक्षाग्रन्थाः समुपलभ्यन्ते। तेषु याज्ञवल्क्य शिक्षा, कात्यायनीशिक्षा, पाराशरीशिक्षा, अमोघानन्दिनी शिक्षा, नारदीयशिक्षा, शौनकीयशिक्षा, गौतमीशिक्षा, माण्डूकीशिक्षा, पाणिनीया शिक्षा च मुख्याः। पाणिनीया शिक्षा हि सर्वतोऽधिकं प्रथते।

वैदिकस्वरसमीक्षणावसरे कोऽयं स्वरः, किंवा तस्य वेदार्थविचारे तात्पर्यमेतत् समस्तं सम्यक् विज्ञातव्यम्। तच्च शिक्षाग्रन्थे विस्तरेण समुपवर्णितम्। अतः स्वरशिक्षाकाले शिक्षाग्रन्थो यत्नतोऽध्येयो ज्ञेयश्च।

<u>कल्पः</u>— कल्प्यते समर्थ्यते यागप्रयोगोऽत्र इति कल्पः। आश्वलायनापस्तम्बबौधायनादिसूत्रग्रन्थविशेषः। ब्राह्मणकाले यागस्य तावान् प्रचारो जातो यत्तेषां यथावज्ज्ञानाय पूर्वपरिचयप्रदायकग्रन्था-

नामावश्यकतानुभूयते स्म, तामेव आवश्यकतां स्वल्पेन शब्देन पूरयितुं कल्पसूत्राणि विरचितानि। कल्पसूत्राणि द्विविधानि—श्रौतसूत्राणि स्मार्तसूत्राणि च। श्रुत्युक्तयागविधिप्रकाशकानि श्रौतसूत्राणि। स्मार्तसूत्राणि पुनर्द्विविधानि—गृह्यसूत्राणि धर्मसूत्राणि च। श्रौतसूत्रेषु अग्नित्रयाधानम्, अग्निहोत्रम्, दर्शपूर्णमासौ, पशुयागः, नानाविधाः सोमयागाश्चेति विषयाः समुपबृंहिताः। गृह्यसूत्रेषु तेषामेवानुष्ठानाचारयागानां वर्णनं विद्यते येषां सम्पादनं त्रैवर्णिकैरवश्यं कर्त्तव्यम्। षोडश संस्काराणां सविशेषं वर्णनमपि गृह्यसूत्रेषु दृश्यते। धर्मसूत्रेषु धार्मिकनियमाः, प्रजानां राज्ञाञ्च कर्त्तव्यचयाः चत्वारो वर्णाः, चत्वार आश्रमाः तेषाञ्च धर्माः सम्यक्तयोपपादिताः। शुल्वसूत्रमपि कल्पसूत्रमेव। तच्च श्रौतसूत्रान्तर्गतम्। शुल्वं मापक्रिया। इदं सूत्रमेव भारतीयज्यामितिशास्त्रस्य बीजम्। पाश्चात्त्यैः 'पिथागोरस्' प्रभृतिभिरिदं ज्यामितिशास्त्रं प्रणीतमिति ये कथयन्ति ते शुल्वसूत्रं समीक्ष्य दृढ़ीकुर्वन्तु यदिदं ज्यामितिशास्त्रं भारतीयैरेव पाश्चात्यज्यामितिशास्त्रोत्पत्तेर्बहुदिवसात् प्रागेव प्रकटीकृतमिति।

<u>व्याकरणम्</u>— तत्र भवन्तो वैयाकरणा व्याकरणप्रयोजननिर्देशवेलायाम्—"रक्षार्थं वेदानामध्येयं व्याकरणम्। न च सर्वैर्लिङ्गैर्न सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः। ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः। तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम्। तस्मादध्येयं व्याकरणम्।" वेदरक्षाप्रतिपादनार्थमेव व्याकरणशास्त्रस्य प्रवृत्तिरिति। व्याकरणं हि प्रकृतिप्रत्ययाद्युपदेशेन पदस्वरूपतदर्थनिश्चयायोपयुज्यते इति सायणः। रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति वररुचिः। भारते व्यकरणशास्त्रं यथा प्रवृद्धं सविज्ञानं सरहस्यम् अद्भुतं प्रतिभायाः परां कोटिमवगाहते न तथाविधं व्याकरणविषये शास्त्रं कस्याञ्चन जातेः भाषासु दृश्यते। महर्षिपाणिनेरष्टाध्यायी, कात्यायनस्य वार्त्तिकं, भाष्यकारस्य पतञ्जलेर्महाभाष्यञ्चेति त्रिमुनिव्याकरणं सुप्रसिद्धम्। व्याकरणान्यष्टौ—

"प्रथमं प्रोच्यते ब्राह्मं द्वितीयमैन्द्रमुच्यते।
याम्यं प्रोक्तं ततो रौद्रं वायव्यं वारुणं तथा ॥
सावित्रञ्च तथा प्रोक्तमष्टमं वैष्णवं तथा॥"

( भविष्यपुराणे ब्राह्मपर्वे )

लघुःत्रिमुनिकल्पतरुकृतस्तु नव व्याकरणानि स्मरन्ति

"ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्॥"

सर्वेष्वपि व्याकरणेषु लौकिकवैदिकोभयविधशब्दसाधकतया पाणिनीय-व्याकरणस्यैव प्राधान्यम्। अतएव पाणिन्युपज्ञं व्याकरणं सर्वथा प्रसिद्धेः परां कोटिं टीकते। व्याकरणशास्त्रविषये पाश्चात्त्यविद्वरेण्यानां 'म्याकडोनेल्' (Macdonell) महोदयानामुक्तिरपि स्मरणीया—

"The Sanskrit grammarians of India were the first to analyse wordforms, to recognise the difference between the root and the suffix, to determine the function of suffixes and on the whole to elaborate a grammatical system so accurate and complete as to be unparalleled in any other country."

<u>निरुक्तम्</u>— निरुच्यते निःशेषेणोपदिश्यते निर्वचनविधया तत्त-दर्थबोधनाय पदजातं यत्र तन्निरुक्तम्। "अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तमि"ति सायणः। यद्यपि निर्वचनमुखेन पदानामर्था-वगमो व्याकरणेनापि भवति तथापि निरुक्तव्याकरणयोर्मध्ये महान् भेदोऽस्ति। व्याकरणं हि शब्दानुशासनम्, निरुक्तं खलु अर्थानुशासनम्। "तस्मात् स्वतन्त्रमेवेदं विद्यास्थानम् अर्थनिर्वचनम्, व्याकरणं तु लक्षणप्रधानम्" ( नि. दुर्ग—१।१५ )। अस्मादेव व्युत्पत्तिदिशा 'देव' शब्दे यद्यपि केवलं 'दिव्' धातुरेव विद्यते तथापि अर्थवैचित्र्यवशतो यास्काचार्येणोक्तम्—"देवो दानाद् वा, दीपनाद् वा, द्योतनाद् वा, द्युस्थानो भवतीति वा" ( निरुक्तम्—७।१५ )। एवमेव यद्यपि निरुक्त-

व्याकरणयोर्मध्ये सुमहान् भेदो विद्यते तथापि यदा शब्दार्थौ परस्परं संपृक्तौ तदा व्याकरणेन सह निरुक्तस्य सम्पर्कोऽपि घनिष्ठः ! किन्तु पदानां व्याकरणं विश्लेषणं वा बहिरङ्गो व्यापारः. अर्थबोधस्तु अन्तरङ्गो व्यापारः। अस्मादेव वेदार्थनिरूपणवेलायां निरुक्तं हि व्याकरणस्य सम्पूरकम्, तस्य अधिकारोऽपि विस्तृततरो भवतीति। तदुक्तं यास्केन— "अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते, अर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशः, तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थ-साधकञ्च।" ( निरुक्तम्—१।१५ )

अत्रेदं समवधेयं यत् शिक्षया वर्णोच्चारणप्रकारे व्याकरणेन च पदसाधुत्वे ज्ञाते मन्त्रघटकपदानामर्थज्ञानाकाङ्क्षायां मन्त्रघटकार्थज्ञानाय भगवता यास्केन निरुक्तं प्रणीतम्। तच्च पञ्चविधम्—

"वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥"

—इति भर्तृहरिः।

वेदागतकठिनशब्दसंग्रहरूपो निघण्टु—ग्रन्थश्चिरादागच्छति स्म, तत्रैव यास्केन तद्व्याख्यारूपं निरुक्तं प्रणीतम्। निघण्टवो वेदा एव, न तु वेदाङ्गानि। तद्व्याख्यारूपं यास्कप्रणीतं निरुक्तमेव वेदाङ्गमित्यवधेयम्।

निघण्टुस्तथा निरुक्तमेकस्यैव रचनेति मन्यते बहुभिः। ( Cf, विष्णुपद भट्टाचार्य—Yaska's Nirukta (1958) Sec III )

<u>छन्दः</u>— शिक्षया सह स्वाभाविकभावेन युक्तमपरमेकं वेदाङ्गं खलु छन्दो नाम ! ऋक्संहितायास्तथाथर्वसंहितायाः प्रायशः सर्वे एव मन्त्राः छन्दोबद्धाः। गद्येन विरचितो यजुर्वेदोऽपि छन्दोबद्धतया परिगण्यते। तस्मात् छन्दसां ज्ञानमन्तरेण वेदमन्त्राः सुष्ठूच्चारयितुं न शक्यन्ते। अस्मात् छन्दोऽपि वेदाङ्गमवश्यं ज्ञेयञ्च।

—( क्रमशः )

प्रजग्ध्य। जन-खन-सनामिति। प्रजाय प्रजन्य। अन्तरङ्गत्वात् प्राग् जग्धौ प्राप्ते ऽपि निमित्तापायाद् यबग्रहणं तेन जहातेर्हिरित्यादयो न स्युः। विहाय॥

६१। दामोदरादेरीरामो न यपि क्विपि च।

विधाय निपाय। निपीयेति पीङो रूपम्। मिनाति मिनोतीत्यादि प्रमाय निमाय। दामोदरादेः किम्? विलाय विलीय निलीय। अजेर्वीत्यादि. उदज्य उद्वीय। णेर्हरः— विचार्य्य॥

---

तज्जातिवद्भावः सर्व्वत्रैव वर्णानां तद्व्यक्तिवद्भावो यत्र संस्पृशते, तत्रैवेत्युक्तत्वात् कृद्बाहुल्याच्च त्वादेशस्य यपः क्वचित् स्थानिवद्भावः क्वचिन्नेत्यभिप्रायः तस्मात् आगत्येत्यादौ यपं स्थानिवत्त्वं विहायेत्यादौ नेति भावः। आरामपक्षे प्रजायेति, आरामाभावपक्षे प्रजन्येति। प्रजत्येति पाठः क्वचिद् दृश्यते स त्वपपाठ एव। ननु विहायेत्यत्र जहातेः स्थाने हिः कथं न स्यादिति चेत्तत्राह अन्तरङ्गत्वादिति। प्रकृत्याश्रितत्वादन्तरङ्गत्वं निमित्तापायादिति नैमित्तिकस्याप्यपायः स्यादिति शेषः। अतः अदो जग्धिः कपिल-तरामे यपि चेत्यस्मिन् सूत्रे यबग्रहणं कृतमिति शेषः। न स्युरिति प्रयोजनाभावादिति शेषः॥

६१। दामो। यपि क्विपि च परे दामोदरादेरन्तस्य ईरामो न भवति। दामोदर-मा-स्था-गा-पिबतीत्यादिना प्राप्ते निषेधः। विधायेति डु धाञ् धारणपोषणयोः। निमित्तापाये नैमित्तिकस्याप्यपायः स्यादिति न दधातेर्हिः। निपायेति पा पाने। पीङ् इति पाङ पाने दिवादिः। मिनातीति अनेन आरामान्तपाठः। प्रमायेति मीङ् हिंसायाम्। निमायेति डु मिञ् प्रक्षेपणे। विलायेति लीङ् श्लेषणे। लीयति-लीनात्योर्वेति आरामान्तपाठः पक्षे विलीयेति। निमायेत्यनन्तरं दामोदरादेरिति किमिति क्वचिद्दृश्यते तत्तु न संगच्छत इति ज्ञेयं मेतीत्यनेन मा-माङोर्ग्रहणत्वात्। दामोदर-मा-स्था-गा-पिबतीत्यादिसूत्रस्य। विलायेति प्रत्युदाहरणमिति तु कश्चिदाचष्टे यन्नोचितम्। सूत्रे दामोदरादेरिति पाठस्यानुक्तत्वात् आख्यातप्रकरण एव प्रत्युदाहरणस्योक्तत्वाच्च। अजेर्वीत्यादीति। अजेर्वी घणं विना रामधातुके बले तु वा वति चेति सूत्रम्। उदज्येति अज गतौ क्षेपणे च पक्षे उद्वीयेति। णेर्हर इति णेर्हरोऽनिडादौ रामधातुके इत्यनेनेति शेषः। विचार्य्येति चर-धातोः त्वा॥

६२। लघुपूर्व्वात् परस्य णेरय् यपि, आप्नोतेर्वा।

विगणय्य, प्रणमय्य, प्रापय्य प्राप्य। परिबृढ़माचष्टे इति विगृह्य बृढ़शब्दादेव णिः क्रियते। संग्राम युद्धे इति चुरादिपाठात्तस्मादेव सोपेन्द्राण्णेरुत्पत्तिः। ततश्च परिशब्दस्य क्त्वान्तेन पश्चात् समासात् परिब्रढ़य्येति सिद्धम्। परेर्धातुत्वाभावात् पर्य्यब्रढ़यदित्यादि च। संग्रामयतेस्तु असंग्रामयत्। लघुपूर्व्वात् किं संप्रधाप्य निगूह्य॥

---

६२। लघु। यपि परे लघुपूर्व्वाद्धातोः परस्य णेः स्थाने अय् भवति। आप्नो। आप्नोतेरुत्तरस्य णेः स्थाने अय् वा भवति। विगणय्येति गण संख्याने अदन्तश्चुरादिणिः अरामहरः। अन्तहरे न गोविन्दवृष्णीन्द्राविति वृष्णीन्द्रनिषेधः क्त्वा क्त्वो यप् णेरय्। प्रणमय्येति नम प्रह्वत्वे शब्दे च प्रेरणे णिः वृष्णीन्द्रः घटादित्वाद्वामनः क्त्वा क्त्वो यप् णेरय्। प्रापय्येति आप्लृव्याप्तौ प्रेरणे णिः। परिबृढ़मिति विगृह्येति वाक्यं कृत्वेत्यर्थः। अथवा परिबृढ़माचष्टे इति इत्यत्र वाक्ये विगृह्य परिविगृह्य परिभागं कृत्वेति बृढ़शब्दादिति पारिशेष्यात् बृढ़शब्दादेवेति न तु परिबृढ़शब्दादित्यर्थः। णिः क्रियत इति मुण्डमिश्रेत्यादिनेति शेषः। परिबृढ़शब्दाण्णिर्न भवति इति युक्त्या साधयति। संग्राम युद्ध इतीति इत्यस्येत्यर्थः। तस्मादेव सोपेन्द्रादिति नान्यस्मात् सोपेन्द्रादित्यर्थ। क्त्वान्तेनेति ब्रढ़यित्वेत्यनेनेत्यर्थः। परिब्रढ़य्येति णौ कृते अनेन सर्व्वेश्वरस्य संसारहर इति संसारहरः पृथमृद्रादेः ऋरामस्य रश्चेति ऋरामस्य रः क्त्वा। क्त्वान्तेन समासात् क्त्वो यप् परिबृढ़शब्दाण्णौ सति समासाभावात् क्त्वो यप् न स्यादिति भावः। परिबृढ़य्येति पाठो बहुषु पुस्तकेषु दृश्यते; किन्तु स लिपिकारप्रमादकृतः रविधानस्यापरिहार्य्यत्वात्। परेरिति परेर्धातुत्वाभावात् परेः प्राक् नादागमः, किन्तु परत एव पर्य्यब्रढ़यदिति ण्यन्ताद्भूतेश्वरादिप्। इत्यादि चेति सिद्धमिति शेषः। असंग्रामयदिति सोपेन्द्रस्यैव धातुत्वात् उपेन्द्रात् पूर्व्वमदागमः। सम्प्रधाप्येति डु धाञ् धारणपोषणयोः पुक् क्त्वा क्त्वो यप् णेर्हरः लघुपूर्व्वत्वाभावान्न अयः। निगूह्येति गूह संवरणे णिः अर्त्तीयादिना णिः गोविन्दः। गोह ओ ऊ सर्व्वेश्वरे इति ओरामस्य ऊरामः क्त्वा क्त्वो यप् णेर्हरः॥

९३। क्षियस्त्रिविक्रमो मयतेरिरामो वा यपि।

प्रक्षीय प्रक्षित्य, अपमित्य अपमाय ॥

९४। वेञ्-व्येञ्-ज्यानां न सङ्कर्षणो यपि, परिसंख्यां व्येञो वा।

प्रवाय प्रव्याय, प्रज्याय परिव्याय। नित्यत्वात् तुकं बाधित्वा श्या-श्वि-व्या-ज्येति त्रिविक्रमः। परिवीय संव्याय संवीय ॥

९५। क्त्वार्थे णमुश्चाभीक्ष्ण्ये।

णमुल् इति पाणिनिः। आभीक्ष्ण्यं पौनःपुन्यम् ॥

९६। आभीक्ष्ण्ये वीप्सादिषु च द्वित्वं वाच्यं।

स्मारं स्मारं कृष्णं नमति। घटादीनामित्यादौ णिपूर्व्वयोर्णमुविष्णोस्तु त्रिविक्रमो वा। गमं गमं गामं गामं वा। लभेर्णुमित्यादि।

---

९३। क्षियः। यपि परे क्षि क्षये इत्यस्य त्रिविक्रमो वा भवति। अस्मिन्नेव परे मेङ् प्रतीदान इत्यस्यान्तस्य इरामो वा भवति। सूत्रे इराम इत्यत्र इरामश्चेति वा पाठः ॥

९४। वेञ्। यपि परे वेञादीनां सङ्कर्षणो न भवति। परि। यपि परे परिसंख्यामुत्तरस्य व्येञः सङ्कर्षणो वा भवति। प्रवायेति वेञ् तन्तुसन्ताने। प्रव्यायेति व्येञ् संवरणे वचिस्वपीत्यादिना सङ्कर्षणे प्राप्ते निषेधः। प्रज्यायेति ज्या वयोहानौ ग्रहि-ज्येति सङ्कर्षणे प्राप्ते निषेधः। त्रिविक्रम इति श्याश्विव्याज्याद्यां सङ्कर्षणस्य त्रिविक्रम इत्यनेनेति शेषः ॥

९५। क्त्वार्थे। आभीक्ष्ण्यविशिष्टेऽर्थे वर्त्तमानाद्धातोरुत्तरे क्त्वार्थे णमुश्च भवति। आभीक्ष्ण्यलक्षणमाह आभीक्ष्ण्यं पौनःपुन्यम् इति ॥

९६। आभी। आभीक्ष्ण्येति वाच्यमिति वक्ष्यत इत्यर्थः। स्मारं स्मारमिति स्मृ-चिन्तायां अन्तस्य वृष्णीन्द्रः नृसिंहे इति वृष्णीन्द्रः। आभीक्ष्ण्य-वीप्सयोरित्यनेन द्विरुक्तिः पुनः पुनः स्मृत्वेत्यर्थः। गमं गममिति गमॢ गतौ णिः वृष्णीन्द्रः ण्यन्तात् णुमः घटादित्वाद्धामनः णेर्हरः द्विरुक्तिः। त्रिविक्रमपक्षे गामं गाममिति। लभेरिति लभेर्णुम् णम्विष्णोर्वा सोपेन्द्रस्य तु नित्यमिति सूत्रम्। लम्भं लम्भमिति डु लभष प्राप्तौ णुम्। णुमाभावपक्षे लाभं लाभमिति।

लम्भं लम्भं लाभं लाभं, प्रलम्भं प्रलम्भं, भोजं भोजं, पायम् पायम्। पक्षे, स्मृत्वा स्मृत्वेत्यादि ॥

६७। अपाद् गुरो गार वा णमौ।

अपगारम् अपगारम् अपगोरम् अपगोरम् वा मुहुरुद्यम्येत्यर्थः॥

६८। कृतसूत्राद्यं सप्तम्यन्तं पूर्व्वपदम्।

उपपदं प्राच्चः। परिभाषेयम्॥

६९। अमन्त-स्वाद्वर्थे णमुरमश्च न महाहरः।

स्वादुङ्कारं हरयेऽर्पयति, एवं मिष्टङ्कारं लवणङ्कारम्। स्वादुशब्दस्तु त्रिविक्रमो नेष्यतेऽत्र। स्वादूकृत्य यवागूं भुङ्क्ते॥

---

सोपेन्द्रस्य तु नित्यमिति प्रलम्भं प्रलम्भमित्येव। भोजं भोजमिति भुजपालनाभ्यवहारयोः। पायं पायमिति पा पाने आतो युगिणि नृसिंहकृति चेति युक्। णमुर्थेत्युक्तमतमाह पक्षे स्मृत्वा स्मृत्वा इत्यादीति॥

६७। अपा। णमु परे अपादुत्तरस्य गुरोः स्थाने गार वा भवति। अपगोरं अपगोरमिति गुरी उद्यमे। मुहुरिति पुनः पुनरित्यर्थः। पूर्व्वपद वक्ष्यते इत्युक्तं तदेवाह॥

६८। कृत। कृतसूत्राणामादिस्थितं सप्तम्यन्तं पदं पूर्व्वपदमुच्यते॥

६९। अमन्त। अमन्यस्वाद्वर्थे पूर्व्वपदे सति धातोरुत्तरे णमुर्भवति; अमश्च महाहरो न भवति। स्वादुङ्कारमिति पूर्व्वपदन्त्वमन्तमेवाव्ययकृदन्तेनेति समासः। अमो महाहरनिषेधात् अन्तरङ्गेत्यादिना नेह महाहरः। स्वाद्वर्थ इत्युक्तम् अत आह। एवं मिष्टङ्कारम् लवणङ्कार इति लवणशब्दोऽपि स्वाद्वर्थः। स्वादुशब्दस्त्विति त्रिविक्रमो नेष्यते इति णम विधान इति शेषः। त्रिविक्रमस्त्रिविक्रमान्तः। स्वादूकृत्येति अस्वादुं स्वादुं कृत्वेत्यर्थे अभूततद्भावे कृभ्वस्तियोगे च्विरिति। च्विः सर्व्व इ। अन्त्यस्य त्रिविक्रम इत्यनेन त्रिविक्रमः च्व्यन्तस्य त्वान्तेन समासः त्वो यप् त्रिविक्रमान्तत्वादत्र णमुर्न भवति। अत्र कश्चित् स्वादुं कृत्वेति प्रत्युदाहरणं दृश्यते किन्तु, च्व्यन्तस्यैव [illegible] समासो भवतीत्येतत्र निष्यतीति ज्ञेयम्। त्रिविक्रमान्तत्वादेव स्वाद्वीं कृत्वा इत्यत्रापि णमुर्न भवति॥

१००। कृतो बाहुल्यात् त्वा च।

किन्तूत्सर्गसिद्धत्वात् पूर्व्वपदं नापेक्षत इति न समासः। स्वादुं कृत्वा॥

१०१। अभूततद्भावे पुंवच्च।

अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते स्वादुङ्कारम्॥

१०२। अग्रे प्रथमं पूर्व्वं-सु त्वा-णमू।

कृष्णं अग्रे नत्वा अग्रे नामं वा व्रजति। एवं प्रथमं पूर्व्वम्। अत्राग्रे नत्वेत्यत्र पूर्व्वपदन्त्वमन्तमेवेति नियमान्न समासः। प्रथममित्यादिशब्दौ मान्ताव्ययरूपत्वादमो-महाहरः। इति नामन्तौ॥

---

१००। कृतो। व्यक्तार्थमेतत्। क्त्वा चेत्यत्र णमुं बाधित्वा त्वा चेति शेषः, किन्त्विति उत्सर्गसिद्धत्वात् सामान्यसिद्धत्वात्। नापेक्षत इति त्वाप्रत्यय इति शेषः। स्वादुं कृत्वेत्यसमस्तम्। अत्र यपो बाधकः त्वा इत्यभिप्रेत्य स्वादुं कृत्वेति केचिदुदाहरन्ति, तत्तु न संगच्छते णमुप्रकरणत्वात्॥

१०१। अभू। अमन्तस्वाद्वर्थे पूर्व्वपदे सति अभूततद्भावेऽर्थे त्वास्थाने णमुर्भवति अमो महाहरश्च न भवति; स्त्री चेत् पुंवच्च भवति। अस्वाद्वीं स्वाद्वीमिति ऊरामान्तगुणवचनात् खरु-सत्सङ्गोद्ववजाद्वेति ईप्। स्वादुङ्कारमिति पूर्व्वपदामित्यादिना समासः॥

१०२। अग्रे। अग्रे पूर्व्वं प्रथमं पूर्व्वंसु पूर्व्वपदेषु सत्सु धातोरुत्तरे त्वार्थे त्वाणमू भवतः। अग्रे नत्वेति अग्रे नाममिति चासमस्तम्। एवं पूर्व्वं प्रथममिति। तदुदाहरणं यथा पूर्व्वं नत्वा पूर्व्वं नामं वा व्रजति प्रथमं नत्वा प्रथमं नामं वा व्रजतीति पूर्व्वं नत्वेत्यादिकञ्चासमस्तम्। सर्व्वत्र समासाभावं नियमबलेन साधयति अत्रेति। अग्रे इति सप्तम्यन्तम्, अतः अमन्तत्वाभावान्न समासः। प्रथममित्यादिशब्दावित्यत्र पूर्व्वमित्यादिशब्दाविति ज्ञेयम्। पूर्व्वमित्यस्य प्रथमोक्तत्वात्। अमो महाहर इति अव्ययात् स्वादेर्महाहरः इति अव्ययात् स्वादेर्महाहर इत्यनेनेति शेषः। इति नामन्ताविति तस्मादमन्तत्वाभावादत्रापि [illegible]॥

१०३। कर्म्मणि डुकृञः खमुण्णाक्रोशे।

ख उ णा इतः, अम् शेषः ॥

१०४। सर्व्वेश्वरान्तपूर्व्वपदस्यानव्ययस्य मुम् वामनश्च खिति। उभावितौ मशेषः। उपेन्द्रोऽर्यादीत्यादिना समासः। अवैष्णवङ्कार-माक्रोशति अवैष्णवोऽसीत्युक्त्वाक्रोशतीत्यर्थः। करोतिरिहोच्चारणे ॥

१०५। णमुः।

विभुरयम् ॥

१०६। अन्यथैवं कथमित्थसु डुकृञस्तत्तन्मात्रार्थे।

हरिमन्यथाकारमर्च्चयति अन्यथार्च्चयतीत्यर्थः। एवङ्कार-मित्यादि। कृञोऽर्थे तु। विधिमन्यथा कृत्वा हरिमर्च्चयति।

---

१०३। कर्म्मणि। कर्म्मणि पूर्व्वपदे सति आक्रोशे गम्यमाने डुकृञ उत्तरे खमुण् भवति। ख उ णा इत इति अम् शेष इति शेषः ॥

१०४। सर्व्वे। खिति परेऽनव्ययस्य सर्व्वेश्वरान्तपूर्व्वपदस्य मुम् भवति वामनश्च भवति। मुम एकवर्णत्वाभावादन्तेन प्रवर्त्तत इतीह ज्ञेयं, किन्तु मित्करणादन्तसर्व्वेश्वरात् प्रवर्त्तते। उभावितौ इति मरामशेषः। अवैष्णव-ङ्कारमिति। अन्तस्य वृष्णीन्द्रो नृसिंहे इति वृष्णीन्द्रः। अवैष्णवोऽसीत्युक्त्वेति फलितार्थकथनम् अवैष्णवमुक्त्वेति अक्षरार्थः। ननु अवैष्णवङ्कारमित्यस्य अवैष्णवोऽसीत्युक्त्वेत्यर्थः कथं भवत्विति चेत्तत्राह करोतीति। वामनोदा-हरणमग्रे वक्ष्यते ॥

१०५। णमु। सुगमम् ॥

१०६। अन्य। अन्यथैवं कथमित्थंसु पूर्व्वपदेषु सत्सु तत्तन्मात्रार्थे वर्त्तमानात् डु कृञ उत्तरे णमुर्भवति। तत्तन्मात्रार्थ इति अन्यथादीनामेवार्थ इत्यर्थः। एतेन कृञो गतार्थत्वमुक्तम्। एवं एवङ्कारमित्यादीत्येव पाठः। विधिमिति विधिशास्त्रोक्तक्रमम्। अत्र कृञोऽर्थो वर्त्तते, अतो णमुर्न भवति ॥

१०७। यथा-तथयोर्ड्कृञोऽसूयाप्रतिवचने।

यथाकारं तथाकारमर्च्चयतु किं तवानेन। तत्तन्मात्रार्थ एव। विधिं यथाकृत्वाऽयमर्च्चयतु किं तवात्र॥

१०८। कर्म्मणि।

प्रभुरयम्॥

१०९। दृशि-विदिभ्यां साकल्ये।

---

१०७। यथा। असूयया प्रतिवचनं असूयाप्रतिवचनं तस्मिन् गम्यमाने यथातथयोः पूर्व्वपदयोः सतोर्ड्कृञ उत्तरे णमुर्भवति। प्रतिवचनं प्रत्युत्तरम्। अयं कथमर्च्चयति इति केनापि कश्चिद्दृष्टः सन् असूयया प्रतिवक्ति। यथाकारमिति। यथाकारं तथाकारमर्च्चयत्विति यथा तथा अर्च्चयत्वित्यर्थः। विधिमिति अत्र कृञोऽर्थो विद्यते; अतो न णमुः। असूयाप्रतिवचन इति किम्। कथमयं भुङ्क्ते इति प्रश्ने प्रतिवक्ति यथा कृत्वा भोक्ष्यते तथा द्रक्ष्यसीति स्वरूपाख्यानमेतत्॥

१०८। कर्म्मणि। सुगमम्॥

१०९। दृशि। साकल्येऽर्थे गम्यमाने कर्म्मणि पूर्व्वपदे सति दृशिविदिभ्यामुत्तरे णमुर्भवति। वैष्णवदर्शमिति पूर्व्वपदन्त्वमन्तमित्यादिना समासः। नन्वर्थकथने यावतो वैष्णवानित्यादिना शसन्तनिर्द्देशात् पूर्व्वपदन्त्वमन्तमित्यनेन कथं समास इति चेत् केनाप्युच्यते तदेवं समाधेयम्। वैष्णवमित्यादौ वैष्णवपदस्य जातिपुरस्कारेणैकवचनत्वं तस्मादेकत्वेऽपि बहुबोधकत्वात् अर्थदर्शनाय शसन्तस्यादोषः समासस्याप्यविरोधः। अथवा तत्र अमन्तपदं कर्म्मोपलक्षणम्। अत्र कर्म्मणीत्यधिकारात् अर्थकथने बहुवचनान्तदर्शनाच्च नहि कर्म्मणीत्युक्ते केवलामन्तं प्राप्नोतीति सर्व्वं समञ्जसमिति। अमन्तमित्युपलक्षणमिति वक्ष्यते च स्वयमेव ग्रन्थकृता। वेत्ति विन्दति विन्ते वेत्यनेन विद् ज्ञाने विद्लृ लाभे विद विचारे त्रयाणामेव ग्रहणमिति सूचितम्। सामान्यग्रहणेऽपि विद् सत्तायामित्यस्य न ग्रहणं तस्याकर्म्मकत्वेन कर्म्मोपपदत्वाभावात्

वैष्णवदर्शं प्रणमति, वैष्णववेदं भोजयति, यावतो वैष्णवान् पश्यति वेत्ति विन्दति विन्ते वा तावत इति सर्व्वानेवेत्यर्थः ॥

११०। यावति विन्दलजीवाभ्याम्।

यावद्वेदं भुङ्क्ते तत्र नाग्रहं करोतीत्यर्थः। यावज्जीवं हरिं भजति ॥

१११। चर्म्मोदरयोः पूरेः, वृष्टिप्रमाणे ऊलोपश्चास्य वा, वस्त्रार्थे क्नोपेः।

चर्म्मपूरं तिलान् ददाति; उदरपूरं वैष्णवान् भोजयति। गोष्पदप्रं वृष्टो देवः गोष्पदपूरं वा। वस्त्रक्नोपं चेलक्नोपं वा वृष्टः। इत उपमानपर्य्यन्तं णमन्तधातवोऽनुप्रयुज्यन्ते ॥

---

अतएव जयादित्येनोक्तं यं यं जानाति लभते विचारयति वा तं तं भोजयतीति। साकल्ये इति किं वैष्णवं दृष्ट्वा भोजयति ॥

११०। यावति। कर्म्मणि यावति पूर्व्वपदे सति विदॢ लाभे जीव प्राणधारणे इत्येताभ्यामुत्तरे णमुर्भवति। यावज्जीवमिति। अत्र यावच्छब्दस्य कालवाचित्वात् कालाध्वभावदेशानामित्यादिना कर्म्मत्वम् ॥

१११। चर्म्मो। कर्म्मणोश्चर्म्मोदरयोः पूर्व्वपदयोः सतोः पूरेरुत्तरे णमुर्भवति। पूरेरिति प्रेरणन्यन्तात् पूरि आप्यायने इत्यस्मादित्यर्थः। अण्यन्तस्याकर्म्मकत्वात्। वृष्टि। कर्म्मणि पूर्व्वपदे सति ण्यन्तात् पूरेरुत्तरे णमुर्भवति ऊलोपश्चास्य वा भवति समुदायेन चेद् वृष्टिप्रमाणमवगम्यते। वस्त्रा। वस्त्रवाचके कर्म्मणि पूर्व्वपदे सति क्नोपेरुत्तरे नमुर्भवति समुदायेन चेद् वृष्टिप्रमाणमवगम्यते। क्नोपेरिति ण्यन्तात् क्नुयि शब्दे उन्दे चेत्यस्मादित्यर्थः। चर्म्मपूरमिति पूरयित्वेत्यर्थः। एवमुदरपूरमिति। गोष्पदप्रमिति गोष्पदं पूरयित्वेत्यर्थः। गोष्पदं गोभिः सेविते गोष्पदप्रमाणे चेति समासादिप्रकरणे वक्ष्यते। वस्त्रक्नोपमिति अर्त्ति-ह्री-ब्ली-री-क्नूयीत्यादिना पुक् यलोपो गोविन्दश्च वस्त्रं क्नोपयित्वेत्यर्थ। चेलक्नोपमिति। चेलं वस्त्रम्। इत इति उपमानपर्य्यन्तमिति कर्म्मकर्त्तुपमान इति सूत्रं वक्ष्यते तत्पर्य्यन्तमित्यर्थः। धातव इति येभ्यो णमुर्विधीयते तत्र वेत्यर्थः।

(१९३) ऊर्ज्जस्वलः स्यादूर्ज्जस्वी य ऊर्ज्जातिशयान्वितः ॥
(१९४) स्यादुरस्वानुरसिलो (१९५) रथिको रथिरो रथी ।
(१९६) कामंगाम्यनुकामीनो (१९७) ह्यत्यन्तीनस्तथा भृशम् ॥
(१९८) शूरो वीरश्च विक्रान्तो (१९९) जेता जिष्णुश्च जित्वरः ।
(२००) सांयुगीनो रणे साधुः शस्त्राजीवादयस्त्रिषु ॥
(२०१) ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः ॥

---

ऊर्ज्जेति । द्वयमतिशयबलवति । ऊर्ज्जो बलं पराक्रमश्च तद्योगात् बलच्विनौ ॥१९३

उरेति । द्वयं प्रशस्तवक्षसि पुरुषे । अतिशययोगात् वदिलचौ ॥१९४

रथीति । त्रयं रथपतौ । रथयोगादिकृणिणौ । रथादिरः विभाषया लत्वं रथिरश्च । कश्चिद्वान्तोऽयमिति मन्यत'इति सुभूः ॥१९५

कामं यथेष्टं गमनशीलः स्वेच्छावृत्तिः, अव्ययेन कामं शब्देन समासः भिन्नपदं वा । अनुकामं यथेष्टं गच्छति, ईनः ॥१९६

यो भृशमत्यर्थं गामी सोऽत्यन्तीनः । तथात्यन्तगामीत्यपि ॥१९७

शूर इति । त्रयं शूरे । शूरवीर-विक्रान्तौ अच् ॥१९८

जेतेति । त्रयं जयशीले । जेतुं शीलमस्येति तृन् । जिभुवोः ष्णुक् । सृजीननशां करप् ॥१९९

संयुगे साधुः कुशल ईनण् । पूर्वोक्ताः शस्त्राजीवादयः सांयुगीनान्तास्त्रिषु ॥२००

ध्वजीति । सप्त चतुरङ्गसेनायाम् । ध्वजवाहवरूथयोगादिन् स्त्रियामीः ।" सैन्यभेदेऽपि सेनायां स्रवन्त्यामपि वाहिनी"ति रुद्रः । षिञ् बन्धने नः । पृञस्तनक् "पूतना तु हरीतक्यां दानवीरोगभेदयोः । पूतना तु स्त्रियां सेनामात्र-सेनाविशेषयो" रिति मेदिनी । पुङ्ग्यायामे इत्यस्य पृतनेति स्वामी । तेन ॠकारमध्योऽपि, तथाच —"दृश्यतामयमनो-

वरूथिनी बलं सैन्यं चक्रञ्चाऽनीकमस्त्रियाम् ॥

(२०२) व्यूहस्तु बलविन्यासो भेदा दण्डादयो युधि ।

(२०३) प्रत्यासरो व्यूहपार्ष्णिः (२०४) सैन्यपृष्ठे प्रतिग्रहः ॥

(२०५) एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका ।

(२०६) पत्त्यङ्गैस्त्रिगुणैः सर्व्वैः क्रमादाख्या यथोत्तरम् ॥

---

कहान्तरे तिग्महेतिपृतनाभिरावृतः" इति भारविः। अनीकयोगादिन। चमेरूः। बलमिति। चतुष्कं सामान्यसेनायाम्। स्वामी तु ध्वजिन्याद्यनीकान्तमेकपर्य्यायमाह। बलयति धारयति राज्यम् अल्। सेनैव सैन्यम्। अनीकं पृषोदरादि ॥२०१

युद्धार्थं चतुरङ्गबलस्य यथोक्तदेशविशेषेण विभज्य स्थापनं व्यूहः। युधि दण्डादयो व्यूहभेदाः। यथा—दण्डः क्रौञ्चो वकी गृध्रो मण्डलं चक्रकादिकम्।" तथा—"दण्डो-मण्डलभोगौ च प्रच्छन्नश्चापलोपमः। दृढो व्यूहस्तथा चैषां भेदाश्चन्द्रप्रभादयः। तिर्य्यग्वृत्तिस्तु दण्डः स्याद् भोगोऽन्वावृत्तिरेव च। मण्डलं सर्व्वतोवृत्ति पृथग्वृत्तिरसंहत॥" इति ॥२०२

प्रत्येति। द्वयं व्यूहस्य पश्चाद्भागे ॥२०३

यत्र स्थितो राजा स्वसैन्यं परिगृह्णाति स परिग्रहः। परिगृह्यते सैन्यमत्र अल्। "सर्व्वसैन्यस्य पश्चात्तु यत्र राजा स्वयं भवेत्। प्रतिग्रहसमेतश्च सदेशः स्यात् परिग्रहः"इति ॥२०४

एकेनेति। एकेन गजेन एकेन रथेन त्रिभिरश्वैः पञ्चभिः पदातिभिः पत्तिर्नाम ॥२०५

पत्त्यङ्गैः सर्व्वैर्गजादिभिर्यथोत्तरं क्रमेण सेनमुखादि संज्ञा। एतदुक्तं भवति—तिस्रः पत्तयः सेनामुखं, तैस्त्रिभिर्गुल्मः, तत्त्रयेण गणः, गणत्रिगुणा वाहिनी, तत्त्रिगुणा पृतना, तत्त्रयं चमूः। चमूत्रयमनीकिनी, दशानीकिन्योऽक्षौहिणी, अक्षस्यौत्वमूहिन्यां पूर्व्वपदस्थानत्वम्।

सेनामुखं गुल्मगणो वाहिनी पृतना चमूः ।
अनीकिनी दशानीकिन्यक्षौहिण्य-(२०७)ऽथ सम्पदि ॥
सम्पत्तिः श्रीश्च लक्ष्मीश्च (२०८)विपत्यां विपदापदौ ।
(२०९) आयुधस्तु प्रहरणं शस्त्रमस्त्र-(२१०) मथाऽस्त्रियौ ॥

---

"रन्ध्रवेदेन्दुवाणाद्यैर्हस्तिनः स्यन्दनस्तथा । तत्पञ्चत्रि गुणा पत्तिर्वाजिनोऽक्षौहिणी मते"ति । आदिपर्व्वणि यथा—"एको रथो गजश्चैको नराः पञ्चपदातयः । त्रयस्तु तुरगास्तज्ज्ञ पत्तिरित्यभिधीयते । पत्तिन्तु त्रिगुणामेतामाहुः सेनमुखं बुधाः । त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते । त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः । चमूस्तु पृतनास्तिस्रः तिस्रश्चम्वस्त्वनीकिनी । अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधाः । अक्षौहिण्यः प्रसंख्याता रथानां द्विजसत्तमाः । संख्यागणे तु तत्त्वज्ञैः सहस्राण्येकविंशतिः । शतान्युपरि चाष्टौ च तथा भूयश्च सप्ततिः । गजानाञ्च परीमाणमेतदेव विनिर्द्दिशेत् । ज्ञेयं शतसहस्रन्तु सहस्राणि नवैव तु । नराणामपि पञ्चाशच्छतानि त्रीणि चानघाः । पञ्चषष्ठिसहस्राणि तथाश्वानां शतानि च । दशोत्तराणि षट् प्राहुर्यथावदिह संख्यया । एतामक्षौहिणीं प्राहुः सर्व्वे तत्त्वविदो जनाः ॥" ॥२०६

सम्पेति । चतुष्कं सम्पत्तौ । धनाद्युत्कर्षः सम्पत्तिः सम्पदादित्वात् क्विप्, स्त्रियां क्तिः ॥२०७

वीति । त्रयं विपत्तौ । धनाद्यपकर्षो विपत्तिः ॥२०८

आयुधमिति । चतुष्कमस्त्रसामान्ये । आयुध्यतेऽनेन कः प्रह्रियतेऽनेन शसु हिंसायां असु क्षेपणे त्रन् ॥२०९

धेति । सप्त धनुषि । धन धान्ये उस् । धनुरुदन्तोऽपि—"धनुः पुमान् पियालाद्रौ राशिभेदे शवासने" इति मेदिनी "धनेर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यतीति" प्रयोगश्च । दीर्घान्तधनूशब्दस्तु स्त्रीलिङ्ग एव ।

धनुश्चापौ धन्वशरासनकोदण्डकार्म्मुकम् ।
इष्वासोऽप्य-(२११) थ कर्णस्य कालपृष्ठं शरासनम् ॥
(२१२) कपिध्वजस्य गाण्डीव-गाण्डिवौ पुंनपुंसकौ ।
(२१३) कोटिरस्याऽटनी (२१४) गोधातले ज्याघातवारणे ॥
(२१५) लस्तकस्तु धनुर्मध्यं (२१६) मौर्व्वी ज्या
शिञ्जिनी गुणः ।

---

शरासने धनूः स्त्री स्यात्तृणता त्रिणतापि चे''ति त्रिकाण्डः । चप सान्त्वने णः । धन्वादि चतुष्कं क्लीवम् । धनेः कन् । शरा अस्यन्तेऽनेन कः परेषामात्मा दण्ड्यतेऽनेन पृषोदरादि । कर्म्मणे प्रभवति उकञ् तमादित्वात् । इषुमस्यत्यण् ॥२१०

कर्णस्य शरासनं कालपृष्ठाख्यम् । कालं पृष्ठमस्य ॥२११

गाण्डीवेति । द्वयमर्ज्जुनधनुषि । गां दीव्यति । विजिगीषत्यनेन पृषोदरादिः ॥२१२

अस्य धनुषः कोटिरग्रभागोऽटनिः । अटति गुणेन अनिः । "निन्यतुः स्थलनिवेशिताटनी लीलयैव धनुषी अधिज्यताम्" इति रघुप्रयोगः ॥२१३

गोधेति । द्वयं चर्म्मादिमयज्याघातनिवारणे । गां दधाति क्विप् । अटनीसाहचर्य्यात् गोधा स्त्रीति सुभूः । तलं नपुंसकम् । "तलं स्थाने च पेटे च तलश्चाधःस्वरूपयोः । कार्य्ये वीर्य्ये प्रकोष्ठे च ज्याघातस्यैव वारण" इति त्रिकाण्डशेषः । बाह्वादित्वात् द्विवचनं । गोधे तले गोधातले द्वावपि पाठौ ॥२१४

लस्तेति । धनुषो मध्यं लस्तकः । लस्यते श्लिष्यते हस्तेन कः संज्ञात्वादनिट् कः स्वार्थे ॥२१५

मौर्व्वीति । चतुष्कं धनुर्गुणे, मूर्व्वा (तृणभेदः) विकारेऽण् । शिञ्जाऽऽवश्यके णिनिः । गुण्यन्ते अभ्यस्यन्ते शरा अनेन ॥२१६